गोस्वामिकुलकौस्तुभश्रीश्रीगोकुलनाथदेशिकचरणाः ।



मान्यो विद्वान्वदान्यः प्रकृतिमधुरवाङ्नीतिनिष्ठः क्षमावा-
ञ्छ्रीदोषाणामभूमिर्विकसितवदनश्रीर्गुणज्ञः कलावित् ।
धीरः कृष्णाङ्घ्रिसेवी परहितहृदयः सेवनीयो दयावा-
नस्मत्सर्वस्वमेवंगुणजलधिरसौ दृश्यतां गोकुलेन्दुः ॥ १ ॥

भ. र. ना. शर्मा.

॥ श्रीः ॥

पण्डितप्रकाण्डश्रीमत्पुरुषोत्तमादिगोस्वामिचरण-
विरचिता

# वादावलिः ।

श्रीमदाचार्यचरणान्ववायसुधोदधिसुधाकराणां,
विद्यानुरागिगोस्वामिभूषणश्रीव्रजरत्नलालमहाराज-
चरणानामर्थसाहाय्येन गोस्वामिकुलकौस्तुभ-
विद्वन्महाराजश्रीगोकुलनाथचरणानां
सर्वविधप्रबन्धाश्रयेण च
लब्धावतारा

**भट्टश्रीरमानाथशर्मणा शुद्धाद्वैतभूषणेन
टिप्पण्या परिष्कृत्य संशोधिता ।**

बृहन्मन्दिरपुष्टिमार्गसिद्धान्तकार्यालयात्प्रकाशिता ।

सन् १९२० ] मू० १॥) [ संवत् १९७६

॥ श्रीहरिः ॥

# इदमत्र प्राप्तकालम् ।

दुःखनिवृत्तिपूर्विका सुखप्राप्तिरिह सर्वस्यापि जीवजातस्याकाङ्क्षितेति नास्ति कस्यापि संशयः । सा च यद्यपि लौकिकैरुपायैर्मणिमन्त्रौषधिस्रक्चन्दनवनिताप्रभृतिभिः कदाचित्केनचिल्लभ्यते, तथापि नात्यन्तिकी, न च नित्या । नित्यामेव च तां वाञ्छन्ति केचिन्मनीषिणः । ततस्तदुपायं भगवन्निश्वासरूपोऽपि तद्रूपो वेद उपदिशति । यद्यपि तत्र मन्दमध्यमाधिकारिभिरसंभावनाविपरीतभावनाव्यामोहितबुद्धिभिर्यथावत्क्रमेण व्यवस्थया च फलं साधनानि च नाऽवगन्तुं शक्यन्ते, तथापि 'इतिहासपुराणाभ्यां वेदं समुपबृंहये'दित्याद्युक्तदिशा, वेदेनैव वेदत्वेनोक्तानामितिहासपुराणानां सर्वसन्देहनिरासकवाक्यैरुपबृंहितेन तत्तान्यवगन्तुं शक्यन्त एव । वेद एव च 'नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिभिर्भगवत्साक्षात्कारेण सर्वदुःखनिवृत्तिः स्यान्नान्येनोपायेनेत्युक्तम् । उपायाश्च 'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'कुर्वन्नेवेह कर्माणि' इत्यादिश्रुतिभिः, 'ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्' 'तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतये'त्यादिभिश्चोपबृंहणशास्त्रैरुच्यन्ते । अत्र श्रीसुबोधिन्यामाचार्यचरणाः साधनफलक्रममेवमुपदिशन्ति—'तच्च साक्षात्कार इति पर्यवसितम् । तत्र विचारसहितप्रमाणेन यद्यपि निर्विचिकित्सं शाब्दज्ञानं भवति

॥ श्रीहरिः ॥

# इदमत्र प्राप्तकालम् ।

दुःखनिवृत्तिपूर्विका सुखप्राप्तिरिह सर्वस्यापि जीवजातस्याकाङ्क्षितेति नास्ति कस्यापि संशयः। सा च यद्यपि लौकिकैरुपायैर्मणिमन्त्रौषधिस्रक्चन्दनवनिताप्रभृतिभिः कदाचित्केनचिल्लभ्यते, तथापि नात्यन्तिकी, न च नित्या । नित्यामेव च तां वाञ्छन्ति केचिन्मनीषिणः। ततस्तदुपायं भगवन्निश्वासरूपोऽपि तद्रूपो वेद उपदिशति । यद्यपि तत्र मन्दमध्यमाधिकारिभिरसंभावनाविपरीतभावनाव्यामोहितबुद्धिभिर्यथावत्क्रमेण व्यवस्थया च फलं साधनानि च नाऽवगन्तुं शक्यन्ते, तथापि 'इतिहासपुराणाभ्यां वेदं समुपबृंहये'दित्याद्युक्तदिशा, वेदेनैव वेदत्वेनोक्तानामितिहासपुराणानां सर्वसन्देहनिरासकवाक्यैरुपबृंहितेन तत्तान्यवगन्तुं शक्यन्त एव । वेद एव च 'नान्यः पन्था विद्यतेऽयनाये'त्यादिश्रुतिभिर्भगवत्साक्षात्कारेण सर्वदुःखनिवृत्तिः स्यान्नान्येनोपायेनेत्युक्तम् । उपायाश्च 'आत्मा वा रे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'कुर्वन्नेवेह कर्माणि' इत्यादिश्रुतिभिः, 'ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्' 'तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया । पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतिगृहीतये'त्यादिभिश्चोपबृंहणशास्त्रैरुच्यन्ते । अत्र श्रीसुबोधिन्यामाचार्यचरणाः साधनफलक्रममेवमुपदिशन्ति—'तच्च साक्षात्कार इति पर्यवसितम् । तत्र विचारसहितप्रमाणेन यद्यपि निर्विचिकित्सं शाब्दज्ञानं भवति

पुष्टि० १

तथाप्यन्तःकरणदोषान्न साक्षात्कारः सिध्यति । तदर्थं प्रथमं धर्मः । ततोऽन्तःकरणशुद्धौ वेदादिसत्प्रमाणे श्रद्धा । ततस्तदर्थस्य मननम् । ततो निदिध्यासनेन साक्षात्कार इव ज्ञानम् । ततो विषयेषु वैराग्यम् । ततः श्रवणादिसाधनभक्तिः । ततः परमभक्तिः । ततः सर्वत्र भगवत्साक्षात्कारो हृदि बहिरपीत्यर्थः' । युक्तं चैतत्—सत्यपि माहात्म्यादिगुणज्ञाने यथा यावत्स्नेहो न स्यात्तावन्न राजलोकः साक्षाद्दर्शनं ददाति तथैव भगवानपीत्येवम् ।

वेदविधिबोधितं श्रेयःसाधनं कर्मैव धर्मः । स च साधनं सुखस्य । ज्ञानसहकृतश्च मोक्षस्यापि । तदुक्तमाचार्यचरणैः—'यागश्च धर्मः कामसाधनम् । ज्ञानसहितो मोक्षसाधनश्चे'ति ।

एतदुक्तं भवति—'अग्निहोत्रं जुहुयात्स्वर्गकामः प्रजाकामः पशुकामः' 'यावज्जीवमग्निहोत्रं जुहोति' 'अथ य एतदेवंविद्वानग्निहोत्रं जुहोति' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'त्यादयो बह्व्यः श्रुतयो यागरूपं धर्ममादिशन्ति । तत्र भवति सन्देहः—श्रुतौ, कामनाशब्देन काम्य एव यागः सर्वत्र गृह्यतां, यावज्जीवशब्देन नित्यो वा एष सर्वत्र गृह्यताम् । निखिलजीवनकालवाचकेन यावज्जीवशब्देन सूचितस्य कालस्याग्निहोत्रादियागेषु पूर्वमप्राप्तत्वाद्यजति जुहोतीत्यादिशब्दैरभ्यासस्य द्योतितत्वाच्च श्रुत्या काम्ययागे स कालो विधीयते । न च सकृद्यज्ञानुष्ठानेनैव फलसिद्धौ सत्यां कालाङ्गीकारो व्यर्थ इति वाच्यम् । फलस्य काम्यवाक्येनैव सिद्धत्वे यावज्जीववाक्ये कालाऽनङ्गीकारे पुनर्विधिवैयर्थ्यात् । अतः काम्यकर्मणोऽभ्याससिद्धये यावज्जीववाक्या-

दावयं कालरूपधर्मविधिरिति, तेन च श्रुतौ काम्य एक एव यागो विधीयते न पुनर्नित्य इति पूर्वः पक्षः।

सिद्धान्तस्तु—सर्वजीवनवाचकस्य यावज्जीवशब्दस्य काललक्षकत्वमेव, न तद्वाचकत्वम्। यजतिजुहोतीत्यादिशब्दानां चाभ्यासलक्षकत्वमेव, न तद्वाचकत्वमपि। व्यर्थलक्षणा चान्याय्या। किञ्च पुरुषधर्मो हि जीवनम्। तच्च न कर्मधर्मतया विधातुं शक्यते। अतो यावज्जीवादिवाक्येषु जीवनं पुरुषधर्मं निमित्तीकृत्य प्रयोगभेद एव विधीयते। ततश्च काम्यनित्यप्रयोगौ भिन्नावेव, न पुनः कर्मणी। तत्रापि विशेषः—कामनायाः पुरुषेच्छावशीभूतत्वाच्छ्रुत्या विधातुमशक्यत्वाच्च नित्य एव यागः श्रुत्याशयगोचरः। पश्वादयस्तु तदङ्गफलं, तेन विकृतफलम्। किञ्च पश्वादीनां फलत्वं स्वेष्टत्वरूपेण। इष्टिश्च ममेदं भवत्वित्येषा। तेन चाविद्याकार्याया ममतायास्तत्राऽभिनिविष्टत्वादनर्थरूपत्वात्तत्संबंधेन पश्वादीनामपि तथाविधत्वाच्चानर्थफलकस्य काम्ययागस्य धर्मतैव न सिद्ध्यति। तस्मादपि तस्य न श्रुत्याऽऽशयगोचरत्वम्। नन्वेवं व्यर्थ एव श्रुत्युक्तः काम्यो यागः। प्रयोगभेदाङ्गीकारश्चेति चेत्। न। काम्ययागस्य नित्यकर्मप्रवृत्तिः प्रयोजनम्। तदुक्तं 'रोचनार्था फलश्रुतिरि'ति। 'श्रेयो भैषज्यरोचनमि'ति च। नन्वेवं चेत्फलानां मिथ्यात्वमेवाऽस्त्विति चेत्। न। तथा सत्यसद्गुणस्य सद्गद्बोधनेन श्रुतेः प्रतारकत्वाऽऽपत्तिः। तथा सर्वत्राप्यविश्वासप्रसङ्गेन नित्यकर्मण्यपि प्रवृत्तिः कुण्ठिता स्यात्। सर्वविप्लवश्च स्यात्। तस्मान्नित्ययागविधानमेव श्रुत्याशयगोचरः। पश्वादीनि फलानि तु कामनायां सत्यामेव नित्येभ्योपि सिद्ध्यन्ति। तस्मात्प्रयोगमात्रभेदो न कर्मभेदः।

तथा च सिद्धमेतत्प्रवृत्तिधर्माणां निवृत्तिधर्मप्रवृत्त्यर्थकत्वान्निवृत्तिधर्मविधानमेव पूर्वकाण्डविषयः। न चैवं कदाचित्प्रवृत्तिधर्माणामभावे सृष्ट्युच्छेदप्रसङ्गः शङ्कनीयः। भिन्नप्रकृतीनामधिकारिणां सर्वदा जागरूकत्वात्काम्यकर्मप्रवृत्तेरविच्छिन्नत्वात्।

निवृत्तिधर्मे च निवृत्तिस्त्यागार्था। त्यागश्च सङ्गस्य फलस्य च, न पुनः कर्मणः। कर्मत्यागस्य कर्तुमशक्यत्वात्। ततश्चोक्तं गीतासु भगवता 'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' 'सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि' 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ **निश्चितं मतमुत्तमम्**'। अन्यैश्चान्यत्र 'यदिदं वेदवचनं कुरु कर्म त्यजेति च। तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत्' 'एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते। ज्ञानवानेव कर्माणि कुर्वन्सर्वत्र सिध्यति। गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम्। मद्वार्तायातयामानां न बन्धाय गृहा मता' इति च। अत एवोक्तमाचार्यचरणैः 'ज्ञानसहितो मोक्षसाधन'श्चेति। तत्सिद्धमेतद्भगवत्स्नेहः फलम्। तत्साक्षात्कारश्च। तयोश्च क्रमेण साधनं श्रवणादिर्यागादिश्च धर्मः। तत्सहकारि ज्ञानमपि धर्मः। श्रवणयागादिविषयकसाधनफलादि जगत् न मिथ्या। किन्तु सत्यम्। केवलं भेदबुद्धिरब्रह्मताज्ञानमेव मिथ्या। कामनायामेव तथाधिकारिणः सत्यः स्वर्गलोकः फलम्। निष्कामेनाधिकारिणा ज्ञानसहितः कृतो धर्मो यज्ञाविर्भावसमर्थः। ततश्चात्मसुखं चित्तशुद्धिरित्यादयः सिद्धान्ताश्चतुर्वेदाशयगोचराः।

तदेतत्सर्वमपरे न क्षमन्ते। तेषां मते 'दुःखाभाव एव परमपुरुषार्थः। रोगरूपे दुःखे निवृत्ते यथा लौकिकानां 'सुखं मे जात-

मिदानी'मिति वाचस्तथा दुःखनिवृत्तिरेव सुखशब्देनोच्यते, न पुनरस्ति वस्तुभूतं सुखं नाम किञ्चित् । ज्ञानमेव च ब्रह्म, नानन्दरूपम् । तच्च निर्विशेषम् । निराकारश्च । तस्य च न प्राप्तिः किन्तु लब्धिः । यतो हि आत्माभिन्नमात्ममात्रं वा ब्रह्म, तच्च व्यापकं, ततश्च व्यापकस्य प्राप्तिः कथं नाम का नाम च स्यात् । लब्धिस्तु स्यात् । कण्ठमणिन्यायेन तत्त्वाऽन्यत्वाभ्यामनिर्वचनीयेनाज्ञानेन विस्मृत आत्मनि वेदशास्त्रादिज्ञानेनाहं ब्रह्मास्मीतिज्ञाते तस्मिन्नात्मा मया लब्ध इति वक्तुं शक्यते । वेदशास्त्रतदर्थगुरुगुरूपसत्तीत्यादयः सर्वेपि पदार्था अज्ञानकल्पिताः । यज्ञादयोपि चित्तशुद्धिमात्रमादधति न तैः कश्चिन्नारायणप्रादुर्भावो भवति । न वा वास्तवः कश्चन स्वर्गोऽस्ति । फलश्रुती रोचनार्था । बालानामौषधपानाय यथा लड्डुकदानं प्रतिज्ञायते मात्रा, पीते तस्मिन्पुनर्यथा लड्डुकं ते वत्स पिशाचो गृहीतवानित्येवं वञ्च्यते, तथा वेदोऽपि चित्तशुद्ध्यर्थमज्ञान्स्वर्गादिलोभं दत्वा कर्म कारयति फलं तु तेन चित्तशुद्धिरेवे'त्यादयः सिद्धान्ताः ।

तदेवं वेदाशयविप्लावनविदुषां मतखण्डनाय दैवजीवानां वेदाशयप्रकाशनाय च श्रीमद्वल्लभाचार्यचरणानां प्रादुर्भावः । अपरेषां च तद्वंश्यानां गोस्वामिचरणानां तन्मतवर्तिविदुषां च प्राकट्यम् ।

अस्मिन्वादस्तबके तैस्तैस्तद्वंश्यगोस्वामिचरणैर्विद्वद्भिश्चान्यैर्नास्तिकार्धनास्तिकमतखण्डनाय विविधा वादाः समारब्धाः । विशेषतस्तु गृहप्रविष्टचौरनिबर्हणन्यायेन सर्वविप्लववाद्यप्यौपनिषन्मताभिमानी मायावादी प्रथमं खण्डनीय इति तन्मतमेव समालोच्य खण्ड्यते ।

ननु 'यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः' 'मीमांसान्यायविस्तर' इत्यादौ काणादादिशास्त्राणामपि धर्मोपयोगितोच्यते प्रशस्यते च, तत्कथमेतत्खण्डनायाचार्यावतारः। नैतत्सारम्—नाऽत्र न्यायतर्कशब्दाभ्यां काणादशास्त्रं गृह्यते किन्तु विचारापरपर्यायो ब्रह्ममीमांसाशास्त्रमिह गृह्यते। काणादादिशास्त्राणि तु दूरतः परिहेयानि श्रेयस्कामेनेति स्मृतिषूच्यते। तथाचार्यचरणानां वचनम्—

सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः।
विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिर्णयः॥

विरुद्धशास्त्राणि काणादजैमिनीयादिग्रन्था इत्यन्यत्र विस्तरः। भवतु प्रकृतमनुसरामः।

अस्या वादावल्याः कर्तार अनेके गोस्वामिचरणा अपरे विद्वांसश्च।

---

## ग्रन्थकर्तृवंशपरिचयः।

सन्ति दक्षिणापथे बीजापुरादिनगरप्रान्ते कृष्णयजुर्वेदतैत्तिरीयादिशाखाध्येतार आपस्तम्बीया वेल्लनाटिब्राह्मणाः प्रसिद्धतमाः। तेष्वान्ध्रदेशीयकांकरवाडग्रामवासिनो बहुसोमयाजिनः श्रीमतो भट्टश्रीलक्ष्मणदीक्षितस्य गृहे भगवन्मुखवैश्वानरावताराः श्रीमद्वल्लभाचार्या वैक्रमे पंत्रत्रिंशोत्तरपञ्चदशशतके ( १५३५ ) वैशाखकृष्णैकादश्यां प्रादुरभवन्। पितृपादैःसह काशीं गतास्तत्रैवाद्येन वयसा कृष्णयजुषः साङ्गा एकादशशाखाः षड्दर्शनादीनि च शास्त्राणि गुरोरधीत्य स्वता-

तपादैःसह पुनः स्वदेशमागन्तुं प्रचक्रमुः। मध्येमार्गं स्वतातपादे भगवत्सायुज्यं गतवति भ्रात्रा मातृचरणान् स्वदेशं प्रापय्य स्वयं तुङ्गभद्राकूले विद्यानगरे सायणमाधवेन वेदभाष्यकारयितुर्वीरबुक्कदेवमहीपतेः पौत्रस्य कृष्णदेववर्मणो राज्ञः सभायां वैष्णवमार्गविप्लावनदक्षान्वादिविपक्षान्वैदुष्यवेगेनोत्क्षिप्य, तत्रैवाभिषिच्य दत्तमाचार्यपदं चोररीकृत्य तीर्थपरिक्रमणमिषेण त्रीन्दिग्विजयानकुर्वन्। तीर्थेचैकत्र बिल्वमंगलयोगिराजेनोपायनीकृतं विष्णुस्वामिमताचार्यकं स्वीचक्रुः। भगवता च पुरुषोत्तमेनाऽऽज्ञप्तं मन्त्रराजम्। मध्ये मध्ये च दिग्विजयेषु शुद्धाद्वैतपुष्टिमार्गोपाख्यं भक्तिमार्गं प्राचारयन्। दिग्विजयेष्वेव च वाराणस्यां स्वसजातीयस्य कस्यचिद्द्विजवरस्य सुगुणां सुतां ब्राह्मविधिना पर्यणैषुः। एतस्मिन्नेवाऽभ्यन्तरे वयसः पूर्वमीमांसाभाष्यं वैयाससूत्रभाष्यं श्रीमद्भागवतटीकां तद्भाष्यभूतां श्रीसुबोधिनीं च व्यरचयन्। अन्यांश्च षोडशग्रन्थादीन् प्रकरणग्रन्थान्। एवं धर्मोत्तरमर्थकामौ जुषतामाचार्यपादानां श्रीगोपीनाथदीक्षितः श्रीविट्ठलनाथदीक्षितश्चेति द्वौ सुतावभूताम्। तत्र ज्यायःसुतानां वंशो न परम्परां लेभे। कनिष्ठश्रीविट्ठलदीक्षितानां तु वंशोऽद्यावधिकां परंपरां लभते। श्रीविट्ठलदीक्षितप्रभुचरणाः श्रीमदाचार्या इव विद्वन्मौलिमणयो विविधवादिविजेतारोऽभवन्। एतैर्विद्वन्मण्डनभक्तिहंसप्रभृतयो भूयांसो ग्रन्था निरमीयन्त।

श्रीमत्प्रभुचरणवंशभवाः सर्वेऽपि पुरातनगोस्वामिचरणा विद्वत्प्रकाण्डा आसन्निति तैस्तैस्तद्रचितैर्ग्रन्थरत्नैरवगम्यते।

ये पुनर्भट्टमहाशयाः साम्प्रदायिकग्रन्थनिर्मातारस्तेपि कृष्णयजुर्वेदाध्यायिनो वेल्लनाटिब्राह्मणाः श्रीमद्वल्लभाचार्यसजातीया एव।

किंपुनः सजातीयाएव प्रत्युत तत्सम्बन्धिनः। तेऽपि विद्वत्तमा एवेति न परोक्षं परीक्षावतां विदुषाम्।

---

## ग्रन्थकर्तृपरिचयः।

तत्रैतद्वादावल्या वादस्तबकस्य वा निर्मातारो बहवो गोस्वामिचरणा भट्टमहोदया अन्ये च विद्वत्प्रकाण्डाः।

तत्र प्रथमेऽवगतसकलवेदादिशास्त्राशयाः प्रस्फुटार्थमधुरपदशालिलेखसार्वभौमाः ख्यातिविवेककर्तारो लालूभट्टोपनामानः श्रीबालकृष्णशर्माणः। एते हि महाशयास्तैलङ्गदेशीयाः कृष्णयजुष आपस्तम्बतैत्तिरिशाखाध्यायिन आसन्। इमे श्रीमत्पुरुषोत्तमचरणसमये वैक्रमे चतुर्विंशत्युत्तरे सप्तदशशतके (१७२४) आसन्निति साम्प्रदायिकविद्वत्प्रसिद्धिः। स्थितिस्त्वेतेषां राजपुत्रप्रदेशे कोटानगरे आसीत्। सम्प्रत्यपि तेषां श्रीमद्बालकृष्णप्रभुमन्दिरं तत्रास्ति। वैदुष्यमहिम्ना चैते जयपुरपुरन्दरादिविविधमहाराजेभ्यः सम्मानमवापुः। एतत्कृताष्टीकाः प्रायः सर्वेष्वप्याचार्यचरणकृतभाष्यादिग्रन्थरत्नेषु विद्यन्ते। स्वतन्त्राश्च प्रमेयरत्नार्णवादयो बहवो ग्रन्थाः। एतद्वैदुष्यविषये तु कृतमनेनैव यद्यदि नाऽभविष्यन्प्रमेयरत्नार्णवादय एतत्कृता ग्रन्थास्तर्हि नाऽलप्स्यन्तैव पुष्टिसम्प्रदायसिद्धान्तं विदुषां मतयः।

द्वितीये भेदाभेदस्वरूपनिर्णयकर्तारः सर्ववादिविजयविदितवै-

---

१ अत्र समयप्राक्त्वेन वैदुष्यमहत्त्वेन वा ग्रन्थनिवेशक्रमो युक्त आसीत् किन्तु यथायथा लब्धास्तथा तथा मुद्रणाय दत्ता ग्रन्थाः सद्यो मुद्रणकार्यप्रचालनाय। अयमेतत्कृतः ख्यातिविवेकः शुद्धो लिखित एवासीदिति प्रथमं निवेशितः।

दुषीविभवा बहुलक्षग्रन्थनिर्मातारः श्रीमद्वल्लभाचार्यचरणेभ्य सप्तमीं परम्परामधिष्ठिताः श्रीपीताम्बरगोस्वामितनुजनुषः श्रीपुरुषोत्तमचरणाः। सर्वेऽपि गोस्वामिचरणाः श्रीमद्वल्लभाचार्याणां वंश्या एवेति तैलङ्गदेशीया वेल्लनाटिब्राह्मणाः कृष्णयाजुषीमापस्तम्बतैत्तिरीयां शाखामधीयाना आसन्सन्ति चेत्येतेऽपि तथा। एतेषां प्रादुर्भावसमयस्तु वैक्रमाब्दे चतुर्विंशत्युत्तरे सप्तदशशतके (१७२४) भाद्रशुक्लैका ११ दशी।

एतन्निर्मितोऽणुभाष्यप्रकाशस्तत्त्वदीपनिबन्धावरणभङ्गः सुबोधिनीप्रकाशश्चेति त्रयो ग्रन्थाः प्रधानतमाः। अपरेच षोडशग्रन्थटीका अवतारवादावली प्रस्थानरत्नाकर इत्यादयो भूयांसो लब्धाः। निवासस्थानं त्वेतेषां सौराष्ट्रेषु सुरतपुरमासीत्। यत्र सम्प्रति भगवान् श्रीबालकृष्णः पुनाति निजदर्शनेन निरीक्षकेऽक्षियुगलीम्। यत्र च गोस्वामिपदे गुणवशीकृतलोका गो० श्रीव्रजरत्नलालमहोदयास्तिष्ठन्ति।

अस्मिन्वादस्तबके चैतन्निर्मिता ग्रन्थास्त्वेते—

१ भेदाभेदस्वरूपनिर्णयः।
२ भगवत्प्रतिकृतिपूजनवादः।
३ सृष्टिभेदवादः।
४ ख्यातिवादः।
५ अन्धकारवादः।
६ ब्राह्मणत्वादिदेवतावादः।
७ जीवप्रतिबिम्बत्वखण्डनवादः।
८ आविर्भावतिरोभाववादः।
९ प्रतिबिम्बवादः।
१० भक्त्युत्कर्षवादः।
११ खलालपनविध्वंसवादः।
१२ नामवादः।
१३ मूर्तिपूजनवादः।
१४ ऊर्ध्वपुण्ड्रधारणवादः।
१५ शङ्खचक्रधारणवादः।
१६ मालाधारणवादः।
१७ उपदेशविषयशङ्कानिरासवादः।

अवतारवादावली त्वेतत्कृताऽस्माभिर्भारतमार्तण्डश्रीगट्टूलालपुस्त-कालयाल्लब्धा किन्त्वपूर्णेति प्रतिदत्ता । न पुनः प्रयस्यद्भिरप्यन्यतो लब्धेति चतुर्विंशतिग्रन्थेषु सप्तदशग्रन्था एव मुद्रापणमलभन्त ।

एतद्वैदुष्यपरीक्षणविषये तु किमस्माभिरेतदक्षरावलोकनाऽक्षमै-र्वक्तव्यम् । केवलमिदमेवाऽभिधीयते भगवद्वदनावतारवाक्स्वयं ज्ञेयैवाऽभविष्यद्यदि नेमे स्वजन्मना तद्वंशमलमकरिष्यन् । अव-तीर्य चैतैराचार्यवाणी प्रस्फुटार्थरहस्या प्रदर्शितलोकोत्तरगुणगणा गहनापि सरलाऽकारि ।

तृतीये च 'प्रपञ्चसंसारभेद'नामकलेखनिर्मातारः श्रीमद्विठ्ठ-लदीक्षितप्रभुचरणानामात्मजा वल्लभेत्यपरनामधेयाः श्रीगोकुलनाथ-चरणाः । इमे श्रीमद्वल्लभाचार्यतस्तृतीयपुरुषाः । एते वैक्रमषोडश-शतकस्यारम्भ एव प्रादुरभूवन् । स्थितिरेषां गोकुले मथुराप्रान्ते । श्रीवल्लभ इति नाम त्वेषां मन्ये पितामहस्वरूपाऽऽनुरूप्येण वाऽति-प्रियतया वा तत्सदृशवैदुष्येण वा 'त्रिपुरुषसम्बद्ध'मिति शास्त्राज्ञया वा धृतं स्यात् । एते बाल्य एव प्रकटितवैदुष्या यौवने महामहा-वादिविजेतारो विद्वत्तमा आसन् । दृश्यते च तदेतद्रचितेषु ग्रन्थ-रत्नेषु । वैदुष्यप्रतापेनैव सम्राडपि तेषां पूजामकरोदिति साम्प्र-दायिकेष्वैतिह्यम् । प्रायः सर्वेष्वपि श्रीमदाचार्यकृतप्रकरणग्रन्थे-ष्वेषां विवृतयो लभ्यन्ते । वाणीसरणिश्चैषां प्रस्फुटार्थरहस्या गम्भीरापि सरलमधुरा ।

चतुर्था 'वादकथा'कर्तारः श्रीयोगिगोपेश्वरचरणाः । एते वैक्रमे पञ्चत्रिंशदुत्तराष्टादशशतके ( १८३५ ) ज्येष्ठशुक्लाष्टम्यां भुवस्तल-

मलंचक्रुः । पितृचरणास्त्वेतेषां गोस्वामिश्रीगोकुलोत्सवपादाः । एते श्रीप्रभुचरणप्रथमसुतश्रीगिरिधरचरणवंश्याः श्रीमद्वल्लभाचार्यतो दशमीं परम्परामधिगताः । एतेपि विद्वन्मौलिमणयोऽभूवन् । एतत्कृता रश्मिनाम भाष्यप्रकाशविवृतिः सहस्रावधिर्विराजते । सत्यमेते योगिप्रवरा एव । को ह्यन्यथा महामाहात्म्यमन्तरा सर्वामपि प्रभुसेवां निर्वर्त्तयन्नेतावद्विलेखितुं प्रभवेत् । प्रायेण श्रीनाथद्वार एवैतेषां स्थितिरासीदिति मन्ये । अस्यां वादावल्यां 'वादकथा' 'आत्मवाद'श्चेति द्वावेतत्कृतौ ग्रन्थौ समपादिषाताम् ।

पञ्चमाः प्रपञ्चवादकर्तारो **गोस्वामिश्रीगिरिधरचरणाः** । एतत्कृतेऽस्मिन्ग्रन्थे समाप्तिसूचकेतिश्रीचिह्नस्याभावतः किंकर्तृकमेतद्वादरत्नमित्येव न ज्ञायते, किं पुनरेतत्पितृपितामहादीनां निर्देशादयः । केवलं तु समाप्तिश्लोकेनैकेन संभावना क्रियते श्रीमद्विट्ठलदीक्षितप्रभूणां प्रथमसुता एत इति । सोयं श्लोकः—

श्रीविट्ठलपदसरसिजनतिततिमुक्ताखिलाज्ञानः ।
विद्वन्मण्डनसरणिरचीक्लृपद्गिरिधरः किञ्चित् ॥ ३ ॥

अयं च

एतेनास्मत्पतिर्योऽस्ति प्रभुः श्रीद्वारकेश्वरः ।
स एव हि प्रसन्नोऽस्तु किं वृथा बहुभाषणैः ॥ ४ ॥

एतेपि विद्वत्प्रकाण्डा इत्येतत्कृतग्रन्थदर्शनेन प्रतिभाति ।

षष्ठाः श्रीरघुनाथसुताः **श्रीव्रजरायगोस्वामिचरणाः** । एते श्रीमद्वल्लभाचार्येभ्योऽष्टमीं परम्परामवापुः । श्रीमद्विट्ठलदीक्षितसुतश्रीगिरिधराणां वंश्याः । एतत्कृतस्याऽस्य ब्रह्मवादस्यैकमेव पुस्तकमस्मा-

मिर्लब्धम् । तच्च लेखकप्रमादादशुद्धिमयमेवाऽऽसीत्तथाप्येतद्दर्शने- नैते सार्वदेशिकपण्डितप्रकाण्डा अभूवन्निति प्रत्ययो भवति । मन्ये वैक्रमेऽष्टादशशतकमध्य एते प्रादुरभवन् ।

सप्तमाः श्रीयदुपतिगोस्वामिसुताः **श्रीपीताम्बरगोस्वामिचरणाः**। यत्कृतोऽस्यां भक्तिरसत्ववादः । एतेऽपि षष्ठीं परम्परामधिश्रिताः प्रभुचरणतृतीयसुतश्रीबालकृष्णगोस्वामिनां वंश्याः । एते वैक्रमे सप्तदशशतकप्रारम्भे षोडशशतकसमाप्तौ वाऽऽसन्निति ज्ञायते । षोडशग्रन्थेषु कतिपयानामेतत्कृता अपि टीकाः समुपलभ्यन्ते ।

अष्टमा भट्टश्रीरामकृष्णशर्माणः । एते हि तैलङ्गदेशीया वेल्लनाटिब्राह्मणाः कृष्णयजुषस्तैत्तिरीयां शाखामधीयानाः काश्यां गोपालमन्दिरे श्रीमद्गिरिधरगोस्वामिचरणसन्निधौ न्यवसन् । प्रायो वैक्रमाऽष्टादशशतकसमाप्तावभूवन्निति ज्ञायते । विद्वद्धुरीणा एवैत इति त्वेतत्कृत**शुद्धाद्वैतमार्तण्डा**दिटीकाग्रन्थावलोकनेन विजानीमः ।

---

## ग्रन्थपरिचयस्तत्सूची च ।

### ख्यातिविवेकः ।

१.

१. सामान्यज्ञानं प्रति मनइन्द्रियाणां, विशेषज्ञाने तु बुद्धेरेव कारणतेति व्यवस्थापनम् । पृ. २–३

२. 'शुक्ताविदं रजत'मित्यादिभ्रमज्ञानेषु सर्ववादिमतान्यपास्याऽन्यख्यातित्वस्थापनम् । ३–४

---

## गो० श्रीपुरुषोत्तमचरणरचितो

## भेदाभेदस्वरूपनिर्णयः ।

### २.

२. 'उच्यते' इत्यनेन पूर्वपक्षनिरासः। भेदसहनक्षम एवाऽभेद इति स्थापनम्। एवं जीवब्रह्मणोरपि भेदसहिष्णुरभेद एवेति निरूपणम्। –१८

३. जगतः पूर्वं सत्त्वाद्बहुभवनव्युच्चरणश्रुत्योर्विरोधः स्यादित्याशंकानिरासः। तत्र श्रुत्यादीनां व्यवस्थापनम्। काणादादिमतानि निरस्य श्रुत्युक्तभेदनिषेधादीनाञ्च व्यवस्थापनम्। १९–२०–२१

४. भेदसहिष्णुरभेदरूपं तादात्म्यमेवाद्वैतम्। तच्च जगद्ब्रह्मणोर्जीवब्रह्मणोश्च, परं तत्र विशेषः कश्चनेति निरूपणम्। २२–२३

---

गो० श्रीमद्वल्लभविरचितः

## प्रपञ्चसंसारभेदः।

३.

१. अत्र प्रपञ्चसंसारयोर्भेद एवेति श्रुतिस्मृतिनिबन्धादिवचनैर्व्यवस्थाप्यते। २४–२५–२६

---

गो० श्रीगोपेश्वररचिता

## वादकथा।

४.

१. अत्र ग्रन्थे श्रीमद्विट्ठलप्रभुचरणानां पद्यव्याख्यानरूपेण परमतखण्डनं स्वमतप्रदर्शनञ्च। तत्र 'प्राकृतधर्मानाश्रयमि'त्यस्य व्याख्यानं तेन परमतनिरासश्च। २८–२९

२. 'अप्राकृतनिखिले'त्यादिपदव्याख्यानं तेनैव स्वमतनिरूपणपरमतनिरासौ । ३०–३१–३२

३. 'इति निगमप्रतिपाद्यमि'त्यस्य विवरणं तेन च परमतनिरासपूर्वकं स्वमतनिरूपणम् । ३३–३४

४. 'शुद्ध'मित्यस्य विवरणेन स्वमतप्रदर्शनपरमतखण्डने । ३५–३ यां पङ्क्तिमारभ्य ५ मीं समाप्य ।

५. 'साकृती'ति पदविवेकस्तेन च परमतखण्डनस्वमतनिरूपणे । ३५–३६–३७–३८–३९

---

## गो० श्रीमद्गिरिधरचरणरचितः

## प्रपञ्चवादः ।

### ५.

१. अत्र हि प्रपञ्चस्य ब्रह्मरूपत्वेन नित्यत्वसमर्थनम् । तत्राऽसत्त्वखण्डनं विकल्पासहत्वहेतुना । ४०–४१

२. अद्वैताभिमानिनो मतेऽविद्या माया वा युक्त्याऽपि न सिध्यतीति विकल्पप्रतिक्षेपैः प्रदर्शनम् । स्वमतेन च तत्समर्थनम् । ४१–४२–४३–४४

३. जगतोऽनिर्वचनीयत्वमाशङ्क्य खण्डनम् । तदनित्यत्वखण्डनञ्च । ४४–४५–४६

४. प्रत्यक्षस्य शब्दोपजीवकत्वम् । अनुमानस्य च प्रत्यक्षोपजीवकत्वम् । श्रुतेश्च शब्दात्मकत्वात्सर्वोपजीव्यत्वेन बलवत्त्वम् । तत्प्रमाणेनापि जगतो नानित्यत्वम् । ४७–४८

५. जगतो ब्रह्मरूपत्वे किञ्चिदाशङ्क्य तस्य ब्रह्मरूपत्वप्रसाधनम् । ४८–४९

६ श्रुतिसूत्रादिभिस्तद्व्याख्यानेन च प्रपञ्चस्य ब्रह्मरूपत्वं ब्रह्मणश्च सर्वधर्मवत्त्वं तत्त्वेपि च निर्गुणत्वं समर्थितम् । ४९–५०–५१–५२–५३

---

## गो० श्रीव्रजरायचरणरचितो

# ब्रह्मवादः ।

## ६.

१. अत्र हि ब्रह्मणोऽप्राकृतनिखिलधर्मयुक्तत्वं साधितम् । तत्र प्रपञ्चस्य ब्रह्मधर्मत्वसाधनम् । तेन ब्रह्मणः सधर्मकत्वम् । पराभिमतनिर्धर्मकत्वनिरासश्च । ५४–५५–५६–५७

२. 'उपासनार्थं धर्मवैशिष्ट्यं श्रुतिर्बोधयती'त्येतत्परमतनिरासः । ब्रह्मधर्माणां मायिकत्वखण्डनञ्च । –५८

३. मायाया अनादिसान्तत्वखण्डनम् । अभावाः स्वमते न सन्ति । परमते च न सिद्ध्यन्तीति प्रदर्शनम् । आविर्भावतिरोभावाभ्यां सर्वकार्यसिद्धिः । ५९–६०

४. सर्वोपनिषद्वेद्यत्वं ब्रह्मणः । परविकल्पानां निरासश्च । ६१–६२–६३

---

गो० श्रीमत्पुरुषोत्तमचरणरचितः

## प्रतिकृतिपूजनवादः ।

७.



---

गो० श्रीपुरुषोत्तमचरणरचितः

## सृष्टिभेदवादः ।

८.

४. प्रच्छन्ननास्तिका अद्वैताभिमानिनो मायावादिनो मायामनिर्वचनीयां तत्कार्यमेव च जगदिति वदन्ति । तैः परिणामवादस्य द्विविधस्याऽपि मीमांसकसांख्यप्रतिपन्नस्य स्वमतेन खण्डनं क्रियते । ९६–१००

५. मायावादिनां मतमुद्भाव्य श्रुतिसूत्रयुक्तितद्वाक्यैर्निपुणतरं खण्डनम् । १००–११३

६. एवं सर्वमतानि निरस्य श्रुतिस्मृतिपुराणयुक्तिशतनिष्पन्नं स्वमतं ब्रह्मवादरूपं प्रतिपाद्यते । ११३–११८

---

## गो० श्रीपुरुषोत्तमवादरचितः ख्यातिवादः ।

९.

१. अत्रान्यमतानि पराकृत्य स्वमते ख्यातिर्निरुच्यते । शुक्तिरजतादिस्थले मायया बहिःक्षिप्ताया बुद्धेर्वृत्तिरूपं ज्ञानमेवाऽर्थाकारेण ख्यायते (भासते) इत्यापादनम् । आत्मख्यातेः खण्डनञ्च । १२०–१२१

२. तत्र दोषोपहतेनेन्द्रियेण संबद्धं शुक्त्यादिकमेव रजताद्यात्मना गृह्यत इत्यादिकं काणादमतमाशङ्क्य निरस्यते । १२२–१२३–१२४

३. भाट्टप्राभाकरमतं संक्षेपेणोट्टङ्क्य निवार्यते । १२५

४. मायावादिस्वीकृताया अनिर्वचनीयख्यातेः खण्डनम् । १२६–१२७

५. सांख्यमाध्वरामानुजमतसमालोचनम् । तत्र रामानुजमतं

केनचिद्विशेषेण स्वमतेऽप्यभीष्टम् । यतो हि योगिनां पूर्णज्ञानिनाञ्च सर्वत्र सर्वावभानतया ज्ञानस्य यथाऽर्थत्वादख्यातिरेवेति। अन्येषामज्ञानिनां त्वन्यख्यातिरेव ।१२७–१३०

---

## गो० श्रीमत्पुरुषोत्तमविरचितः

## अन्धकारवादः ।

### १०.



---

## गो० श्रीगोपेश्वरविरचित

## आत्मवादः ।

### ११.



---

## गो० श्रीपुरुषोत्तमचरणरचितो

## ब्राह्मणत्वादिदेवतावादः ।

### १२.

---

## गो० श्रीपुरुषोत्तमचरणनिर्मितो जीवप्रतिबिम्बत्वखण्डनवादः ।

### १३.



---

## गो० श्रीपुरुषोत्तमचरणविरचित आविर्भावतिरोभाववादः ।

### १४.



---

गो० श्रीपुरुषोत्तमचरणरचितः

प्रतिबिम्बवादः ।

१५.



---

गो० श्रीपीताम्बरचरणविरचितो

भक्तिरसत्ववादः ।

१६.



---

गो० श्रीपुरुषोत्तमचरणरचितो

भक्त्युत्कर्षवादः ।

१७.



---

गो० श्रीपुरुषोत्तमचरणोद्भावितः

खलालपनविध्वंसवादः ।

१८.

प्रलपन्ति । किञ्च स्वामिनीस्तोत्रादिना, नवरात्रे सरस्वती-स्थापनादिना च यथा तथा शङ्कन्त इति तेषामत्र मुखविध्वंसः क्रियते श्रुतिसूत्रस्मृतियुक्तिभिः । २१३–२२३

---

गो० श्रीपुरुषोत्तमचरणविरचितो

नामवादः ।

१९.

१. अत्र नाम्ना ज्ञातेनाज्ञातेन वा फलं भवतीत्याशङ्क्य ज्ञातेनैव भगवन्नाम्ना मुख्यफलं भवतीति निरूप्यते । २२४–२३५

---

गो० श्रीपुरुषोत्तमचरणरचितो

मूर्तिपूजनवादः ।

२०.

१. अत्र साम्प्रदायिकेन केनचिद्विशेषेण परात्परस्य भगवतः श्रीकृष्णस्य मूर्तेरेव सेवनं वैष्णवैः करणीयमिति श्रुतिस्मृतियुक्त्यादिप्रमाणैः प्रतिपादितम् । २३५–२४९

---

गो० श्रीपुरुषोत्तमचरणरचित

ऊर्द्ध्वपुण्ड्रधारणवादः ।

२१.

१. अत्र भगवत्प्रसादिचन्दनादिद्रव्येणोर्द्ध्वपुण्ड्रधारणमेव वैष्णवानां चिह्नं धर्मश्चेति प्रतिपाद्यते श्रुतिस्मृत्यादिभिः ।

२. तत्र पूर्वं पराभिमतं भस्मधारणमाशङ्क्य तत्पाशुपतं व्रतमिति न वैदिकधर्मो वैदिकानान्तूर्ध्वपुण्ड्रधारणं धर्म इति प्रतिपादितम् । २५०–२६०

३. वैष्णवानां त्रिविधत्वम् । तद्धारणद्रव्यमानादिकं चोच्यते । २६२–२६३

---

## गो० श्रीपुरुषोत्तमचरणरचितः

## शङ्खचक्रधारणवादः ।

### २२.

१. तत्र धारणनिषेधान्पूर्वपक्षे कृत्वा निषेधाः केवले, भगवत्पूजासेवादौ तु नित्यं धार्यमिति सिद्धान्तितम् ।

२. किञ्च पूर्वमीमांसादृष्टान्तेन निषेधास्तप्तधारणे पर्यवसन्नाः । न मृदो धारणे इत्यपि समाहितम् २६८–२८१

---

## गो० श्रीपुरुषोत्तमचरणनिर्मितो



## मालाधारणवादः ।

### २३.

१. अत्र वैष्णवैस्तुलसीकाष्ठमाला धार्येति प्रतिपादितम् । ये पुनरत्राक्षेपाः प्राचामभिनवानां च ते निपुणतरं स्मृतियुक्त्यादिप्रमाणैर्निरस्ताः । २८२–२८६

---

भट्टश्रीरामकृष्णशर्मविरचितः

## शुद्धाद्वैतपरिष्कारः ।

२४.

१. अत्र प्रथमं परिष्कृतं शुद्धाद्वैतस्य लक्षणं निरूपितम् । ततश्च शुद्धपदनिवेशहेतुर्बोधितः । तदन्तरमव्याप्त्यतिव्याप्ति-निवारणं कृतम् । २८७–२८९

---

गो० श्रीपुरुषोत्तमचरणनिर्मित

## उपदेशविषयशङ्कानिरासवादः ।

२५.

१. अत्र प्रथमतो गायत्र्या सर्वकार्यसिद्धिः स्यान्नान्यमन्त्रदीक्षाऽपेक्ष्यते त्रैवर्णिकैरित्यादिपूर्वपक्षः कृतः । २९९–२९३

२. ततश्च सर्वानपि पूर्वपक्षविकल्पान्निरस्य गायत्र्या कर्माधिकारद्विजत्वमात्रसम्पादकत्वनिरूपणम् । शाक्तत्वञ्च गायत्री-प्रतिपाद्यब्रह्माऽनभिज्ञानामेव । २९४–२९५

३. भगवद्भक्तेर्जीवस्याऽऽवश्यकत्वं, भक्त्यधिकारसम्पादकत्वं च साम्प्रदायिकमन्त्रोपदेशस्येति तस्याप्यवश्यग्राह्यता । भक्तेः श्रुतितात्पर्यगोचरत्वम् । २९६–२९७

४. भक्तिमार्गानुसारेण शरणमन्त्रोपदेशः सर्वार्पणमन्त्रोपदेश एव च युक्तः । शरणमन्त्राकारानुसंधानं श्रीभागवते । ऊहश्च शास्त्रीयः पन्थाः । श्रुतावपि, 'यत्र योगेश्वर' इति गीतापद्येऽपि च शरणमन्त्राकारानुसंधानम् । २९८–३०१

५. मन्त्रदीक्षाया आवश्यकत्वम् । विनियोगाद्यभावेऽपि मन्त्रत्वं नाऽपैति । समर्पणमन्त्रस्य जपाचारे व्यवस्था । दम्पत्योरेकगुरुत्वे न दोषः । भक्तानामनेकविधत्वम् । तेषु शुद्धभक्तानां मुख्यत्वम् ।

---

## साम्प्रदायिकी परिस्थितिः !

शास्त्राध्ययनाध्यापनपरिशीलनादौ चिरादेव साम्प्रदायिकैर्विमुक्ते साम्प्रदायिकसिद्धान्तः सर्वैरेव प्रायो विस्मृतः । सविशेषन्तु प्रमाणभागज्ञानन्तूत्सन्नप्रायमासीत्किन्तु शारदामठाधिपतिना माधवतीर्थमहाशयेन सरुशतीशतमाक्षिप्ते सम्प्रदाये पुनरुन्मीलित इव मदालसे लोचने प्रायः सर्वेषाम् । प्रारब्धं ततः कैश्चन तात्कालिकमसत्प्रायं कार्यजातम् । ततः पूर्वत एव श्रीमद्गोकुलनाथचरणैस्तु शनैः शनैरध्यापनादिकार्यं प्रक्रामितमेवासीत् । तत एव च कतिपयैर्वैष्णवैरेते प्रार्थिता भवन्मण्डलादेतदाक्षेपोत्तरेणाऽवश्यं भाव्यमिति । अस्माभिस्तु 'कार्यमेवोत्तरं न पुनः पत्रेषु कालाक्षरलेपनं वा रुशतीवाचो वोत्तरमिति कृतसिद्धान्तै' 'र्मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पत' इत्यादिनीतिमनुसरद्भिश्च जोषमेवाऽस्थायि । 'यथा यक्षस्तथा बलि'रिति न्यायेन सभासम्मेलनाभियोगादिकर्त्तव्यन्तु प्राप्तकालत्वान्न विस्मृतमेव । एवं शान्त्या कार्यमेवाचरद्भिरस्माभिः किमपि कृतम् । साम्प्रदायिकविदुषामधीत्याध्यापनादिकार्यसमर्थानां सज्जीकरणं श्रीसुबोधिनीप्रथमस्कंधादिप्रत्नसंस्कृतग्रन्थानामादर्शशोधनसम्पादितानां प्रकाशनम् । यच्छोधनमिदानीमल्पज्ञानामपि व्युत्पादनं शोधनादर्शश्चाऽभूद्भवति च । शुद्धाद्वैतदर्शनादीनामभि-

नवसरण्याऽभिनवग्रन्थानां निर्मापणञ्च। तेनैव च यदक्षोभ्यवैदुष्यकर्तव्यं तदाचरितमिति परीक्षावन्तः सुजनाः प्रमाणम्।

भवन्ति लोके असन्तमपि सन्तमिव, किञ्चिदिव बहुतरमिव च प्रदर्शनचञ्चलाः। ततश्च तैर्न सन्तुष्टमपि तु तद्व्याजेन स्वाशयविवरीतुकामैर्न सदपि वैदुष्यं प्रकटयद्भि'र्नैते त्वरया कार्यं कुर्वन्ति न च समीचीनं, मूल्यं च बहु रक्षन्ति पुस्तकानां, यत्कुर्वन्ति तत्सर्वमस्मत्प्रेरणयैव कुर्वन्ती'त्यादि बहु जल्पितं गृह्यमासिकपत्रेषु। न ततोप्यस्माभिरुद्विग्नम्। केषु नामोद्वेगः कर्तव्यः। ततश्च तैर्गृहीतपरवैदुष्यलाभैः कार्यमपि नाऽपेक्षितमिव प्रारब्धम्। पौनःपुन्येन दुःप्रेरणलेखखेदितैर्महाराजचरणैः स्वकीय एव महतिव्यये सत्यपि मुद्रापणकार्यं द्विधा विभक्तम्। एकत्राहं पाठशालातोऽवकाशं दत्वा नियोजितः। मया चाकस्मादेवाज्ञां शिरसि कृत्वा कार्यं तु प्रारब्धं किन्तु नाऽसीदेकमपि पुस्तकं मुद्रापणशोधनाय। ततश्च बलदेवमन्दिराध्यक्षाः श्रीद्वारकेशलालगोस्वामिचरणाः प्रतिफलकपुस्तकदानाय प्रार्थिताः। तैराज्ञानुग्रहे दत्ते तत्पण्डितभानुशंकरत्रिभुवनसाहाय्येन तत्पुस्तकालयात्संगृहीतानि बहुशः पुस्तकानि। शोध्यपुस्तकानि त्वस्मद्बालकृष्णपुस्तकालय आसन्कतिचन। कतिचन श्रीगट्टूलालमहोदयपुस्तकालयात्रिभुवनदासश्रेष्ठिवरानुज्ञया मूलचन्द्रगुप्तमहाशयसाहाय्येन लब्धानि। ततश्च लेखकद्वयमास्थाप्य वादावलीमुद्रापणकार्यं भाष्यटीकामुद्रापणकार्यञ्चेति द्वयं सममेवाऽऽरब्धम्। भाष्यत्रिसूत्रीटीकाद्वयमस्मत्सुहृच्छ्रीबलभद्रशर्मपुस्तकसंग्रहादानीतम्। नाभूत्तत्र कष्टं गृह्यमेवेति।

कार्यं हि कालमपेक्षते। भवतु नाम त्वरा। इतश्च मध्ये

श्रीनाथद्वारयात्राऽभून्महाराजचरणानां तदहमपि तैः सहागमम् । तत आगत्य च यन्त्रालये इन्फ्लुएञ्जाप्रभृतिरोगाकुले कार्यकृतामभावात्सर्वथैव शिथिलमभून्मुद्रापणम् । किं क्रियतां दैवे प्रतिबन्धे । एकमासेनैकफार्मं प्राप्यते स्म ।

एतावत्कालपर्यन्तं संघद्रव्यव्यवस्थापूर्तिर्न यथावज्जातेति महाराजचरणैः कार्यालययन्त्रालयादिव्ययः स्वयमेव सोढः । तत्सर्वमनपेक्ष्यैवोपालम्भपण्डितैः पुनस्त्वराकोलाहल आरब्धः । ततश्च खिन्नैरस्मन्महाराजचरणैरन्यत्र व्यवस्थापकसमित्यामेतद्भारो दत्तः । युक्तं चैतत् । कार्यकृत एव श्रमं कालव्ययं द्रव्यव्ययं च विदन्ति न पुनरुपालम्भपण्डिततमाः । किञ्च वराटिकामात्रं कालत्रुटिमपि चाऽदत्त्वैव ये शान्त्याकार्यकृतोऽस्मानेतावत्खेदयन्ति किं पुनः संघद्रव्ये संगृहीते । ततोऽप्यन्यत्र दत्ता व्यवस्था । अहो कार्यकृत्सु साम्प्रदायिकानां प्रसादः । इदानीं श्रीनाथद्वारीयद्रव्यं संघद्रव्यं चैकीकृत्य तद्व्यव्यवस्थाऽपरत्र समित्यां दत्तेति पश्यामः किमियं प्रपद्यते । मन्ये द्वित्रिदिनैरेव सर्वसाम्प्रदायिकपुस्तकानि मुद्रितानि स्युः । पुस्तकसंग्रहवन्तो निजपुस्तकसूचीमपि न ददति । कुत्रचन पुस्तकानां सूची नास्ति साप्यस्माभिरेव संपाद्य तानि संग्राह्यानि । अपरे पुस्तकानि चास्मदीयानि तदालयाद्बहिर्न गच्छन्तीति स्पष्टमूचुः । द्रव्यव्यवस्था पर्याप्ता नास्ति । कार्यकृतामभावः । ये निपुणकार्यकृतस्ते लोकैः पुनः पुनः पर्यनुयोज्य विषादिताः । यन्त्रालयशैथिल्यम् । एवं सत्यपि 'कदा पुस्तकं निष्कामति' 'भूमा कालो जात' इत्यादिप्रसादवचांसि प्रचलन्त्येव । सन्तु । श्रीमद्बालकृष्णप्रभुकृपयास्म साम्प्रदायिकविद्याप्रथमाश्रयदायिगोस्वामिकुलकौस्तुभश्रीमद्गोकुलना-

थचरणानामसीमानुग्रहेण च सम्पूर्णमिदानीमुल्लङ्घ्य सर्वानपि प्रत्यूहपाशानेतत्पुस्तकशोधनप्रकाशनम् । अग्रे च भाष्यटीकापञ्चकमपि प्रकाशितं स्यान्निर्विघ्नमिति भूयोभूयः प्रार्थ्यते श्रीनन्दनन्दनः ।



## उपकारस्मरणम् !!

अत्रत्यश्रीबलदेव ( दाऊजी ) मन्दिराध्यक्षैः गो० श्रीद्वारकेशलालमहाराजचरणैः पुस्तकदानेन प्रथमसाहाय्यं विहितमिति तैरुपकृतास्तेषु धन्यवादाञ्शतश उपहारीकुर्मः । लीलाप्रविष्टैर्गो० श्रीवागधीशलालमहाराजैरपि कतिपयपुस्तकदानेनानुग्रहो विहित इति तानपि धन्यवादैः स्मरामः । सुरतपुरवास्तव्यैर्विद्वदनुरागिभिः श्रीव्रजरत्नलालमहाराजैरवसितप्राये शोधनेऽपि दत्तैः पुस्तकैर्बहु कार्यं सिद्धमिति तेषु धन्यवादानुपायनीकुर्मः । अत्रत्यमाधवारामाध्यक्षेण श्रेष्ठिवर्येण माननीयत्रिभुवनदासवरजीवनदासमहाशयेनापि भारतमार्तण्डश्रीगट्टूलालपुस्तकालयादपेक्षितपुस्तकदानानुज्ञया महदुपकृतमिति तत्रापि धन्यवादान्वितरामः । तत्पुस्तकालयकार्यावेक्षिणा बी. ए. पदधृता मूलचन्दतुलसीदासगुप्तेनापि पुस्तकगवेषणदानादिना साहाय्यं विहितं स्वीयान्यपि कतिचित्पुस्तकानि प्रत्तानीति तस्मै धन्यवादान्प्रदद्मः । वैष्णवधर्मपताकालेखकेन पं० वसन्तरामशास्त्रिणा पुस्तकसाहाय्यं विहितमिति सोपि धन्यवादार्हः ।

निर्णयसागरयन्त्रालयशास्त्रिवरैः श्रीवासुदेवपणशीकरैः शोध्यफलकेषु दृष्टिदोषावशिष्टाशुद्धिशोधनेन महदुपकृतमिति तानपि धन्यवादैर्वर्द्धयामः ।

---

अन्यदनुकरणीयं प्रेक्षणीयञ्च !!

सुरतपुरालंकारैर्गोस्वामिभूषणश्रीव्रजरत्नलालमहाराजचरणैरेतत्पुस्तकमुद्रणे मुद्रणव्ययो दत्त इति प्रशंसनीय एवैतेषां साम्प्रदायिकविद्योत्साहः ।

गोस्वामिकुलकौस्तुभश्रीश्रीगोकुलनाथमहाराजचरणाश्रितो

भट्टश्रीरमानाथशर्मा

शुद्धाद्वैतभूषणः ।

॥ श्रीः ॥

श्रीगिरिधरस्तनोतु मंगलानि ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां श्रीमल्लालूभट्टोपनामकश्रीबालकृष्णभट्टविरचितः ख्यातिविवेकः[1] ।

## प्रथमो मणिः ।

श्रीमद्गोवर्धनाधीशं गोपिकाप्राणवल्लभम् ।
रासक्रीडारतं वन्दे भजनानन्दलब्धये ॥ १ ॥
घोषसीमन्तिनीनेत्रचकोरचयचन्दिरम् ।
वन्दे श्रीबालकृष्णाख्यं प्रभुमानन्दमन्दिरम् ॥ २ ॥
वन्दे श्रीवल्लभाचार्यान्पुष्टिमार्गप्रवर्तकान् ।
श्रीविट्ठलेशचरणानाश्रये कृष्णतुष्टये ॥ ३ ॥
ये संक्षेपेण पूर्वार्द्धे पदार्था विनिरूपिताः ।
तद्व्यासं कर्तुमारब्धमुत्तरार्द्धे मयाऽधुना ॥ ४ ॥

तत्र पूर्वार्द्धे पूर्वप्रपञ्चविवेक उक्तस्तद्दार्ढ्याय ख्यातिस्वरूपनिरूपणमावश्यकम् । ख्यातिबोधं विना प्रपंचस्वरूपस्याऽऽकलयितुमश-

---

१ ग्रन्थोऽयं प्रमेयरत्नार्णवोत्तरार्द्धाऽन्तर्गत इति तत्रैवाऽस्योचितं मुद्रणं तथापि तस्य दुर्मिलत्वादस्य च गभीरत्वादुपयोगित्वादिह मुद्रापितः ।

क्यत्वात् । अतस्तृतीयस्कन्धसुबोधिनीप्रदर्शितपद्धत्या पूर्वं ख्यातिर्विचार्यते । तत्र मनःसंयुक्तचक्षुरिन्द्रियेण शुक्तेः संयोगे तज्जन्यं सामान्यज्ञानमुत्पद्यते । इदं सामान्यज्ञानमिन्द्रियार्थसंयोगजन्यं संशयादीनां सर्वेषां ज्ञानानां पूर्वं सम्भवति । तत उद्भूतसत्त्वगुणस्य बुद्ध्या साहित्ये प्रमात्मकं ज्ञानं निश्चयशब्दवाच्यमुद्भवति । अत एव निबन्धे सर्वनिर्णय उक्तम्—'**सत्त्वसहिता बुद्धिः प्रमाण**'-मिति । '**संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथगि**'ति कपिलवाक्येन संशयादिज्ञानानां बुद्धिवृत्तित्वेन गणनात् । भागवतमते बुद्धेरेव विशिष्टज्ञानजनकत्वम् । '**द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रह**' इति बुद्धिलक्षणात् । अतो मनःसंयुक्तचक्षुषा सामान्यज्ञाने जनिते पश्चात्सत्त्वादिगुणसहितया बुद्ध्या तारतम्येनाऽनेकप्रकारकं जायमानं ज्ञानं संशयाद्युच्यते । अत एव सुबोधिन्यामुक्तं—**द्रव्यस्य घटादेः स्फुरणे सति शब्देन संस्कारेणाऽऽलोकेन वा, यद्विशिष्टज्ञानं यस्मात्केवलं चक्षुषा ज्ञाने तारतम्यं न स्यादिति** (?) । अत एव लक्ष्मीतन्त्रे त्रयोदशाध्याय उक्तम्—'**चक्षुषालोच्य वस्तूनि विकल्प्य मनसा तथा । अहम्मत्याप्यहंकाराद्बुद्ध्यैव ह्यध्यवस्यती**'ति । अन्ये तु प्रत्यक्षज्ञानमात्रं प्रति मनइन्द्रियविषयाणां कारणता, न तत्र बुद्धेर्निवेश इत्याहुः । अस्मन्मते तु भागवततृतीयस्कन्धीयवाक्यात्संशयादीनि ज्ञानानि बुद्धिरुत्पादयति । अतः प्रत्यक्षज्ञाने मनइन्द्रियविषयाणां सामान्यज्ञानोत्पादकत्वम् । बुद्धिस्तु विशेषाकारेण संशयादिशब्दवाच्यानि ज्ञानानि जनयतीति तेभ्योऽयमितरोऽस्माकं पन्थाः । तत्र चक्षुःशुक्तिसंयोगे सामान्यज्ञानोत्तरं माया भग-

वतः शक्तिस्तमोगुणोद्भवेन बुद्धिं व्यामोहयति तदेयं शुक्तिरिति बोधो न जन्यते। 'प्रमादमोहौ तमसो भवतोऽज्ञानमेव चे'ति भगवद्वाक्यात्तमसा ह्यज्ञानस्योत्पादितत्वात्।

तथा च पदार्थयाथात्म्यस्फुरणाभावान्मायामोहिता बुद्धी रजतसंस्कारप्राबल्याच्चाकचक्यादिधर्मसादृश्यमादाय रजतं तत्र निर्माति। तदिदं बौद्धमेव रजतं बुध्या विषयीक्रियते। न तु सामान्यज्ञाने चक्षुर्विषयीभूतमिति विवेकः। तदानीं रजतस्याभावात्सामान्यज्ञानानन्तरंबुध्या रजतोत्पादनात्। विशेषज्ञाने तु रजतस्य कल्पितत्वेनाऽऽन्तरत्वाद्बुध्यैव ग्रहणम्। नत्विन्द्रियैः। अतः सामान्यज्ञाने तु शुक्तिरेव विषयीभूता। तस्या एव सामान्यज्ञानम्। विशेषज्ञानं तु बुद्धिकृतमिति तत्र बौद्धमेव रजतं विषयीभवतीति निष्कर्षः। तदुक्तम्—"**अनुमितमन्तरा त्वयि विभाति मृषैकरस**' इत्यस्य सुबोधिन्याम्। '**रजतं तु तदनन्तरं बुद्ध्या जन्यते। विषयीक्रियते। तत्र सा बुद्धिरेव कारणम्। इन्द्रियार्थयोर्मध्ये भाति तन्मृषे**'ति निरूपितम्। अतएव प्रथमस्कन्धे '**तेजोवारिमृदां यथा विनिमय**' इत्यस्य सुबोधिन्यां '**तेजसि वारिबुद्धिर्मरीचितोये**' इत्यारभ्य, '**शुक्तिरजतादि**'ष्वित्यन्तेन, नानाभ्रमानुक्त्वा भ्रमविषयाणां बुद्धिजन्यतोक्ता '**यथा जीवानां बुद्धिकल्पिता**' इत्यनेन। निश्चयात्मके ज्ञाने त्विन्द्रियार्थ एव बुध्या गृह्यते। न तत्र बुद्धिकल्पितो विषयः। इन्द्रियतदर्थयोर्मध्ये यद्बुद्धावन्यदेव भाति तन्मृषा। तादृशं ज्ञानम्भ्रमात्मकम्।

एवं सति इन्द्रियेण गृह्यमाणाद्विषयाच्छुक्त्यादिरूपादन्यस्य रजतादेः ख्यातिरन्यख्यातिरित्युच्यते। तदिदं भ्रमात्मकं ज्ञानं बुद्धिवृत्तिरूपं विपर्यासशब्दवाच्यम्। अत एव '**विपर्यासो भिन्नार्थ-**

प्रतिपादक' इत्युक्तं सुबोधिन्याम्। 'भिन्नार्थ' इत्यत्रेन्द्रियसंयुक्तार्थाद्भिन्नोऽर्थ इत्यूह्यम्। एतावता निरुपाधिभ्रमे इन्द्रियाणि सन्तमेवार्थं विषयीकुर्वन्ति, नत्वसन्तम्। अत एवोद्धवं प्रत्युक्तं भगवता **'मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः। अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसे'**ति। बुद्धिस्तु प्रमात्मके निश्चयाऽपरपर्याये ज्ञाने सन्तं विषयीकरोति। विपर्यासज्ञाने तु स्वकल्पितं रजतादिकं मायिकमेव विषयीकरोति। अत इन्द्रियविषयो बाह्य एव। अत एव **'सर्वं पुरुष एवेद'**मिति द्वितीयस्कन्धश्लोकव्याख्यान उक्तम्। **'इदमपि परिदृश्यमानं जडात्मकं सर्वं पुरुष एवे'**ति। इन्द्रियतद्विषययोर्मध्ये मायादूषितबुद्ध्या यो विषयीक्रियते स त्ववास्तव एव बुद्धिकल्पित इति ज्ञेयम्। मायावादिनस्तु शुक्तिरूपाधिष्ठाने उत्पन्नेनाऽनिर्वचनीयेन रजतेन चक्षुःसन्निकर्षे रजतमिदमिति भ्रमो भवेत्। न तत्र शुक्तिसामान्यज्ञानस्य हेतुत्वं प्रयोजनाभावादित्याहुः। तन्मन्दम्। शुक्तेश्चाकचक्यादितिबुद्धेरुत्पादितत्वात्। शुक्तिसामान्यज्ञानकारणताया अनिर्वचनीयत्वात्। केचित्तु माययाऽनिर्वचनीयमुत्पादितं रजतं चक्षुषोपलभ्यतेऽतो न रजतभ्रमेऽधिष्ठानसामान्यज्ञानस्य हेतुत्वमिति वदन्ति। तदप्ययुक्तम्। मायोत्पादितरजतस्य विद्यमानत्वे तत्कृतशुक्तिज्ञानप्रतिबन्धात्कदापि शुक्तिज्ञानं न भवेत्। रजतनाशहेतोरन्यस्याऽभावात्। कदापि रजतध्वंसाऽभावात्। रजतज्ञाने सत्यपि शुक्तिज्ञानमिति त्वनुभवविरुद्धत्वान्नाद्रियते विद्वद्भिः। तथा चाधिष्ठानरूपशुक्तिविषयकविशेषज्ञानाऽभावात्कदापि रजतध्वंसो न स्यात्। एवं सति सदैव रजतप्रत्यय आपद्येत। यदि तु मायया विरचितं माययैव ध्वंस्यत

इत्युररीक्रियेत, तदा तु दार्ष्टान्तिके प्रपंचे तथैव स्वीकार्यत्वान्मायाघटितः प्रपंचो माययैव नष्टो भविष्यतीति व्यर्थो ज्ञानप्रयासो वेदान्तशास्त्रवैयर्थ्यं च। ज्ञाननाश्यः प्रपंच इति भवत्सिद्धान्तोऽपि नाशं प्रापेत्याकलनीयम्। अत एवामनापायनं हरेरित्यस्य व्याख्याने **'मायया कृतो योऽन्तरासर्गः स त्वपार्थ एवाभात्यन्तराभानात्तत्र स्पर्शे च ब्रह्माऽवभानात्तदैव गच्छतीति निर्मूलत्वमि'**त्याद्युक्तम्। **मध्यस्थमात्रानुवादो वा मायावादिवदि**त्यप्युक्तम्।

अतो ज्ञायत इन्द्रियविषययोः सम्बन्धे सामान्यज्ञानानन्तरं यद्बुद्धौ माया मायिकं पदार्थं निर्माय बुद्धिविषयीकारयति तद्बौद्धं ज्ञानं भ्रमात्मकम्। तद्विषयश्च मायिको बौद्धो घटादिः। अयमेव बुद्धौ भातः पदार्थ आन्तरालिकी सृष्टिरित्युच्यते। तस्यैव मिथ्यात्वम्। न तु भगवत्कृतप्रापंचिकघटपटादेरतो महता यत्नेन परिदृश्यमानप्रपंचस्य मिथ्यात्वं दूरीकृतवान्भगवान्भाष्यकारः। औपाधिके 'घटो भ्राम्यति' 'शंखः पीत' इत्यादिभ्रमे तु चक्षुर्ग्राह्ये घटशंखादौ भ्रमरिकाकामलाद्युपाधिं पुरस्कृत्य भ्रमणपीतत्वादिरूपो मायिको धर्मो विषयतारूपो मायया सृज्यते। स च धर्मो धर्मिणां घंटाशंखादीनां चाक्षुषे चक्षुषा गृह्यते। अत एवोक्तं सुबोधिन्याम्—**'विषयता मायाजन्या विषयो भगवानिति। विषये विषयता काचित्स्वीकर्तव्या। अन्यथा भ्रमदृष्टिर्निर्विषया स्यादिति। विषयताजनितं ज्ञानं भ्रमात्मकम्। विषयजनितं प्रमेति च'**। तथा च तं भ्रमणपीतत्वादिरूपं मायिकं धर्ममवलोक्य मायया मोहिता बुद्धिर्धर्मिणं शंखादिमिव पीतत्वादिकमपि वस्तुभूतं निर्धार्य तद्विशिष्टं शंखं स्वीकरोति। तदा तद्भ्रमात्मकं ज्ञानं भवति। एवं सति बुद्ध्या

पीतत्ववैशिष्ट्येन कल्पित एव शंखो मायिकः । न तु चक्षुर्गृहीतः । न च चक्षुषा गृहीतस्य घटस्य भगवत्त्वं न सम्भवति । भगवत इन्द्रियाग्राह्यत्वादिति वाच्यम् । 'न चक्षुषा गृह्यते' इत्यादिश्रुतीनां मूलरूपपरत्वाद्गृह्यमाणघटस्य भगवतः सदंशत्वाद्ग्राहकस्येंद्रियस्यापि भगवत्सदंशत्वेनाऽदोषाच्च । ग्राह्यस्य घटस्य विषयतावैशिष्ट्येन शुद्धत्वाभाववद्ग्राहकस्येन्द्रियस्यापि विषयतावैशिष्ट्येन तुल्यत्वाच्च । सोऽयमौपाधिकधर्मो रजतादिभ्रमवन्नाधिष्ठाननाश्यः । कामलादिदोषो भ्रमरिकादोषश्च यदा नश्यति तदैव नश्यति । भ्रमरिकादशायां 'घटे भ्रमणं नास्ती'तिज्ञानवतोऽपि भ्राम्यतीतिप्रतीतेः सर्वजनीनत्वात् ।

एवं च निरुपाधिके रज्जुभुजंगादिभ्रमे चक्षुषा सद्रूपैव रज्जुर्गृह्यते । भुजंगस्तु बुद्धिकल्पितो बुद्ध्या विषयीक्रियते । न चक्षुषा । बुद्धिकल्पितस्य भुजंगस्य बाह्यत्वाभावात् । दशमस्कन्धजन्मप्रकरणचतुर्थाध्यायसुबोधिन्यां **'यथाऽनैवंविदो भेद'** इत्यस्य विवरणे **'बुद्ध्या बहिर्विषयोत्पादनासम्भवादि'**त्युक्तत्वात् । औपाधिकभ्रमे तु चक्षुषा सद्रूपो घटो, मिथ्याभूतो विषयतारूपो भ्रमणधर्मश्चेत्युभयं विषयीक्रियते । तदनन्तरं सदोषबुद्ध्या 'घटो भ्रमणवा'निति स्थाप्यत इति विशेषः । इमामेव विषयतां भ्रमणादिरूपां विषयेण सह गृह्यमाणामवमृश्येन्द्रियग्राह्यस्यापि मिथ्यात्वं क्वचिद्भागवते, सुबोधिन्यां चोक्तम् । विषयेण घटेन सह विषयतारूपभ्रमणस्यापि चक्षुर्ग्राह्यत्वात् । अत्रापि बौद्ध एव घटो मिथ्या, न तु प्रपंचान्तर्वर्तीति निष्कर्षः । इदमत्र ज्ञेयम् । प्रपंचविचारे भ्रमणवद्घट एव दृष्टान्तः[१] । तत्र यथा घटस्य सत्यत्वं भ्रमणस्य

१ योग्यः स्यादिति शेषः ।

मायिकत्वं एवं प्रपंचस्यापि सत्यत्वं तद्गतानां भेदकुत्सितत्वोत्पत्तिनाशादीनां मायिकत्वम् । अत एवोद्धवं प्रत्युक्तं भगवता **'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमय'**मिति । 'नश्वर'मितिपदाद्यन्नश्वरं गृह्यते तदेव मायामयमितस्तु परं सत्यमेवेत्यर्थः स्फुटति । एतच्चौपाधिकभ्रमे स्फुटम् । अत एव **'नाशोत्पत्तिप्रतीतिर्भ्रान्ते'**ति विद्वन्मण्डने प्रभुचरणैर्निरूपितम् । अतो न प्रपंचस्य शुक्तिरजतादिर्दृष्टान्तः । अत एव शास्त्रार्थप्रकरणे **'वाचारम्भणवाक्यानी'**तिकारिकाव्याख्याने **'न तु मिथ्यात्वं शुक्तिरजतवत् । अन्यथा शुक्तिरजतादिकमेव दृष्टान्तीक्रियत'** इति श्रीमदाचार्यैरुक्तम् । अन्यच्च यथा घटावच्छिन्नगगनमहाकाशयोर्वस्तुतो भेदाभावेऽपि घटोपाधिकृतो ह्यवास्तवो भेदस्तथा विषयताविशिष्टतद्रहितजगतोरिति ज्ञेयम् । दृष्टान्ते घटाकाशश्चलतीतिप्रतीतावपि चलनं वस्तुतो घटधर्मः । न तु तदवच्छिन्नस्य । एवं विषयताविशिष्टे जगति उत्पत्त्यादिप्रतीतावपि उत्पत्त्यादि विषयताया एव धर्मः । न तु तदवच्छिन्नस्य घटाकाशमहाकाशयोरभेदवद्विषयताविशिष्टतद्रहितयोरभेदेन वस्तुतस्तदवच्छिन्नजगतोऽपि । ब्रह्मरूपत्वात् । अत एव श्रीमदाचार्यैर्द्वितीयस्कन्धसुबोधिन्यां **'वस्तुतो मूलभूतं जगत्प्रतीतितो मायिक'**मित्यवादि । एवं संसारिजीवशुद्धजीवयोरप्यवास्तवो भेदः संसाररूपोपाधिकृत एव । शुद्धजीवस्य भगवदंशत्वेन संसारिजीवस्यापि तदभेदेन शुद्धब्रह्मरूपत्वात् । मिथ्यात्वं तु संसाररूपोपाधिपर्यवसन्नम् । अत एव निबन्ध उक्तं **'जीवसंसार उच्यत'** इति । **'उच्यते न तु जायत इति । असत्त्वेनाऽस्य गणना'**दिति व्याख्यातञ्च । अत

एव य एव बद्धस्तस्यैव साधनसम्पत्तौ मुक्तिरिति बन्धमोक्षव्यवस्था च सम्यगुपपद्यते । न चैवं जगत्कर्तृत्वादिविशिष्टतद्रहितब्रह्मणोरप्यौपाधिकभेदाङ्गीकारे स्वसिद्धान्तविरोध इति वाच्यम् । 'यतो वा इमानि भूतानि जायन्ते' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' 'स आत्मानꣳ स्वयमकुरुत' इत्यादिश्रुतिसिद्धस्य जगत्कर्तृत्वादेर्नित्यसिद्धस्य धर्मस्योपाधित्वाभावात् । अतो जगत्कर्तृत्वादिश्रौतधर्मविशिष्टं निरुपाधिकमेव, न तु सोपाधिकमिति । न ब्रह्मणि सोपाधिकत्वनिरुपाधिकत्वकल्पनेत्यन्यत्र विस्तरः ।

तथा च सिद्धं विषयतावैशिष्ट्येन प्रपंचस्य सत्यत्वं मिथ्यात्वञ्च । एवं स्वमते प्रपंचस्य पारमार्थिकविचारे ब्रह्मात्मकत्वेन सत्यत्वम् । परमते तु व्यवहारे सत्यत्वं पारमार्थिके मृषात्वमिति भेदो ज्ञेयः । ननु 'निरुपाधिके शुक्ताविदं रजत'मिति भ्रमे पूर्वमुत्पन्नसामान्यज्ञानानन्तरं बुद्ध्या रजतमुत्पाद्य विषयीक्रियते । तथा दार्ष्टान्तिके भगवदात्मकप्रपंचश्चक्षुषा गृह्यते, मायामोहितबुद्धिकल्पितोऽन्तरासर्गो विषयीक्रियत' इति यदुक्तं तन्न सम्भवति । रजतसंस्कारवदान्तरालिकपदार्थसंस्कारोपलब्ध्यभावादिति चेत् । न । पूर्वकल्पमारभ्याऽऽन्तरालिकपदार्थानुभवसत्त्वेन तत्संस्कारस्य सुवचत्वात् । अतः सुखेन रजतवदन्तरालिको बौद्धो घटादिरुत्पद्यते । किं च दृष्टान्ते यथा रजतभ्रमानन्तरं, धर्मविशेषज्ञाने शुक्तिरूपाधिष्ठाने ज्ञाते रजतं बौद्धं विलयमेति । तथाऽत्र चक्षुःसंयुक्तप्रपंचविषयके ब्रह्मत्वज्ञाने उत्पन्ने बौद्ध एव प्रपंचो नश्यति । न तु चक्षुर्गृहीतोऽयमित्यर्थः । दशमस्कन्धप्रक्षिप्ताध्यायतृतीयाध्याये

'रज्वामहेर्भोगभवाभवौ यथे'त्यस्य सुबोधिन्यां 'भवाभवावुत्पत्तिनाशौ। सर्पोऽयं, नायं सर्प इति। स्वबुद्धिकल्पितस्यैव नाशो नान्यस्ये'त्युक्तत्वात्। अत एवाऽयं प्रपंचो न प्राकृतः। नापि परमाणुजन्यः। नापि विवर्तात्मा। किन्तु परमकाष्ठापन्नवस्तुकृतिसाध्यः। तादृशोऽपि भगवद्रूप' इति निबन्धोक्तिर्युज्यते। 'विषयो भगवानि'त्युक्तिश्च। यत्तु 'आधिदैविकः प्रपंचो भिन्नः स भगवद्रूपः। अयं प्रतीयमानस्तु ततो भिन्नो मृषैवे'त्याहुस्तन्न। आधिदैविकस्यातीन्द्रियत्वेन चक्षुरादिग्राह्यत्वाभावादधिष्ठानचाक्षुषसामान्यज्ञानाभावेन चाक्षुषभ्रम एव न स्यात्। चाक्षुषभ्रमं प्रति चाक्षुषसामान्यज्ञानस्य कारणत्वात्। तस्मादयमेवास्मदादीन्द्रियैर्गृह्यमाणः प्रपंचो ब्रह्मात्मकः। अस्मिन्नेव प्रपंचे मायामोहितबुद्ध्या मायिकः प्रपंचः कल्प्यते। तस्यैव मिथ्यात्वम्। स हि आन्तरो न बाह्यः। न त्वस्य[१]। अन्यथा सिद्धान्तमुक्तावल्यां 'अपरं तत्र पूर्वस्मिन्वादिनो बहुधा जगु'रित्युक्त्वा, 'मायिकं सगुणं चे'त्यादिना परमतान्युपन्यस्य 'तदेवैतत्प्रकारेण भवती'त्यन्तोक्तिरपि विरुध्येत। एवं तस्य मिथ्यात्वाऽङ्गीकार आधिदैविकस्य चक्षुराद्यविषयीभूतस्य सत्यत्वाऽङ्गीकारेण परमतस्वमतयोर्भिन्नविषयत्वेन निराकरणाऽनर्हत्वात्। न हि परे आधिदैविकं प्रपञ्चं मृषा वदन्ति, यदुपरि दूषणानि स्युः। अपि च परिदृश्यमानस्याऽऽविर्भावतिरोभावौ स्वीकृत्य भावविकारप्रतीतेर्मिथ्यात्वमंगीकृत्यैतस्य प्रपंचस्य ब्रह्माऽभिन्नत्वं भाष्यनिबन्धविद्वन्मण्डनादौ सर्वत्र स्वीकृतं तदपि विरुध्येत। प्रतीयमानप्रपञ्चस्य मृषात्वाङ्गीकारेण तादृक्प्रपञ्चे

---

१ मिथ्यात्वमिति शेषः।

जायमानानां नाशोत्पत्त्यादिप्रतीतीनामभ्रान्तत्वेन भ्रान्तत्वकथनस्यैव दूष्यत्वापत्तेः। परिदृश्यमानस्य मिथ्यात्वाऽङ्गीकारे दूष्यग्रन्थस्वग्रन्थयोरैक्यापत्तेश्च। अन्यच्च **'मुक्तिः कल्पितवाक्यत'** इत्यादि निबन्धवाक्यैर्गुर्वादीनां कल्पितत्वञ्चाऽऽपद्येतेत्यादिदूषणपुञ्जानां परमत आपादितानां स्वमत आपत्तिरतोऽस्य परिदृश्यमानजगतो मायिकत्वं नाऽऽदर्तव्यं सुधीभिः। पुराणेषु क्वचिदान्तरालिकीं सृष्टिं, क्वचिद्विषयतां, क्वचिदहन्ताममतात्मकं संसारमवलम्ब्य मायिकत्वोक्तिः। क्वचिद्वैराग्यार्थञ्च। न वस्तुस्वरूपनिरूपणायेति स्थितमाकरे।

अतोऽयं प्रपंचो ब्रह्मात्मक इति सिद्धान्तो निर्दुष्ट एव। न च बुद्धिकल्पितमेव रजतं मायादोषादिवशाद्बहिर्निःसृतं चक्षुषा गृह्यते ततश्चक्षुर्ग्राह्यस्यापि रजतस्य मिथ्यात्वं कुतो नेति वाच्यम्। भुजङ्गाधिष्ठानकरज्जुस्पार्शनभ्रमे व्यभिचारात्। तथाहि—तमःसंघाते हस्तेन भुजंगस्पर्शे स्पार्शनसामान्यज्ञानानन्तरं तमोगुणोद्रेकेण माया जीवबुद्धिं व्यामोहयति। तदा भुजंग इति बोधो नोत्पद्यते। ततो रज्जुसंस्कारेण बुद्धौ रज्जुं निर्माति। तद्बौद्धी रज्जुर्बहिश्चेन्निस्सरेत्तर्हि करेण गृह्येतैव। भुजंगस्य तु हस्तस्पर्शो न स्यात्। रज्ज्वा व्यवधानात्। तथा सति को वा दशेत्। लोके तु तादृशस्थले भुजंगस्पर्शस्तत्कृतो दंशश्च श्रूयते। अतो बुद्धिकल्पिताया रज्जोरन्तःस्थिताया बुद्धिविषयत्वमेव। नेन्द्रियविषयत्वम्। इन्द्रियविषयस्त्वधिष्ठानरूपो भुजंग एवेति ज्ञेयम्। अत एव दशमषष्ठाध्याये **'यथोरगं सुप्तमबुद्धिरज्जुधी'**रित्यस्य व्याख्याने **'रज्जुबुद्ध्या गृहीतः सर्पः स्वस्पर्शेऽपि न ज्ञानं जनयती'**त्युक्त्याऽधिष्ठानरूपसर्पस्पर्श उक्तः। एवं शुक्तिरजतादिस्थलेऽपि बोध्यम्। एतेन शुक्त्याद्यधिष्ठाने माय-

योत्पादितमनिर्वचनीयं रजतादिकं चक्षुरादीन्द्रियग्राह्यमितिवदन्तोऽपि प्रत्युक्ताः। भुजंगाधिष्ठानकरज्जुस्पार्शनभ्रमे ह्यनिर्वचनीयाया रज्जोस्त्वगिन्द्रियेण ग्रहणादधिष्ठानरूपेण व्यालेन त्वक्सम्बन्धाऽभावाद्भुजङ्गकृतदंशाभावनियमापत्तेः। त्वगिन्द्रियगोलकयोरेकवस्तुसम्बन्धनियमात्। त्वगिन्द्रियगोलकाभ्यां रज्जोः सम्बन्धात्तस्या व्यावहारिकसत्तास्वीकारेणाऽर्थक्रियाकारितया तद्रज्जुकृताधिष्ठानव्यवधानादिति दिक्। न च सर्पस्पर्शे स्पार्शनरज्जुभ्रमे यावद्भ्रममनिर्वचनीयया रज्ज्वा सह पुरुषहस्तादिसम्बन्धेऽपि भ्रमनिवृत्त्युत्तरं सर्पस्पर्शात्तत्कृतदंशे को दोष इति वाच्यम्। रज्जुज्ञानोत्पत्त्यव्यवहितसमये भ्रमनिवृत्तेरसम्भवात्। अन्यथा भ्रमनिवृत्तिरनुभूयेत। न च सूक्ष्मकाले जायमाना भ्रमनिवृत्तिर्नानुभवयोग्या तत्कालस्य शतपत्रवेधवद्दुर्लक्ष्यत्वादिति वाच्यम्। भ्रमनिवृत्तेरधिष्ठानज्ञानसाध्यत्वेन तद्विरहे तस्या एवाऽसम्भवात्। न च दंशाऽतिरिक्तकारणेनाधिष्ठाने ज्ञाते भ्रमनिवृत्तौ रज्जोर्नाशादधिष्ठानसंयोगे दंशः सुवच इति वाच्यम्। यत्र दंशहेतुकमधिष्ठानज्ञानं तत्र दंशात्पूर्वं भ्रमनिवृत्तेर्वक्तुमशक्यत्वेन भ्रमसमय एव दंशस्वीकार्यत्वाद्दंशस्य त्वधिष्ठानसम्बन्धहेतुकत्वाद्भ्रमाऽवसर एवेन्द्रियाऽधिष्ठानयोः सम्बन्धप्राप्तेर्भवद्राद्धान्तविरोधात्। एवं मायामोहितबुद्धिकल्पितो मिथ्याभूतः प्रपंचोऽपि तादृशबुद्धेरेव विषयो नेन्द्रियविषय इति विद्वद्भिर्विभावनीयम्।

एवं साधितेऽपि स्वसिद्धान्त एकादशस्कन्धोदितनवयोगिप्रसंगीयप्रश्नोत्तरवाक्येषु पदार्थशोधनाभावाद्भ्रमः सम्भवति। तथा सति साधितोऽपि राद्धान्तः शिथिल इव प्रतिभायादतः साधितराद्धान्तदा-

र्थाय नवयोगिप्रसङ्गीयप्रश्नोत्तरवाक्यानां तत्रत्यसुबोधिनीवाक्याना-ञ्चाऽर्थः पूर्वपक्षोत्तरपक्षनिरूपणपूर्वकं विमृश्यते ।

तथा हि—एकादशे निमिनवयोगिप्रसंगे **'परस्य विष्णोरीशस्य मायिनामपि मोहिनीम् । मायां वेदितुमिच्छाम'** इति निमिना मायास्वरूपे पृष्टेऽन्तरिक्षेण **'एभिर्भूतानि भूतात्मे'**त्यादिना सृष्टि-र्निरूपिता । तेन मायायाः स्वरूपप्रश्नात्तदनुरूपमेवोत्तरेण भाव्यम् । इह तु प्रपंचोत्पत्तिरुत्तरे निरूपिताऽतो ज्ञायते प्रपंचो मायाकार्यः । अन्यथा मायाप्रश्ने कृते प्रपंचमुत्तरे न वदेत् । तथा च प्रपंचनि-रूपणे माया निरूपिता भवतीति मायायाः कार्यलक्षणं सिध्यति । एवं सति प्रपंचस्य मायिकत्वमायाति, न ब्रह्मतेति, पूर्वपक्षे स्वसि-द्धान्तं वक्तुं प्रपञ्चस्य भगवदात्मकत्वसाधनाय श्रीमदाचार्यचरणा अ-न्तरिक्षदत्तोत्तराशयं विशदयितुं मायाशब्दस्य शक्तिं निरूपयन्ति— **'मायाशब्दः शास्त्रेष्वि'**त्यारभ्य **'तथा प्रयुक्तः शब्द'** इत्यन्तेन । तथा च, भगवतः सर्वभवनसामर्थ्यरूपा माया, व्यामोहिका माया, ऐन्द्रजालिकविद्या, कापट्यादि चेति चत्वारो मायाशब्दार्थाः । नन्वत्र भगवतः सर्वभवनसामर्थ्यरूपा माया, व्यामोहिका माया च पृथग्गणिता । व्यासः समाधौ तु **'अपश्यत्पुरुषम्पूर्णं मायां च तदुपाश्रयाम् । यया सम्मोहितो जीव'** इति वाक्याद्व्यामोहिकैव मायां दृष्टवान् । समाधेश्च मुख्यं प्रामाण्यम् । तथा च मायाया व्यामोहकत्वमेव । न सर्वभवनसामर्थ्यरूपतेत्याशंक्य समादधते— **'समाधावपी'**त्यादिना । सर्वभवनसामर्थ्यरूपाया मायाया एव रूपा-न्तरं व्यामोहिका मायाऽतो व्याससमाधावेकस्या एकोक्तिस्तयैव द्वितीयाऽप्यायातीति न कश्चिद्दोषः । नन्वत्र तु प्रपंचसृष्टिरुत्तरे निरू-

पिता । न तु पूर्वोक्तेषु चतुर्ष्वन्यतरदित्याशंक्याहुः—'**प्रवाह**'-स्त्विति । तुशब्दः प्रकारान्तरबोधकः । तथा चाऽत्र मायाशब्देन सर्वभवनसामर्थ्यरूपमायाकरणकः सृष्टिप्रवाह उच्यत इत्यर्थः । अतश्चतुर्ष्वेवान्तर्भाव इति भावः । तस्य प्रवाहस्य स्वरूपमाहुः—'**स च भगवत्कृतो भगवद्रूपश्चे**ति । 'आत्मान ँ स्वयमकुरुते'-त्यादिश्रुतिः । अत एव निबन्ध उक्तं '**प्रपञ्चो भगवत्कार्यस्तद्रूप**' इति । नन्वेवं प्रपञ्चस्य भगवद्रूपत्वे तत्र मायाशब्दप्रयोगो नोचित इत्याशंक्याहुः—'**विषयैश्च व्यामुग्धाः सर्वे भवन्ती**'ति । तथा च विषयरूपस्य प्रपंचस्य विचित्रत्वेन व्यामोहकत्वात्प्रपंचे मायाशब्दः प्रयुक्तो न तु मायिकत्वमभिप्रेत्येत्यर्थः । एवं सर्वभवनसामर्थ्यं, व्यामोहिका माया, ऐन्द्रजालिकविद्या, कापट्यं, मायाकरणको भगवदात्मकः प्रपञ्चश्चेति पञ्चसु पदार्थेषु मायाशब्दं शिष्टाः प्रयुञ्जन्ते । तेष्वत्र कोऽर्थो वाच्यत्वेन युक्त इत्याहुः—'**अतोऽत्र चे**'ति । सिद्धान्तमाहुः—**माया शक्तिर्भगवत** इति । '**मम माया दुरत्यये**'ति गीतोपनिषद्भ्यः । अत एवाहुः—'**नात्र कार्येति**' । तर्हि विचारस्य कोपयोग इत्याशंक्याहुः—'**समाधौ त्वि**'त्यादि । व्यासकृतसमाधौ तु व्यामोहकत्वेन मायाया दर्शनात्तत्र तादृश्यां व्यामोहिकायां शक्त्यां मायाशब्दप्रयोग उचितः । अत्र तु सृष्टिप्रवाहे मायाशब्दप्रयोगः किम्प्रयोजकः किन्निबन्धन इति विमृश्यत इत्यर्थः । '**विचारे**' इति । विचारे क्रियमाणे '**भगवद्वाक्यं**' '**ऋतेऽर्थं यत्प्रतीयते**'ति वाक्यमित्यर्थः । '**लक्षण**'मिति । व्यामोहिकमायाया ज्ञापकमित्यर्थः । लक्षणस्य स्वरूपमाहुः—'**कार्यगोचर**'मिति । कार्यलक्षणमित्यर्थः । एवं व्यामोहिकामायायाः कार्यलक्षणमुक्तम् ।

नन्वेतस्या व्यामोहिकाया एव कार्यं जगदित्येव मन्तव्यम् । बहुभिराहतत्वात् । ततश्चैतस्य विश्वस्य मिथ्यात्वमेवोररीकार्यमित्याशंक्य, नेदं जगद्व्यामोहिकायाः कार्यमपि तु स्वसर्वभवनसामर्थ्यरूपमायाय भगवानेव स्वात्मस्वरूपं जगन्निर्मिमीत इत्याहुः—**'सुवर्णजलवत्कार्येति'** । यथा सञ्चायकप्रतिमां मृदा निर्माय तत्र सुवर्णजलं निःक्षिप्यते ततः सञ्चायकप्रतिमाकारा सुवर्णप्रतिमाऽनायासेन सिध्यति । तथा सर्वप्रकृतिरूपां मायां सञ्चायकस्थानापन्नां कृत्वा स्वात्मरूपं जगद्भगवान्विरचयत्यतो न मायिकं किन्तु ब्रह्मात्मकमेवेत्यर्थः । एवं सति त्वत्पुराणेऽपि[1] जगतो भगवत्त्वमुक्तं परन्तु प्रकारभेदेनेत्याचार्यवर्याणामाशयः । तत्र पुराणे यः प्रकारः सोऽयं सञ्चायकदृष्टान्तेन **'सुवर्णजलवदि'**तिकारिकया स्फुटीकृतः । तथा च मायायाः संचायकत्वेन सृष्टौ भगवताऽङ्गीकृतत्वात्सृष्टिप्रवाहे मायाशब्दः प्रयुज्यते । तथा सतीह निमिनवयोगीश्वरप्रसंगे मायाशब्देन सृष्टिप्रवाह उच्यत इति निष्कर्षः । एवं च सुबोधिन्यामतोऽत्र किं युक्तमिति पूर्वमुक्तया फक्किकया कृतस्य प्रश्नस्य सृष्टिप्रवाहो मायाशब्दवाच्यत्वेनाऽस्मिन्प्रसंगे युक्त इत्युत्तरं सम्पन्नम् । इत्थं मायाशब्दवाच्यस्य सृष्टिप्रवाहस्य संचायकरीत्या निर्माणाद्भगवत्त्वम् । एतदभिसन्धायैव पूर्वमुक्तम् । **'स च भगवत्कृतो भगवद्रूपश्चेती'**ति । वेदे तु मायारूपसाधननैरपेक्ष्येण भगवान्स्वात्मस्वरूपं जगत्करोतीति विभेदः । एतदेव प्रथमस्कन्धे **'सदसद्रूपया चासा'**वित्यस्य सुबोधिन्यां स्फुटमकारि । **'घटितपूरणपात्रभेदवद्वैदिकपौराणिकजगतोर्भेद'** इत्यनेन । तत्रैव सुबोधिन्यां सर्वप्रतिकृतिरूपत्वं मायाया

---

१ पुराणवाक्येऽपीत्यर्थः ।

निरूपितम् । तथा च घटितसुवर्णप्रतिमा यथा सुवर्णात्मिका तथा पूरितप्रतिमापि सुवर्णात्मिकैव । संचायकरीत्या जगन्निर्माणप्रयोजनमत्रैव सुबोधिन्यामुक्तम् । 'एवं सति सृष्टिः सुगमा भवती'ति । संचायकरीत्या प्रतिमानिर्माणे सौकर्यं लोके स्फुटम् । एवं मायासाधननिरपेक्षतया वेदे निरूपितम् । जगन्मायासंचायकत्वेन पुराणे निरूपितम् । जगच्च भगवदात्मकमेव । एवं श्रुतिपुराणसिद्धोऽस्मत्सिद्धान्त इति मङ्गलमखिलम् ॥

**इति श्रीमद्गोवर्धनधरश्रीवल्लभाचार्यश्रीविट्ठलेश्वरचरणाऽनुचरलालूभट्टोपनामबालकृष्णभट्टविरचिते प्रमेयरत्नार्णव उत्तरार्धे ख्यातिविवेकः समाप्तः ॥**

---

॥ श्रीः ॥

श्रीगोपीजनवल्लभाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
# गोस्वामिश्रीमत्पुरुषोत्तमविरचितो
# भेदाभेदस्वरूपनिर्णयः ।

## द्वितीयो मणिः ।

ब्रह्माभेदोपासनाज्ज्ञानतो वा ब्रह्मात्मैक्येऽप्यंशतामत्यजन्तः ।
यस्यैश्वर्यादासते यन्नियम्यास्तं श्रीकृष्णं देवदेवं नमामि ॥१॥

ननु ब्रह्मात्मैक्यस्य भेदाऽत्यन्ताऽभावरूपत्वादंशत्वाऽत्यागो भगवन्नियम्यत्वं च यदुक्तं तत्कथमितिचेत् । उच्यते—

ब्रह्मात्मैक्येऽप्यभेदोऽस्य किं भेदसहनक्षमः ।
किं वा तदक्षमः श्रुत्या सिद्ध्यत्येतद्विचार्यताम् ॥ १ ॥

अत्राह—तदक्षम इति । कुतः ? । अद्वैतश्रुत्या शुद्धस्याऽभेदस्यैव बोधनात् । 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति नानात्वदर्शनेऽनिष्टश्रवणाच्च । सिद्धे ब्रह्मणोऽद्वितीयत्वे भेदस्याऽशक्यवचनत्वात् । न च नानात्वं न भेदः, किन्तु सङ्ख्येति शङ्क्यम् । 'बहुस्या'मितिश्रुत्या तस्या उपादेयतया भगवदिच्छागोचरत्वेन निन्दानर्हत्वात् । 'स्या'मिति क्रिययैकत्वविशिष्टस्याऽहंपदबोधितस्य

कर्तृत्वश्रावणेन तस्या एकत्वाऽविरुद्धत्वनिश्चयात् । न चैवमेकत्वबहुत्वयोरविरोधे एकत्वेनैव बहुत्वकार्यसंभवात्तद्वैयर्थ्यमिति शङ्क्यम् । अनयैव श्रुत्यैकत्वेन बहुत्वकार्यासम्भवस्य निश्चयात् । अन्यथा तद्वैयर्थ्यापत्तेः । न च भेदं विना नानात्वाऽसम्भवात्तस्यापीच्छागोचरत्वमिति शङ्क्यम् । **'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती'**तिश्रुत्येषदपि भेददर्शने निन्दाश्रवणेन तस्येच्छाविरुद्धत्वनिश्चयात् । अन्यथा भेदनिन्दाश्रुतिवैयर्थ्यापत्तेः । तस्माद्भेदस्य सर्वथाऽभेदविरुद्धत्वात्सृष्टिदशायामेवाऽभेदस्य भेदसहिष्णुत्वमिति न मुक्तिदशायां तथात्वमतस्तदानीं जीवब्रह्मणोर्भेदाभावरूप एवाऽभेदः । स चोभयोर्विरुद्धधर्मसद्भावे सर्वथा न सम्भवतीति भागत्यागलक्षणया जीवब्रह्मणोर्धर्मान्निरस्य केवलं स्वरूपेणैव सिद्ध्यतीत्येकः पक्षः ।

यद्वा **'एकमेवाद्वितीय'**मित्यादिश्रुतौ द्वितीयनिषेधेन प्रतिपाद्यमानमेकत्वमभेद एव पर्यवस्यति । स च सृष्टिपूर्वदशायामेव । सृष्टिदशायां तु **'आत्मा वाऽरे श्रोतव्य'** इत्यादौ जीवब्रह्मणोः श्रवणादिकर्तृकर्मत्वबोधनाद्भेद एव । अत एव **'अधिकं तु भेदनिर्देशा'**दित्यत्र व्यासचरणैर्भेदः प्रतिपादितः । एवं जगतोपि भेद एव । **'बहु स्या'**मितिश्रुतौ **'इद ँ सर्वमसृजते'**त्यनेन सृज्यस्रष्टृभावश्रवणात् । स च यावत्सृष्टि सत्यः । यत्ताव**'त्तत्त्वमसि'** **'अयमात्मा ब्रह्मे'**त्यादौ जगतो ब्रह्मत्वश्रवणं तत्तु **'तद्गुणसारत्वात्तद्व्यपदेश'** इति सूत्रा**'त्तज्जलानि'**तिश्रुत्युक्तयुक्तेश्चौपचारिकः । भोगादिव्यवस्थया कार्याणां परस्परवैलक्षण्यप्रमया च भेदस्यैव निश्चायनात् । अन्यथा **'श्रोतव्य'** इत्यादिसाधनबोधकश्रुतिविरोधेन मुक्त्युच्छेद-

प्रसङ्गात् । एवं जगतोऽपि कार्यत्वबाधप्रसङ्गाच्च । तस्मात्सृष्टिदशायामभेद औपचारिक एव ।

एव '**मनुच्छित्तिधर्मा**' इत्यनेन श्रावितं धर्माणां नित्यत्वमपि देवाऽमरन्यायेन यावत्सृष्टि । स्वरतीच्छायां प्रलये जीवानां सर्वेषां लीनत्वेन श्रोतॄणामभावे श्रोतव्यत्वस्येव जगल्लये जगत्कर्तृत्वस्यापि तिरोधानात् । एवमन्येषामपि बोध्यम् । एवं रमणादिलीलानामपि तथात्वम् । '**स वै नैव रेमे**' इति श्रुत्या सृष्ट्यारम्भकाले रमणाभावश्रवणात् । एवमनित्यत्वे सर्वेषां सिद्धे प्रलयदशायां केवलं ब्रह्मैवाऽद्वितीयमिति सिध्यति । तथा जीवस्य मुक्तिदशायां ब्रह्मभावाद्ब्रह्मैव केवलं सिध्यति । तथा चाऽभेदप्रतियोगिनां जीवानां जगतश्च लयात्प्रलयदशायां मुक्तिदशायां च निवृत्ते भेदे केवल एवाऽभेदः पर्यवस्यतीतिप्राप्ते—

उच्यते । **भेदसहनक्षम** इति । कुतः ? । सत्कार्यवादस्यैव श्रौतत्वेन सृष्टिपूर्वदशायामपि सर्वसत्त्वात् । तथाहि—'**सदेव सौम्येदमग्र आसी**'दिति श्रुताविदमा पुरोवर्त्तिनं प्रपञ्चं निर्दिश्य, पूर्वकाले तस्य सद्रूपतामुक्त्वा, सतो ब्रह्मरूपत्वं जगत्कारणत्वं च बोधयित्वा, तस्याऽद्वितीयत्वं वक्ति । '**ततस्तद्धैक आहु**'रित्यादिनाऽसत्कार्यवादमाशङ्क्य, '**कुतस्तु खलु सौम्यैवं स्या**'दित्यादिना तन्निषेधति । एवं सत्याकारकार्यत्वप्रभृतयो धर्मा यदि ब्रह्मणि पूर्वं न स्युस्तदाऽसत्कार्यनिरासिका सत्कार्यबोधिका च श्रुतिः पीड्येत । यदि कार्याणां भिन्नतया स्थितिः स्यात्तदाऽद्वैतश्रुतिः पीड्येत । अतो ह्युभयसामञ्जस्यार्थं तत्तद्धर्मादिविशिष्टमेकमेव ब्रह्म कारणमिति मन्तव्यम् । तथासति यथेदानीं कार्याणां तत्तद्धर्माणां तदाकाराणां च

परस्परं भेदः, कारणेन सह चाऽभेदः, कार्यत्वादिरूपेण भेदश्च, लोके कटककुण्डलसुवर्णप्रभृतीनां दृश्यते तथा ब्रह्मजगतोरपि मन्तव्यः ।

एवमंशांशिनोर्जीवब्रह्मणोरपि सुवर्णशकलसुवर्णयोरिव सृष्टिप्राक्काले मन्तव्यः । न चैवं सति सर्वस्य सत्त्वात्तद्बहुभवनव्युच्चरणश्रुत्योर्विरोधः शङ्क्यः । प्राकट्यबहिर्भावाभ्यामेव तदुपपत्तेः । अन्यथाऽव्याकृतिश्रुतिविरोधापत्तेः । पुरुषविधब्राह्मणे हि सृष्टिमुक्त्वाऽग्रे '**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतेऽसौनामायमिद ँ रूप इति' 'तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियत असौ नामाऽयमिद ँ रूप इति** । अत्र हि नामरूपव्याकरणे लौकिकमेवोदाहरणं तत्साधनायाह । लोके हि सिद्धमेव वस्तु नामरूपाभ्यां व्याक्रियत इति सृष्टिपूर्वदशायामपि तस्य सिद्धत्वमेव व्यक्तीभवतीति नासत्कार्यवादः प्रामाणिकः । तृतीयस्कन्धे च '**विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया । यथेदानीं तथा चाग्रे पश्चादप्येतदीदृश**'मिति कालत्रय एकरूपामेव सर्वस्य स्थितिमाह । इदमेवाऽविरोधाऽध्यायेऽसद्व्यपदेशाधिकरणे व्यासपादैरपि व्युत्पादितम् । '**असद्वा इदमग्र आसी**'दिति श्रुतौ सृष्टिपूर्वदशायां यो जगतोऽसत्त्वेन व्यपदेशः सोऽव्याकृतत्वेन धर्मान्तरेण विद्यमानत्वेऽपि व्याकृतत्वेनाऽविद्यमानत्वात् । '**तदात्मानं स्वयमकुरुते**'तिवाक्यशेषेण तथाऽवगमात् । इदमिति पदप्रयोगादासीदिति प्रयोगाच्च । अन्यथा तद्विरोधापत्तेः । नित्यस्य समवायसम्बन्धस्य द्विनिष्ठत्वेन, कार्याऽभावे तदभावाऽऽपत्तेस्तन्नित्यताहानेश्च । असम्बद्धोत्पत्तौ जगद्दृष्टान्तेन घटादीनामपि कार्याणां नियताऽवधिकत्वहानेश्च । न च '**यत्र यत्प्रागभावस्तदेव कार्यं ततः कारणादुत्पद्यत**' इति नियमान्न नियताऽवधिकत्वभङ्ग

इति वाच्यम् । कारणावस्थातिरिक्तस्य प्रागभावस्यैव वक्तुमशक्यत्वात् । कपालावस्थां पश्यत एव 'इह कपाले घटो भविष्यती'ति प्रत्ययेन तथानिश्चयात् । तदवस्थाव्यङ्ग्यस्य तदतिरिक्तस्य प्रागभावस्याऽङ्गीकारे गौरवाच्च । न चोत्पत्तेः पूर्वं कार्यस्य सत्त्वे कर्तृव्यापारबाधप्रसक्तिरिति शङ्क्यम् । कार्याभिव्यञ्जनार्थतया सार्थक्यात् । संवेष्टितपटप्रसारणादौ तथानिश्चयात् । न चैवमनुद्भूतसत्ताङ्गीकारेऽदृश्यप्रेतादिजनितदुःखवत्ततः क्वचिदर्थक्रियापत्तिरिति शङ्क्यम् । अनुद्भूतगन्धरूपादौ व्यभिचारात् । योगेन प्राणादिनियमने जीवनमात्रस्य नियमनत्याग आकुञ्चनादिरूपकार्यस्य च दर्शनेनाऽनुद्भूतदशायामर्थक्रियाकारित्वाऽभावस्योद्भूतदशायां चाऽर्थक्रियाकारित्वस्य दर्शनेन तथानिश्चयादिति । एवं स्थिते सत्कार्यवादे सृष्टिदशायामपि जगज्जीवयोः सत्त्वा'देकमेवाद्वितीयं ब्रह्मे'त्याद्युक्तोऽभेदस्तद्भिन्नतया जगज्जीवप्रतीत्यभावे पर्यवस्यन् भेदसहनक्षममेवाऽभेदं साधयतीति सृष्टिदशायां जगद्ब्रह्मणोः कार्यकारणभावाज्जगज्जीवयोरंशांशिभावाच्चौपचारिको भवन्नपि न वास्तवाऽभेदं निहन्ति । तेनेदानीमपि भेदसहिष्णुरेवाऽभेदः ।

एवं सति नानात्वभेददर्शनयोर्भेदनिन्दाश्रवणमप्यभेदविरुद्धभेददर्शन एव पर्यवस्यतीति बोध्यम् । 'य एष एतस्मिन्नुदरमन्तरं कुरुत' इतिश्रुतौ 'कुरुत' इतिपदेन क्रियारब्धस्यैव निन्दनात् । आरम्भस्य च सतः सत्तायामेव पर्यवसानात् । अभेदविरुद्ध एव क्रियमाणे भेद एव पर्यवस्यतीत्यभेदाऽविरुद्धभेददर्शने तु न निन्दात्वलेशोऽपीति बोध्यम् । एवं च परममुक्तिदशायामपि 'यथोदकं शुद्धं शुद्धे निषिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा

भवति गौतमे'ति काठकश्रुत्याऽऽत्मनो ब्रह्मसाम्यश्रवणाद्भिन्नप्रतीत्य-भावरूप एवाऽभेदो न तु भेदाभावरूप इति सिद्ध्यति । अत एव मैत्रेयीब्राह्मणे 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्ये'दित्या-दिना यदितराऽज्ञानश्रावणं तदपि द्वैतदृष्टिनिवृत्तावेव पर्यवस्यति । न तु द्वैताभावे । एतदग्रे 'यद्वैतन्न पश्यति पश्यन् वै तद्द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येदि'त्यादिभिरन्याऽदर्शने पश्यत एवाऽदर्शनस्य द्वितीयत्वाऽभावस्य विभागाऽभावस्यान्यत्वाऽभा-वस्यैव हेतुतया श्रावणेन तथानिश्चयात् । अग्रे च 'यत्रैवाऽन्यदिव स्या'दित्यादिना वैलक्षण्यहेतुकमन्यदर्शनमनूद्य 'यत्र त्वस्य सर्व-मात्मैवाभू'दित्यादिना स्वस्य द्रष्टृविभागेन विज्ञातारं तं विज्ञानेन केन विजानीयादित्यनेन ज्ञानकरणाभावं हेतुत्वेन वक्तीत्यतोपि तथानिश्चयात् । अन्यथा पूर्वब्राह्मण एव मैत्रेयीमोहनिवृत्त्या पुनर्द्वि-तीयब्राह्मणं न वदेदतस्तत्र यः संदिग्धोऽर्थस्तन्निश्चायनार्थमेव द्वितीय-यब्राह्मणमितिभेददर्शनाऽभावरूप एवाभेदो न तु भेदाऽभावरूप इति-भेदसहिष्णुरेवाऽभेदः ।

यत्तु 'बहुस्या'मिति श्रुतौ सृष्ट्यारम्भे एकस्य बहुत्वश्रावणात्पूर्वं जगदाद्यभाव एव श्रुत्यभिमतो, न तु कार्यस्यापि सत्त्वम् । तथासती'द्ं सर्वमसृजते'तिश्रुतिविरोधापत्तेः । अतः सृष्टेः पूर्व-मसत्त्वादभेदविरोध्येव स इत्यर्धवैनाशिकमतमेव साधीयः । तन्मन्दम् । 'तद्धैक आहुरसदेवेदमग्र आसी'दित्यादिनाऽनूद्य 'कुतः खलु सौम्यैवं स्या'दितिश्रुत्यैव तन्निषेधात् । न च तत्र कारणसत्ताया एव निषेधो न तु कार्यसत्तायाः 'कथमसतः सज्जा-

येते'तिश्रुत्या तथानिश्चयादितिवाच्यम् । पूर्वं कार्यस्याऽसत्त्वे 'तद्धेदं तर्ह्यव्याकृतमासी'दिति विरोधापत्तेः । अत्र 'तर्ही'त्यनेन सृष्टिपूर्व-कालं लक्षीकृत्येदमा निर्दिष्टस्य जगतस्तदानीमव्याकृतत्वं वदति । यद्यसत्त्वमभिप्रेयादिदमा न निर्दिशेत् । अव्याकृतत्वमपि न वदेत् । स्वरूपस्यैवाऽभावात् । अतो 'बहुस्या'मित्यनेन व्याकृतत्वमेवोच्यते । न त्वसतः सत्ता । सृजनमपि नामरूपव्याकरणमेव । अन्यथा प्रागिव सृष्टिदशायामपि व्यवहाराऽभावप्रसङ्गात् । एवं सिद्धे सर्वदा सत्त्वे द्वैतश्रुत्यविरोधाय तदानीमपि परापरभावघटित एव ब्रह्मत्वेन रूपेणै-वाऽविरोध इदानीमिवेति मन्तव्यः ।

एतावान् परं विशेषः । यदिदानीमविद्याऽवलिप्ताऽल्पबुद्धित्वान्न प्रतीयेत । तदानीं तु करणग्रामलयादिति । एवं परममुक्तावपि पराऽ-परभावघटितो भेदसहनक्षम एवाऽभेदः । ब्रह्मस्वरूपस्यैव तथात्वात् । अतएव दशमस्कन्धे यत्र भगवता श्रीवसुदेवं प्रत्यखण्डब्रह्मज्ञानो-पदेशः कृतस्तत्र वसुदेवोक्तमङ्गीकृत्य 'अहं यूयमसावर्या' इत्यनेन सर्वेषां तथात्वमुक्त्वा ब्रह्माण्डाऽऽनन्त्यमारोपितज्ञानदृष्टिं च निवार-यितु'मात्माह्येकः स्वयंज्योति'रित्यनेन सर्वत्राऽऽत्मैक्यं, नाना-त्वदृष्टेश्चोपाधिकत्वेन भ्रान्तत्वं, निरूप्य 'खं वायुर्ज्योतिरापो भूरि'-ति द्वितीये खादिपञ्चभूतदृष्टान्तेन नानात्वस्य वास्तवत्वमुपाधिव्य-ङ्ग्यत्वं च गदति । अन्यथा पूर्वश्लोक एव नानात्वदृष्टेर्गुणोपाधिक-त्वेन भ्रान्तत्वे बाधिते तत एव नानात्वस्य निवृत्तत्वात्खादिपञ्चम-हाभूतदृष्टान्तेन पुनर्नानात्वप्राप्तिं न स्थापयेदतोऽखण्डब्रह्मवादेऽप्यंशा-दिनानात्वस्य विद्यमानत्वात्परापरभावादिभेदसहिष्णुरेवाभेदो भगव-दभिमत इति बोध्यम् । किञ्च 'इदं सर्वं यदयमात्मे'त्यन्तेन सर्वस्य

ब्रह्मत्वे बोधिते कथं सर्वस्य ब्रह्मत्वमित्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तैरवान्तरशब्दाऽग्रहणं दुन्दुभ्यादिशब्दग्रहणेनैवाऽवान्तरसर्वशब्दग्रहणवदात्मग्रहणेनैव तदभिन्नाऽवान्तरसर्वग्रहणमग्निधूमदृष्टान्तेन ब्रह्मणः सकाशाद्वेदादिसर्वोत्पत्तिं चोक्त्वा, **'स यथा सर्वासामपां समुद्र एकायन'** मित्यादिभिर्बहुभिर्दृष्टान्तैः सर्वाऽऽधारत्वं निरूपयति। यदि सृष्टभावदशायां सर्वस्यैकरूपत्वमेव स्यात्तदा दुंदुभिदृष्टान्तादीन्समुद्रादीन्नानादृष्टान्तान्न वदेदेकेनैव दुंदुभिशब्ददृष्टान्तेन सर्वस्य ब्रह्मरूपताया, एकेनैव समुद्रदृष्टान्तेन ब्रह्मणः सर्वाधारतायाश्च सिद्धेः। अतः सृष्टभावदशायामपि नानात्वाऽविरुद्धमेव स्वरूपैक्यं बोधयति। पुनःसैन्धवघनदृष्टान्तेन सृष्टिदशायामपि नानात्वाऽविरुद्धमेव स्वरूपैक्यम्। **'एवं वा अरे इदं महद्भूत'**मित्यादिना प्रेत्यसंज्ञाभावकथनेन पूर्वसंज्ञानस्यैव बोधनात्। तच्च ज्ञानं भेदाऽविरुद्धसंपदात्मकमभेदमेव बोधयतीति प्रागुपपादितमतो न कोपि संशयः। एवंसति तद्गुणसारत्वादिति ब्रह्मांशे जीवे ब्रह्मत्वव्यपदेश औपचारिकः। स च मुक्तावपि तुल्यः। पूर्वोक्तसत्कारणतावादसिद्धस्य भेदस्याऽनपायादिति। एवं प्रलयदशायां जडस्यापि बोध्यम्। एवं ब्रह्मणो निरंशत्वेपि सांशत्वं विरुद्धधर्माश्रयत्वादुपपन्नम्।

एवं जगतो ब्रह्मत्वेपि कार्यत्वमपीति सर्वं सुस्थम्।

**इति श्रीमद्वल्लभनन्दनचरणदासदासेन पीताम्बरतनुजपुरुषोत्तमेन कृतोऽवतारवादावल्यां भेदाभेदस्वरूपनिर्णयो नाम षष्ठो वादः संपूर्णतामगात्॥**

---

॥ श्रीः ॥

श्रीहरिः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां

गोस्वामिश्रीमद्वल्लभविरचितः ।

## प्रपञ्चसंसारभेदः ।

### तृतीयो मणिः ।

ननु प्रपञ्चसंसारयोः सत्यत्वाऽसत्यत्वाभ्यां भेदो नाङ्गीकर्तव्यः । मानाऽभावात् । नाशोत्पत्तियुक्तप्रपञ्चवदाविर्भावतिरोभावावेव । तथाच श्रुतिः '**सत्यं चानृतं च सत्यमभव**'दिति । एतदर्थस्तु सत्यं घटपटादिरूपं जगदनृतं संसाररूपं, सत्यं ब्रह्मैवाऽभवदित्येवं प्राप्ते— उच्यते । संसारस्य सत्यत्वाऽभाव एव । भगवत्कार्यत्वाऽभावात् । '**प्रपञ्चो भगवत्कार्यस्तद्रूपो माययाऽभवत् । तच्छक्त्याऽविद्यया त्वस्य जीवसंसार उच्यते**' इतिनिबंध उक्तम् । '**बन्धोस्याविद्ययानादि**'रितिवचनाच्च । मायाशक्त्यविद्याकार्यत्वमेव तस्य । तत्राप्युच्यते न तु जन्यते । कथनमात्रेणैव सत्त्वम् । न वस्तुतः । जीवाभिमानात्मकत्वात् । '**अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यत**' इतिश्रीगीतावाक्यात् । एवं सत्याविर्भावतिरोभावावप्यसङ्गतौ । सत्यत्व एव तयोरङ्गीकारात् । न ह्यलीकत्वे तौ सम्भवतः । किञ्चाऽहंममाभिमानस्य जीव एव संसारपदवाच्यत्वम् । अविद्याकार्यत्वात् । नहि देहो जीवः । '**वासांसि जीर्णानि यथे**'ति '**देही नित्यमवध्योयं**' '**न**

जायते वा कदाचि'दितिवाक्यैर्भेदनिरूपणात् । तत्र चेदहम्बुद्धिः साऽलीकैव । पदार्थेष्वपि ममताबुद्धिः । सापि तथैव । नहि सर्वे पदार्था एतदीयाः । भगवत्क्रीडार्थकत्वात् । **'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियो पर ईश कुर्युः'** **'क्रीडाभाण्डं विश्वमिदं यस्य भूम्न'** इतिश्रीभागवतोक्तेः । परवस्तुनि स्वाम्यमलीकमेव । संसरति ज्ञाने सति गच्छतीति संसारः । स जीवाधिकरणक एव । अन्यथा **'अहं सर्वस्य प्रभवः' 'अहमात्मा गुडाकेश' 'अहं भक्तपराधीनः' 'न मे भक्तः प्रणश्यति' 'मम योनिर्महद्ब्रह्म' 'ममैवांशो जीवलोक'** इत्यादिवाक्यैरहंताममतयोः श्रवणाद्भगवत्यविद्यासम्बन्धः स्यात् ? । न त्वेवम् । **स आत्मानमेवावेदहं ब्रह्मासी'**त्यहन्ताशब्दो भगवद्धर्मज्ञानरूप एव । सर्वं भगवत एवेति ममता तथैव । न तत्र संसारप्रयोगः । वास्तवत्वात् । जीवस्यापि 'भगवान् मम प्रभुरहं दास' इति ममताहन्ता शुद्धज्ञानरूपैव । भगवत्सम्बन्धित्वात् । तथा च **'सत्यं चानृतं चेति'**श्रुत्यर्थस्तु—सत्यं घटपटादिरूपं, अनृतं तस्मिन्नेव विषयताग्राह्यनाशोत्पत्तिप्रतीतिविषयो मायिकं जगदनृतशब्देनोच्यते । नटवदन्यथारूपप्रदर्शनादित्यर्थः । स्वस्मिन्मायया अन्यथाभावं दर्शितवान् । अत एवोक्तं निबन्धे **'तद्रूपो माययाऽभव'**दिति । तथा च श्रुतिः **'सर्वस्य वशी सर्वस्येशान'** इति । **'जीवा ब्रह्मदासा ब्रह्मकितवा'** इति । **'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'**इति व्याससूत्रम् । **'धर्मः प्रोज्झितकैतवोऽत्र परम'** इति भागवतं च । तेन भगवद्भजनमेव मुख्यो धर्मो नेतरः । देहान्तरे धर्मे वा तत्त्यागात् । न हि नित्यः कदापि त्यागमर्हति । **'देवो सुरोऽमनुष्यो वे'**ति वाक्यात् ।

ननु पश्चादिदेहे कथं भजनमितिचेत्तत्राह—'धन्यास्त्वि'त्यत्र 'पूजां दधुर्विरचितां प्रणयावलोकै'रिति। 'गावस्तु कृष्णमुखनिर्गत'-मित्यत्र 'गोविन्दमात्मनि दृशाश्रुकलाः स्पृशन्त्य' इति। 'प्रायो बताङ्ग विहगा' इति। 'तत्र शृण्वन्त्यमीलितदृशो विगतान्य-वाच' इति। 'प्रणतभारविटपा मधुधाराः प्रेमहृष्टतनवः ससृजुः स्मे'त्याद्यनेकप्रमाणैर्भगवद्भजनमेव नित्यो धर्मः सर्वयोनिषु। तस्मा-त्प्रपञ्चसंसारयोर्भेद एव ब्रह्मवादाभिमत इति सिद्धम्॥

इति श्रीविट्ठलरायात्मजश्रीवल्लभकृतोयं लेखः सम्पूर्णः॥

---

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

पुष्टिमार्गसिद्धान्तवाङ्मालायां

गोस्वामिश्रीमद्गोपेश्वरकृता

# वादकथा ।

चतुर्थो मणिः ।

विशेषैः प्राकृतैः शून्यमप्राकृतविशेषवत् ।
अशेषोपनिषद्वेद्यं परं ब्रह्म वयं स्तुमः ॥ १ ॥

निरस्य मतमासुरं श्रुतिशतैः सुतर्कैरपि
स्वकीयहरिवर्त्मना निजजनोद्धृतावुन्मनाः ।
कृपाजलधिराज्ञया व्रजपतेरिहाऽवातर-
त्स कोऽपि हरिवाक्पतिः स्फुरतु मे सदा सिद्धये ॥२॥

इह खलु निखिलनिगमस्मृतिपुराणादिप्रमाणगणप्रतिपादितपरमपुरुषार्थत्वपुरुषोत्तमभक्तितत्त्वप्रत्यनीकसर्वाऽलीकवादिप्रणीतमायावादमहातमिस्रविस्रंसनसहस्रकिरणायितकरुणायितशालिश्रीवल्लभाचार्याविर्भावितराद्धांतरहस्यरूपब्रह्मरूपनिरूपकप्रतिभटविघटनपटुतरश्रीमदस्मत्प्रभुचरणरचितानवद्यपद्यमालम्ब्य विरुद्धवादिव्युदस्तये वादकथा प्रस्तूयते ।

प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति ।
निगमप्रतिपाद्यं यत्तच्छुद्धं साकृति स्तौमि ॥ १ ॥

तद्ब्रह्म स्तौमि । स्तुतिगोचरं करोमीत्यन्वयः । किंभूतं तत्? । प्राकृतधर्माणामविद्याकल्पितानामनाश्रयभूतम् । अप्राकृते ब्रह्मणि प्राकृतधर्माणामभावात् । भावे दोषः क इतिचेत्? । न । जीवतुल्यत्वस्यैव तत्त्वात् । '**न तत्समश्चाभ्यधिकश्च दृश्यत**' इत्यादिश्रुतिभिस्तन्निषेधश्रवणात् । किञ्च ते ह्यविद्याकल्पिता वाच्याः? । एवं च सत्यविद्या, जीवाश्रिता तत्कल्पिका? ब्रह्माश्रिता वा? । नाद्यः । असमानाश्रयधर्मकल्पने तस्याः शक्त्यभावात् । शक्तावतिप्रसङ्गाच्च । न द्वितीयः । परब्रह्मणि तदभावात् । '**एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोस्याऽविद्ययाऽनादिर्विद्यया च तथेतर**' इतिवाक्याच्च । किञ्च, तस्याः सत्त्वमुताऽसत्त्वं सदसत्त्वं वा? । न प्रथमः । विकल्पासहत्वात् । तथाहि—सा किं नित्या, न वा? । नेतरः । अपसिद्धान्ताऽऽपातात् । न प्रथमः । तथात्वे ब्रह्मणः सकाशाद्भेदे '**एकमेवे**'त्यादिश्रुतिविरोधावतारात् । ततोऽभेदे, तस्य भेदपूर्वकत्वनियमेन तदभ्युपगमापत्तेः । अभावस्य प्रतियोगिप्रतिपत्त्यायत्तप्रतिपत्तिकत्वात् । नन्वप्रामाणिको भेदोऽभ्युपगतो बाध्यतया न दोषमावहतीति चेत् । न । तस्याऽप्यप्रामाणिकत्वेन वैपरीत्यमेव किं न स्यात्? । श्रुतिरेव तयोरभेदे मानमितिचेत् । न । तथाभूतश्रुतेरनुपलम्भात् । अभेदोऽपि किमेकत्वमुत भेदाऽभावः? । प्रथमेऽपि सङ्ख्या वा, धर्मान्तरो वा? । नोभौ । तत्रापि भेदाऽभेदविकल्पेनात्माश्रयाऽनवस्थाद्यापातात् । अत एव नेतरोपि । न द्वितीयः । असतः कारणत्वनिराकरणेन ततो ब्रह्मधर्मानुत्पत्तिप्रसङ्गात् । नन्वस्तु तर्हि सदसद्विलक्षणत्वपक्षस्तृतीयः । पूर्वयोर्दोषादिति चेत्? । न । तस्यास्तथाभावे मानाभावात् । सत्त्वाऽसत्त्वव्यतिरिक्तस्याऽस्य व्याहतेश्च । **परस्परविरोधे हि न प्रकारा-**

न्तरस्थिति'रितिन्यायात्। अपि च साऽनादिरुत सादिरभिधीयते? । नाद्यः। अनादित्वकल्पने मानाऽभावात्। नापरः। सादित्वस्य त्वन्मतेऽनङ्गीकारात्। नन्वेवं प्रपञ्चानुदयप्रसङ्गोऽविद्याकारणाभावादिति चेत्। न। [1]ब्रह्मण एव तदुत्पत्तेरुपपत्तेरिति चेत्। न। कार्यकारणयोरैकजात्यभङ्गप्रसङ्गात्। प्रपञ्चरूपकार्यस्य तुच्छत्वेन तथाविधकारणाऽवश्यम्भावात्। तथा च सिद्धान्तः, कारणतयाऽविद्येति चेत्। नैवम्। जगतो भगवत्कार्यत्वाभ्युपगमात्। न च कार्यकारणयोरैकजात्याभावः। कार्यस्याऽक्षरात्मकत्वेनैकजातीयत्वाऽविरोधात्। कार्यकारणात्मता च 'सर्वं खल्विदं ब्रह्म' 'स हैतावानास' 'ऐतदात्म्यमिदं सर्वं' 'तत्सत्यं' 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यं' 'यदिदं किंच तत्सत्यमित्याचक्षते' 'स आत्मानं स्वयमकुरुत' 'स वै सर्वमिदं जगदि'त्यादिश्रुतिसहस्रसिद्धेत्यन्यत्र विस्तरः। वर्णितं चैतच्छ्रीमदाचार्यचरणैः 'तदेवैतत्प्रकारेण भवतीतिश्रुतेर्मत'मिति। किञ्च, प्रपञ्चब्रह्मणोरभेदं मनसि कृत्वैव 'तदनन्यत्वमारम्भणशब्दादिभ्य'इतिव्यासचरणाः सूत्रयाञ्चक्रुः। अत एव 'स राष्ट्रमभवदि'त्यादिवैदिकप्रयोगाः सन्दृश्यन्ते। एतेन श्रुतितत्त्वसूत्रादिप्रमाणसहस्रमथनाकलयमाना(?) जगदन्तर्गतभगवन्मूर्तिभजनाद्यसहमाना जगदसत्यमिति कथयमानाः प्रच्छन्ननास्तिका निरस्ता वेदितव्याः। नन्वेवं सत्यविद्यैव किं नाङ्गीक्रियते? । न। अनाद्यनिर्वचनीयतदनङ्गीकरणेऽपि भगवच्छक्त्यात्मकतदुररीकरणात्। न च तस्यास्तथात्वे मानाऽभावः । 'श्रिया पुष्ये'तिवाक्यस्यैव प्रमाणत्वात्।

---

१ पूर्वपक्षिणः शङ्केयम्।

न च भेदाऽभेदसत्त्वाऽसत्त्वादिविकल्पावतारः । शक्तिशक्तिमदभिन्नभिन्नत्वयोः प्रमाणसिद्धत्वात् । अतः सिद्धं प्राकृतधर्मानाश्रयत्वं ब्रह्मणः । तथाचोक्तम् ।

'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा ।
तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ।
असुराणां विमोहाय दोषा विष्णोर्न हि क्वचित् इति ।

नन्वेवं प्राकृताऽप्राकृतधर्माऽभावेन निर्धर्मके भजनाभाव इत्येवमाशङ्क्य समाधानमाहुः ।—अप्राकृताः । प्रकृतिसम्बन्धशून्या आनन्दरूपाः धर्माः करचरणादयो रूपभूता यस्येति । ननु धर्माणां स्वरूपात्मकत्वमसम्भवि । विकल्पासहत्वात् । तथाहि । ब्रह्मधर्मास्ततो भिन्ना न वा? । नाद्यः । नित्यत्वेनाऽद्वैतश्रुतिव्याकोपात् । किञ्च ब्रह्मणा समं धर्माणां यो भेदः स किं तत्स्वरूपं आहोस्विदन्योन्याभाव उत वैधर्म्यमितरद्वा? । आद्येऽपि किं प्रत्यक्षगम्यः प्रमाणान्तरगम्यो वा? । नाद्यः । प्रत्यक्षेण धर्मभेदग्रहे धर्मिणः प्रतियोगित्वेन धर्मान्तर्निवेशनेऽभेदावगाहनेन वैपरीत्यापत्तेः । अनुयोगिनि प्रतियोग्यनिवेशने च स्वरूपभेदत्वस्य परिभाषितत्वप्रसक्तेः । नित्यं प्रतियोग्युपश्लिष्टस्यैव तस्य प्रमाणसिद्धत्वेन निष्प्रतियोगिके प्रमाणानाविर्भावात् । अथ प्रतियोगिभूतं ब्रह्म निरूपणीयं धर्माणां स्वरूपं भेद इत्युक्तौ नोक्तदोष इति चेत् । न । विकल्पासहत्वात् । तथाहि—धर्मान्प्रति प्रतियोगित्वं ब्रह्मणः कश्चिद्धर्मो वा स्वरूपं वा? । नान्त्यः । तावतोऽर्थस्य ब्रह्मस्वरूपतया धर्माणां ब्रह्मणश्चाऽभेदपर्यवसानप्रसङ्गात् । नापि प्रथमः । धर्मान्प्रति प्रतियोगित्वं यत्तस्य ब्रह्मधर्मत्वेन तस्मिन्

तत्प्रवेशादैक्यापत्तेः । किञ्च, धर्मस्य धर्मिसम्बन्धाऽऽवश्यकत्वेन परम्परायामनवस्थितेस्तदसत्त्वेऽत्यापत्तेरप्यन्ततः स्वभावसम्बन्धस्वीकार्यतया धर्मधर्मिणोः परस्परस्वभावप्रवेशेनाभेदस्याऽनिरस्यत्वात् । न द्वितीयः । अन्योन्याभावो यतोभिधेयस्तस्योक्तरीत्या तत्स्वरूपान्तःपातात् । किञ्च, ब्रह्मधर्माऽन्योन्याभावस्य तत्तादात्म्यप्रतियोगिकत्वेन तत्प्रसिद्धावत्यन्ताऽसत्प्रतियोगित्वदोषात् । तत्सिद्धौ च भेदाशक्यत्वप्रसङ्गात् । न चात्यन्ताऽसत्प्रतियोगिता न दोष इति वाच्यम् । शशविषाणाद्यभावस्याऽपि सुग्रहत्वापत्तेः । नापि तृतीयः । वैधर्म्यपक्षे क्वचित्तच्छृङ्खलाऽऽविश्रान्त्यनवस्थित्यननुभूत्यादीनामनुत्तरणीयत्वात् । तस्मिंस्तदनङ्गीकारे भेदस्याऽऽत्माश्रयत्वापत्तेश्च । नापि चतुर्थः । तस्यादर्शनात् । न द्वितीयः । धर्मत्वव्याघातात् । अभेदः किं भेदाभाव उतैकत्वमित्याद्युक्तविकल्पदोषव्याकुलत्वाच्च । अभेद आधाराऽऽधेयभावानुपपत्तिरिति तु चिन्त्यम् । घटाभावे घटाभाव इत्यत्रेव तदुपपत्तेः । एवं च सति धर्माणामेकविज्ञानेन सर्वविज्ञानोपपत्तये प्रपञ्चतुल्ययोगक्षेमतया निर्धर्मकमेव ब्रह्म प्रतिपत्तव्यमिति चेत्—

उच्यते । सवित्रालोकस्य तदाश्रयधर्मत्वेपि तद्रूपत्ववद्धर्माणां तदाश्रयत्वेऽपि तदात्मकत्वोपपत्तेः । न च भेदपक्षीयाऽऽशङ्कावतारः । अद्वैतागमैरेव भेदस्य क्षारीकृतत्वात् । न चाऽभेदकल्पोक्तविकल्पादिदोषः । तादात्म्यस्य प्रमाणसिद्धत्वात् । ननु तस्यापि धर्माऽन्तराकाङ्क्षायामनवस्था गौरवं च स्यादिति चेत् । न । धर्मान्तरस्य प्रमाणेन सिद्धावनवस्थितेरदूषणत्वात् । असिद्धावाश्रयासिद्धेरापादनाऽसम्भवात् । गौरवाभावाच्च । नन्वेवमाश्रयाश्रयिभावानुपपत्तिरिति

चेत् । न । दत्तोत्तरत्वात् । न च सूर्यजन्यमालोकान्तरमेव तन्न तद्रूपमिति वाच्यम्? । भेदकल्पने मानाऽभावाद्गौरवाच्च । तरणितेजसो भागवतत्वेन नित्यत्वाच्च । 'यदादित्यगतं तेज'इतिवाक्यात् । अत एवैतदन्तर्निधाय 'प्रकाशाश्रयवद्वा तेजस्त्वा'दितिसूत्रितं सूत्रकारैः । तस्माद्ब्रह्मधर्मास्तद्भिन्ना अभिन्नाश्चाभ्युपेयाः । 'परास्य शक्ति'रित्यादिभेदश्रुते'रेकमेवे'त्याद्यभेदश्रुतेश्च । तथा चोभयविधश्रुतिबलेन तादृशमेव तद्वस्तूत्पत्तिसिद्धमुररीकरणीयमिति न पूर्वोक्तदूषणगणावकाशः । अत एव श्रीवल्लभाचार्यचरणै'र्य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते स्वव्यतिरेकतोऽबुधः । विनानुवादं न च तन्मनीषितं सम्यग्यतस्त्यक्तमुपाददत्पुमानि'त्यत्राऽऽत्मनो भगवतो दृश्येषु गुणेषु केशलोमनखरूपस्पर्शादिष्वेको गुणः । स्वस्मात्सच्चिदानन्दात्मकभगवत्स्वरूपाद्व्यतिरेकतः । ल्यब्लोपे पञ्चमी तथा च व्यतिरेकं प्राप्यैव सन् । अन्यथैकरसे ब्रह्मणि विविधरूपभानं न स्यादिति यो व्यवस्यते सोऽबुधः । धर्मिग्राहकमानेन शुद्धस्यैव ब्रह्मणस्तथैवसिद्धेः एतदेवाह–'विना' इति वस्तुन एव तथात्वादाकारदर्शनाऽनन्तरं यो भक्तकृतः 'कराम्बुज'मित्यादिरूपो वादः सोनुवादस्तं विना तत्कराम्बुजादिकं स्वरूपव्यतिरिक्तत्वेन मनीषितं मनसा सत्त्वेनाऽऽकलितं न भवति । ननु प्राकृतेष्वपि भगवत्सम्बन्धात्सत्त्वोत्पत्त्या तथा प्रतीतौ न दोष इत्यत आह–'सम्यगि'ति । 'स यथा सैन्धवघनोऽनन्तरोबाह्यः कृत्स्नो रसघन एवायं अरे अयमात्मानंतरो बाह्यः कृत्स्नः प्रज्ञानघनः' 'असंगो ह्ययं पुरुषः' 'अथात आदेशो नेतिनेती'त्यादिश्रुतिविचारदशायां त्यक्तप्राकृतधर्म-

मुपाददद्भवतीत्यर्थः। तैः सह सम्बन्धे सति हि तेषु सत्त्वोत्पत्तिसम्भावनाप्रसक्त्यैवासम्भवात्तदसम्भव इति भाव' इत्येवं व्याचक्षाणैरयमेवार्थः समर्थितः। अतः सिद्धमप्राकृतधर्मरूपत्वं ब्रह्मणः।

ननु तथाप्यश्रौतमेतद्भविष्यतीत्याशङ्क्य परिहारमाहुः—इति निगमप्रतिपाद्यमि'ति। इति अनेनोक्तेन प्रकारेण, निगमैः वेदैः प्रतिपाद्यं निरूपणीयमित्यर्थः। निगमस्तु 'पराञ्चि खानि व्यतृणत्स्वयंभूः' 'अद्रेश्यमग्राह्यं' 'न तत्र सूर्यो भाति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमि'त्यादि। 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यंतरो ह्यजः। अप्राणो ह्यमनाः शुभ्रः'। 'असङ्गो ह्ययं पुरुषः' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं' 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्' 'स ईक्षाञ्चक्रे' 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशंति' 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः'। 'सर्वकामः सर्वरसः' 'यः सर्वज्ञः सर्वशक्तिः' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' 'मनसैवानुद्रष्टव्यमि'त्यादिराकलनीयः। तथाच सति नोक्तदोष इति भावः।

नन्वेवं धर्मप्रतिपादकतत्प्रतीतिनिषेधकश्रुतीनां परस्परविरोधो दुष्परिहर इति चेत्। मैवम्। ब्रह्मणि विशेषाणां विधिनिषेधयोः प्रमाणसिद्धत्वस्य साधितत्वेन विरोधाभावात्। न चाऽनेकाऽऽगमैकवाक्यतया सविशेषश्रुतेरप्रमाणत्वमितिवाच्यम्?। अवेदबाह्येन वेदप्रामा-

ण्यस्य त्यक्तुमशक्यत्वात्। विरोधपरिहारस्याऽन्यथासिद्धेश्च। अपि च, श्रुतित्वाऽविशेषादन्यत्रापि तथात्वस्याऽवर्जनीयत्वाऽऽपातात्। किञ्च, विशेषाः किं कल्पिता न वा?। नाद्यः। कल्पितत्वाऽसम्भवस्य प्रदर्शितत्वात्। तत्त्वे तदापादकवेदविप्रलम्भकत्वप्रसङ्गाच्च। नेतरः। ईशधर्माणामजन्यत्वस्य शरणीकरणीयत्वात्। अन्यच्च कश्चन विरोधोऽभिधीयते, धर्मविधिनिषेधयोः सहाऽनवस्थानमिति चेत्। न। आधारभेदेन विरुद्धयोरपि सहावस्थानदर्शनात्। आधाराऽभेदोपि वक्तव्य इति चेत्। वार्तमेतत्। अव्याप्यवृत्तितावादिमते संयोगादौ तथाप्यनुपपत्तेः। देशाऽभेदेपि प्रकारभेदेन विरोधस्वीकारात्। नन्वव्याप्यवृत्तिताऽनभ्युपगन्तृमते देशाभेदेन सहाऽनवस्थानं, तदभ्युपगन्तृमते प्रकाराऽभेदेन तद्विरोध इति चेत्। न। तत्किं तद्द्वयाऽवस्थानसाहित्यप्रतिक्षेपो वा, । तद्द्वयाऽनवस्थानप्रतिक्षेपसाहित्यं वा? । न प्रथमः। तदुभयावस्थितिसाहित्यस्य प्रमित्यविषयतया प्रसिद्धप्रमितयौगिकत्वाऽऽपातात्। न चेष्टापत्तिः। शशश्रृङ्गे प्रतिषेधेऽपि शशे श्रृङ्गप्रतिषेधात्मतोपगमेन प्रसिद्धप्रतियोगिकत्वक्रोडीकरणात्। नान्त्यः। तद्द्वयावस्थानसाहित्यसद्भावस्यैवोपपत्तेः। तद्द्वयाभावयोस्तद्द्वयात्मकध्रौव्यात्। अन्यथाऽनवस्थाया दुर्निवारत्वात्। अस्तु वा यः कश्चिद्विरोधस्तथापि नेहासौ। प्राकृतप्रतिषेधाऽप्राकृतविधानाभ्यां तदयोगात्। तत्सत्वेऽपि ब्रह्मणि विरुद्धसर्वधर्माश्रयत्वस्याऽऽश्रयणीयतया तस्याऽदोषत्वात्। नचाऽत्र मानाऽभावः। श्रुतिस्मृत्याद्यनेकतत्सत्वात्। तथाहि—**'आत्माऽवा रे द्रष्टव्यः श्रोतव्यो मन्तव्यः' 'यतो वाचो निवर्तन्ते' 'तदेजति तन्नैजति' 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः' 'सर्वतः पाणिपादान्तं' 'अणोर-**

णीयान्महतो महीयान्' 'समो मशकेन समो नागेन' 'अस्थूलमनण्वह्रस्वमि'त्यादि । अतः सुष्ठूक्तमितिनिगमप्रतिपाद्यमि'ति ।

नन्वेवं सत्यन्यत्र विकारित्वदर्शनेनाऽत्रापि तथात्वं स्यादित्याशङ्कायामाहुः—'शुद्धमि'ति । अविकृतमित्यर्थः सच्चिदानन्दरूपे ब्रह्मणि विकाराणामभावात् । 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतेः ।

तदेतत्सकलमन्तर्निधाय निष्फलितमाहुः—'साऽऽकृती'ति । साकारमित्यर्थः । नन्वाकाराणां प्राकृतत्वादतथाभूते तस्मिन्ननवकाशात्तदलौकिकत्वोक्तौ मानाभावात् । गौरवात् । निराकारश्रुतिव्याकोपादुपासनार्थायाः साकारश्रुतेरौपाधिकतत्परत्वात्तदानन्त्येनाऽद्वैतभङ्गात्सविशेषस्य सावित्राद्यालोकभास्यत्वव्यवहार्यत्वचाक्षुषत्वक्रियामयत्वादिनाऽब्रह्मतापातात् । तस्य चाऽऽगमसूत्राद्यसम्मतत्वादिदमनुपपन्नमिति चेत् । न । आकाराणामलौकिकत्वात् । न च प्रमाणाभावः शङ्क्यः । 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' 'सत्यं विज्ञानमानन्दं ब्रह्म' 'सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखं' 'आनन्दमात्रकरपादमुखोदरादिः' 'आनन्दमयोऽभ्यासा'दित्यादिसहस्रप्रमाणसद्भावात् । प्रमाणबलात्तस्य तस्याऽतथात्वाच्च । निराकारश्रुतेर्लौकिकतदभाववत्ताप्युपपादनपरत्वेनाऽप्युपपत्तेरविरोधात् । अन्यथा साकारश्रुतेः का गतिरायुष्मताऽध्यवसिता ? । यतस्तद्विरोधो न स्यात् । नाप्यन्यतरबाधो युक्तः ? । विनिगमनाविरहेण तत्र तस्य दुर्वचत्वात् । न चाद्वैतानुरोधेन सविशेषश्रुतिबाधः साधुरिति वाच्यम् ? । अबाधेन गतौ सत्यां बाधस्याऽन्याय्यत्वात् । अन्यथा सर्वांशेन वेदप्रामाण्यमपेयात् । अथाऽऽकारप्रतिपादिकाः श्रुतयस्तुरी-

यनिर्विशेषतद्वगतय अविद्याकल्पिताऽऽकारवादिन्य उपासनार्थं चेति गतौ नोक्तदोषावतार इति चेत् ।

अत्राहुः—निर्विशेषं स्वतो दुरवगममिति । सविशेषस्य भावना-सुकरत्वेन तस्मिंश्चित्तनिश्चलत्वे ततस्तत्प्रतिपत्तिरिति हि तवाभि-प्रायः ? । सचायुक्तः । अन्योन्याश्रयात् । तथाहि—निर्विशेषत-त्सिद्धौ सविशेषश्रुतेस्तदर्थमवास्तवतत्परत्वसिद्धिस्तस्यां च सत्यां सेति । न च श्रुतिबलात्तत्सिद्धिरितिवाच्यम् । तस्याऽन्यत्रापि समानत्वात् । नन्वेवं निराकारव्यवहारस्योच्छेदः स्यादिति चेत् । न । कतिपयविशेषप्रतिषेधेन तदनुच्छेदस्य सम्भवात् । ननु नि-षेधार्थं विशेषाऽनुवादो वेदेषु । निषेधस्य निषेध्यप्रतिपत्त्यधी-नप्रतिपत्तिकत्वादित्यप्रत्यूहमविशेषतत्सिद्धिरिति चेत् । मैवम् । विकल्पासहत्वात् । तथाहि—अनुवादः किं श्रुतिसिद्धानामुत लोकसि-द्धानाम् ? । न प्रथमः । तेषां निषेधानर्हत्वेनाऽस्य नैरर्थक्यप्रसङ्गात् । अन्यथा सत्यत्वादयोपि ब्रह्मणि न संसिद्ध्येयुः । तेषां तादात्म्यान्न कोऽपि दोष इति चेत् । इतरेषामपि तथात्वादेव न दोषलेशोपीति परिभावय । न द्वितीयः । विकल्पानुपपत्तेः । तथाहि—लोकसिद्धयाव-द्धर्मानुवादो यत्किञ्चिद्धर्मानुवादो वा ? । नाद्यः । इष्टाऽऽपादनात् । लोकप्रसिद्धानां दुःखित्वाऽनीशत्वादीनामनुवादपूर्वकनिषेधसम्भवे-ऽप्यतथाभूतानां सर्वेश्वरत्वाऽऽनन्दमयत्वादीनां तदयोगात् । अत एव च न द्वितीयः । यदप्यात्मोपासनाकथनात्तदर्थश्रुतिषु तदाकारकथन-मन्यथा तदनुपपत्तेरिति परमार्थतस्तथात्वमितिमतम् ? । तदप्याका-राणां पारमार्थिकत्वात् । अन्यथा तदुपासनायाः फलाजनकत्वापत्तेः । अन्यथाप्रपत्तेर्निंदितत्वाच्च । **‘योन्यथा सन्तमात्मानमन्यथा प्रति-**

पद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणे'त्यादिवाक्यात्। उपास्याऽवास्तवत्वे समस्तोपास्तिवचसामप्रामाण्यप्रसक्तेश्च।

यस्तु कश्चिदवास्तवब्रह्मतत्वोपास्तेः फलास्तित्वं मण्यादिप्रभामण्डलतद्बुद्धिरूपसंवादिभ्रमदृष्टान्तेनाऽऽचष्टे। तदसत्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यस्य स्पष्टतरत्वात्। दृष्टान्ते भ्रमादर्थक्रियाऽसम्भवेपि दार्ष्टान्तिके श्रुतिपुराणवाक्यसन्दर्भैरुपास्यत्वप्रमिततया तदसम्भवात्। एतेन दारुशिलादिषु देवताभ्रमेण भजनात्फलं न भवेदित्यपि निराकृतम्। तत्रापि सत्यभगवत्स्वरूपोपासकानामेव फलदर्शनात्। निजविषये प्रमाया विपरीतबुद्धिबाधकत्वेन दारुशिलादिप्रमितिदशायां देवतात्वभ्रमस्य नाशितुमशक्यत्वात्। नन्वेवमुपासनानां नानाविधफलश्रवणेन ब्रह्मणोऽनन्तरूपताऽभ्युपगतावद्वैतभङ्गो गौरवं च प्रसज्येतेति चेत्। न। एकस्यैव भगवतो यदृच्छया कार्यार्थमाविर्भाविताऽविभिन्नाऽनेकमूर्त्तित्वस्य प्रमाणप्रतिपन्नत्वेन तदनवकाशत्वात्। '**अतः परं नान्यदणीयसं हि**' '**परात्परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपं। विश्वं पुराणं तमसः परस्ता**'दितिश्रुतेः। तदेतदभाणि श्रीवल्लभाचार्यचरणैस्तत्वदीपनिबन्धे '**अनन्तमूर्त्ति तद्ब्रह्म ह्यविभक्तं विभक्तिम**'दिति। एतेन तदाऽऽनन्त्येनाऽद्वैतभङ्ग इति निराकृतम्।

यदपि सावित्राद्यालोकभास्यत्वादिना सविशेषत्वेऽब्रह्मत्वापात इति आशङ्कितम्। तन्मन्दम्। सावित्राद्यालोकस्य भागवतत्वेन स्वेनावमतेन स्वावमानाविरोधात्। '**यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक**'मितिगीतावाक्यात्। **सर्वव्यवहारविषयत्वस्यापि** भगवत्कृतस्याऽभ्युपेतव्यत्वात्। '**तं त्वौपनिषदं पुरुषं पृच्छामीत्या**'दिश्रुतेः। '**प्रकाशवच्चावैयर्थ्यात्**' इति-

सूत्राच्च । व्यवहाराविषयताश्रुतेर्जीवसामर्थ्येन तथात्वे तात्पर्यस्य वर्णनीयत्वाच्च । चाक्षुषत्वस्य च श्रुतिस्मृतिसूत्रपुराणसिद्धस्य प्रतिषेद्धुमशक्यत्वात् । तथाहि–'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' 'ज्ञानप्रसादेन विशुद्धसत्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप' 'अपिसंराधने प्रत्यक्षानुमानाभ्यां' 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुज'मित्यादि । नन्वेतेषां दृश्यत्वादिविधायकवाक्यानां 'पराञ्चि खानि' 'अद्रेश्यमग्राह्यं' 'न चक्षुषा गृह्यते नापि वाचा' 'न तत्र सूर्यो भाती'त्यादितन्निषेधकवाक्यैः समं विरोधादेकान्ततः कथमित्थं निर्णय इति चेत् । नैवम् । भगवत्सामर्थ्यजीवेन्द्रियसामर्थ्याभ्यां तद्दृश्यत्वाऽदृश्यत्वयोः सम्भवेन वाक्यानां मिथोविरोधाऽभावात् । अत एव गीतायां 'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात्' 'दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर'मित्यादिना स्वसामर्थ्यादिनैव स्वदृश्यत्वमर्जुनं प्रति भगवानभिदधे । एवं क्रियादिमत्त्वमपि 'परास्य शक्तिर्द्विविधैव श्रूयते स्वाभाविकीज्ञानबलक्रिया चे'त्यादिश्रुत्यनुरोधादवधारणीयम् ।

एतेनाऽऽगमसूत्राद्यसम्मतत्वं व्युदस्तं वेदितव्यम् । अत एव सकलमहर्षिमण्डलीशिरोमण्डनायमानैर्व्यासचरणैः 'प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः' 'आनन्दमयोऽभ्यासात्' 'आह च तन्मात्र'मित्यादिसूत्रैरानन्दाऽकारत्वमेव ब्रह्मणो निरणायि ।

अतः सिद्धं साकृतित्वं ब्रह्मणः । एतेनोदीरितश्रुतिस्मृतिसूत्रपुराण-मर्मानभिज्ञनिर्धर्मकब्रह्मवादिनो भगवदादिष्टखण्डपरशुप्रमुखोपदिष्ट-पाषण्डपद्धतिश्रद्धालवाऽनभीष्टभक्तिवर्त्मद्वेष्टारः शिष्टैः प्रत्यादेष्टव्याः । तस्मात्प्राकृतधर्मानधिकरणमनन्ताप्राकृतधर्मनिरूपिताऽऽधेयतानिरूपि-ताऽऽधारताशालिसामानाधिकरण्याऽनधिकरणसकलधर्माधिकरणं स-र्वभवनसमर्थं न्यायोपबृंहितनिखिलवेदवेदान्तवेद्यं सच्चिदानन्दा-ऽऽकारं तत्परं ब्रह्म पुरुषोत्तमाख्यं परमकाष्ठापन्नं स्तौमीतिपर्यवसितः श्लोकार्थो हृदयालुभिरार्यगृह्यः परिभावनीय इत्यलमतिपल्लवितेन ॥

तातस्य नत्वा चरणाम्बुजं श्रीकल्याणरायस्य कृपाम्बुराशेः ।
ब्रह्मस्वरूपे स्वमतानुरूपां गोपेश्वरो वादकथामकार्षीत् ॥ १ ॥

एतां समेतां सत्तर्कैः स्वसिद्धान्तानुसारिणीम् ।
कृष्णान्तःकरणाः संतो मीमासन्तां मुहुर्मुहुः ॥ २ ॥

इति श्रीमद्गोपेश्वरविरचिता वादकथा संपूर्णा ॥

---

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां गोस्वामिश्रीमद्गिरिधरविरचितः प्रपञ्चवादः ।

पञ्चमो मणिः ।

नमामि श्रीमदाचार्यान्सर्वसामर्थ्यसंयुतान् ।
यैरिदं प्रापितं सर्वं नित्यतां ब्रह्मरूपताम् ॥ १ ॥
कमलाधिपतिं कृष्णं शरणागतवत्सलम् ।
व्रजरत्नकटाक्षेण श्यामं वन्दे चतुर्भुजम् ॥ २ ॥

ननु किमिदमुन्मत्तप्रलपितवद्वदसि, यदिदं नित्यं ब्रह्मरूपमिति । प्रपञ्चस्य मिथ्यात्वेन तस्याऽसत्त्वेनाङ्गीकारात् । तथाहि—**'एकमेवाऽद्वयं ब्रह्म' 'नेह नानास्ति किञ्चने'**त्याद्यभेदबोधकश्रुतिभिया भेदरूपं द्वितीयं तु त्वयापि न स्वीकार्यम् । तथा चैतस्य तद्वत्परिदृश्यमानत्वाच्छ्रुतौ चाऽभेदस्योक्तत्वादुभयाऽविरोधार्थं वासनया जीवाविद्यया वा भिन्नत्वेन प्रतीयमानत्वेन तथात्वात् । अतएव **'एकमेवे'**तिश्रुतावद्वयपदम् । अत एव ज्ञानिनां शुद्धब्रह्मज्ञानादविद्यानाशे तत्कल्पितप्रपञ्चस्याऽपि नाश्यत्वेनोपादेयत्वमिति चेत् । स्वस्यापि सर्वज्ञत्वं मत्वैवं वदन् विदूषकः प्रष्टव्यः । प्रथमं तावदसत्त्वं किं

त्रैकालिकाऽभावरूपं स्वीक्रियत, उत भ्रमकल्पितम्?। नाद्यः[1]। अदृश्यत्वापत्तेः। किंचाऽभावस्य चातुर्विध्येन प्रागभावादित्रयाणामत्राऽकल्पनीयत्वेन परिशेषेणाऽत्यन्ताभावस्योर्वरितत्वेन तस्यापि सप्रतियोगित्वेनास्याप्यसत्त्वेन तदभावाभावात्। 'भूतले घटात्यन्ताभाव' इत्यादौ तु संयोगेन प्रत्यक्षं दृष्टं प्रतियोगिनं घटमारोप्य निषेधः। ननु शशशृङ्गादौ का गतिः?। शशे शृङ्गात्यन्ताभाव इत्येव। गोमहिषादिदृष्टं प्रतियोगि शृङ्गं संयोगेनाऽऽरोप्य तथा[2]। घटात्यन्ताभाव इतिवत्। अथवा न तद्धर्मावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावो वक्तुं शक्यः। गवादिषु प्रत्यक्षत्वात्। तेन तस्मिन् तदीयत्वाभाव इत्यपि साधु। नान्त्यः[3]। तस्य पूर्वप्रमादृष्टपदार्थगतधर्मसदृशयत्किञ्चिद्धर्मग्रहणजन्यत्वात्। तथाहि—'शुक्ताविदं रजत'-मित्यादौ पूर्वकालीनप्रमादृष्टहट्टस्थरजतत्ववद्रजतधर्मसदृशयत्किञ्चिच्चाकचक्यादिधर्मसारूप्येण हि भ्रमः संभवति। प्रकृते तत्कालीनप्र[4]मादृष्टयत्किञ्चिदधिकरणस्यैतदसंभवेन क्वगतधर्मसारूप्येण हि कुत्र कस्य भ्रमः संभवति?। नन्वेतस्मिन्नेव[5] पूर्वं तथात्वमवधार्य[6] पुनरतथात्वमिति[7] युक्तमेवेति चेत्। अनभ्यासवशादेव कत्थसे। अरे कुत्र गतं तदवधार्य निषेध इतीत्याकारकं द्वितीयमित्यपि धीश्चेत्परिदर्शय।

नन्वविद्यामात्रेण प्रतीयमानत्वात्तथेति[8] चेत्?। अथेदं विचार्यते—का सा अविद्या?। किमधिकरणिका चेति प्रश्नद्वयम्। प्रथमपक्षे किमज्ञानरूपा? उत तद्भिन्ना जवनिकावद्यथार्थज्ञान-

१. त्रैकालिकाभावरूपः. २. निषेधः. ३. भ्रमः. ४. पूर्वकालीन. ५. प्रपञ्चे. ६. सत्यत्वम्. ७. मिथ्यात्वम्. ८. मिथ्या.

प्रतिबन्धरूपा? आहोस्विददृष्टविशेषजन्या वा? नाद्या। [1]कारणजिज्ञासायां ब्रह्मणस्तव निर्गुणत्वेनेच्छावत्त्वाभावेन तदिच्छा तदिति वक्तुमशक्यत्वेनाऽविद्यैव तदित्याहत्योत्तरतस्तस्यास्तत्कारणत्वेन तद्रूपत्वाभावात्[2]। न हि दण्डो घटो भवति। नन्वनाद्येव तदिति चेत्। तत्कृत इति पदं भवतामेवाऽनर्थकं स्यात्। ननु समवायिकारणत्वं तस्या[3] इति तत्कारणत्वं तद्रूपत्वमपि। तन्नाशे तन्नाशोऽपि। मृद्घटोऽमृदित्यपि प्रतीतेरिति चेत्। सम्प्रति न्यायरीत्यैवोच्यते। एवमास्तां वा, यद्यविद्याया द्रव्यत्वं स्वीक्रियेत कैरपि। अन्यथा रूपनाशेऽपि पटनाशः। तस्मात्समवायिकारणत्वं द्रव्यस्यैवेति नियमः। न चासमवायिकारणत्वमपीति वक्तुं शक्यम्। तवाऽग्रहव्याघातात्। तथाहि—अज्ञानरूपा सेति वदतस्तवाऽज्ञानमेव सेति प्रतिफलितम्। तथाच नाऽज्ञानोत्पत्तौ तस्यैव कारणत्वं, घटे घटकारणत्वाऽनङ्गीकरणात्[4]। अन्यथा रूपोत्पत्तावपि तस्य कारणत्वस्य दुर्वारत्वमेव। नच द्रव्यविशेषस्य कारणत्वं यथा तथाऽत्रापीति चेत्। न। पूर्वोक्तेन निराकृतत्वात्। न च निमित्तत्वम्। तत्त्वे त्वागतमतद्रूपत्वम्। न हि दण्डो घटो भवति। न द्वितीया। ज्ञानस्य सविषयकत्वेन स्वीकारात्तेषां च तवाऽसत्त्वेनाऽभिमतत्वात्किंविषयकं यथार्थज्ञानप्रतिबन्धं करोतीति विचार्य वक्तव्यत्वात्। निर्विषयतत्स्वीकारे मानाभावात्। न तृतीया। तत्त्वेन जीवेत्यादितवाऽऽग्रहव्याघातात्।

---

१. ज्ञानकारणजिज्ञासायाम्. २. अज्ञानरूपत्वाभावात्. ३. अविद्यायाः. ४. किञ्च तस्य समवायिकारणसापेक्षत्वात् तवैतदतिरिक्तस्य तथात्वाऽभावात् तस्यास्तथात्वस्य वक्तुमशक्यत्वात् अभावात्मकतयापि कारणद्वयस्यापि वक्तुमशक्यत्वात्।

किञ्च, दर्पणादौ बिम्बप्रतिबिम्बवज्जीवानामविद्यायां तव ब्रह्मप्रतिबिम्बत्वमिति स्वीकारात्प्रतिबिम्बस्य दर्पणाधीनत्वेन तद्गतविशेषाणां च तदधीनत्ववत्तेषामविद्याधीनत्वेन तद्गतादृष्टविशेषस्य सुतरां तदधीनत्वात्तज्जनकत्वाऽभावात् । न हि घटो दण्डजनकः दण्डाधीनत्वात् । नन्वेतत्त्रयव्यतिरिक्तैव सेति चेत् । किंलक्षणिकेति वदस्व? । तच्छून्यैव चेत् । मैवम् । प्रमाणाऽभावात् । ननु भवतां जीवाऽज्ञाने किं कारणमिति चेत् । भगवदिच्छैव । '**मत्तः स्मृतिर्ज्ञानमपोहनं च**'त्यादिना । अत एव '**बुद्धिर्ज्ञानमसंमोह**' इत्यारभ्य '**मत्तः एव पृथग्विधा**' इत्यन्तमप्युक्तं श्रीमद्यदुपुरपुरन्दरेण । अत एव '**बुद्धिप्रेरककृष्णस्य पादपद्मं प्रसीदत्वि**'तिवाक्पतेर्वाक् । किञ्च सा सती वाऽसती वा? । नाद्या । द्वैतापत्तेः । न द्वितीया । नेत्येव प्रतिफलितत्वात् । नन्वस्तु सदसद्विलक्षणैव सेति चेत् । न । मानाभावात् । 'परस्परविरोधे ही'तिन्यायाच्च । न चानादिसान्ता भावरूपेति वाच्यम् । ब्रह्मज्ञाननाश्यत्वमिति हेतोस्तदाभासत्वेन अनुमानाऽसंभवात् । अन्वयव्यतिरेकव्यभिचारात् । साध्याभाववद्वृत्तित्वाच्च । द्वितीयपक्षे 'तुष्यतु दुर्जनन्यायेना'ऽस्तु तवाऽविद्या तथा च सा ब्रह्मगता जीवगता वा? । नाद्या । तस्य शुद्धत्वव्याहतेः । किञ्च, तवाऽभिमते जीवतुल्यतापत्तौ '**गौणश्चेन्नात्मशब्दात्**' '**तन्निष्ठस्य मोक्षोपदेशात्**' '**हेयत्वावचनाच्चे**'तिसूत्रविरोधात् । न द्वितीया । जीवस्य त्वन्मते प्रतिबिम्बाङ्गीकारात् । आधेयस्य चाऽऽधाराऽधीनत्वात् प्रतिबिम्बस्य दर्पणाऽऽधारकत्वेन तदधीनत्ववत्तस्याऽप्यविद्यारूपाऽऽधाराऽधीनत्वेन, दर्पणगतः प्रतिबिम्बो न तु प्रतिबिम्बगतो दर्पण इतिवदविद्यागतो जीवो, न

तु तद्गता सेति वक्तव्यत्वात् । किञ्च, जीवगतत्वेन ब्रह्मगतधर्मकल्पने सामर्थ्याभावात् । तथाहि—ब्रह्मगतास्तेऽविद्या कल्पिता इति तु तव मतम् । तथा चाऽसमानाधिकरणत्वात्तथा ।

ननूच्छेद एव तस्याः । त्वदभिमतत्वेनेष्टापत्तिः । भगवच्छक्तित्वे नाऽस्त्येव । दशमस्कन्धे मथुरालङ्करणप्रसङ्गेऽक्रूरदर्शने **'श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया । विद्ययाऽविद्यया शक्त्या मायया च निषेवित'**मितिवाक्यात् । तस्मात्पूर्वोक्तेन प्रतीयमानत्वादसत्त्वमिति वदतस्तवाऽऽविद्यत्वमेव । ननु वासनयैव प्रतीयमानत्वेन तत्तथाऽस्त्विति चेत् । न । पूर्वोक्तदूषणेनैव परिहृतत्वात् । नच स्वप्नवत्सत्त्वेऽप्यसत्त्वमिति वाच्यम् । तस्य पूर्वानुभूतिविषयविशेषजन्यत्वेन तेषामसत्त्वेन तदसंभवात् । वैधर्म्याच्च न स्वप्नादिवदितितत्त्वसूत्रविरोधाच्च । तथा सत्यपि जगदसदिति वदन्तो बाह्या एव ।

ननु सदसतोः परस्परं विरुद्धत्वादनिर्वचनीयं जगदिदमेव मिथ्यात्वम् । किञ्च, श्रुतिरपि तथात्वं ब्रूते **'नेह नानास्ति किञ्चने'**ति । तस्मान्मिथ्यात्वखण्डनमयुक्तमिति चेत् । न । अनिर्वचनीयस्य मिथ्यात्वे प्रमाणाऽभावात् । ऊरीक्रियते चेद्ब्रह्मणोऽप्यनिर्वचनीयत्वेन मिथ्यात्वमापद्यते । यतोऽनिर्वचनीयत्वञ्च निर्वचनीयत्वरहितत्वम् । तथाहि **'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः'** । नत्वेवम् । न वा पाणिपादसहितत्वम् । न वाऽजवनत्वाग्राहकत्वम् । शेषं पूर्ववत् । अत एव महाभारते वैशम्पायनसहस्रनामस्तोत्रे **'अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महानि'**ति । किञ्च, नहि 'नेहनानास्तीति'श्रुतिर्मिथ्यात्वं वदति । किन्तु

द्वैतप्रतिषेधम् । यतः 'पुरुष एवेदं सर्वं' 'स आत्मानं स्वयमकुरुत' 'स वै सर्वमिदं जगत्' 'सर्वं खल्विदं ब्रह्म' 'तत्सत्यमित्याचक्षते' । विष्णुपुराणे प्रथमेंशे 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत्' । गीतायां च 'नासतो विद्यते भावो नाभावो विद्यते सत' इत्यारभ्य 'न कश्चिद्वक्तुमर्हती'त्यन्तम् । सूत्रकारोऽपि 'असदिति चेन्न प्रतिषेधमात्र ( पर )त्वात्' 'असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्' 'सत्वाच्चावरस्ये'त्यादिना तथैवाह ।

ननु अनिर्वचनीयस्य मिथ्यात्वे प्रमाणाऽभावादिति चेत् । न । अनुमानस्य प्रमाणत्वात् । तथाहि—जगदनिर्वचनीयं सदसद्भ्यां वक्तुमशक्यत्वात् । शुक्तिरजतवदिति । अत्र हि हेतोः साध्याविशिष्टत्वेनानुमानस्याप्रयोजकत्वात् । अस्तु वा 'तुष्यतु दुर्जनन्यायेन' । तथापि जगदनिर्वचनीयत्वसाध्ये । नत्वनिर्वचनीयस्य मिथ्यात्वे । ननु यदुक्तं ब्रह्मणोऽप्यनिर्वचनीयत्वेन मिथ्यात्वमिति । तदसत् । अनिर्वचनीयत्वं नाम सदसद्भ्यां वक्तुमशक्यत्वं, ब्रह्म तु सत्त्वेन वक्तुं शक्यत्वादिति चेत् । न । 'न सत्तन्नासदुच्यते' । 'नायं गुणः कर्म न सन्नचाऽसन्नि'तिगीतापुराणवाक्यैर्न ब्रह्म सन्मात्रेणापि प्रतीयमानम् । इदमेव तस्य अनिर्वचनीयत्वम् । अत एव 'यतो वाच' इतिश्रुतिः । किञ्च प्रपञ्चो न विकारः । विचाराक्षमत्वात् । तथाहि—कस्य विकारः ? । न ब्रह्मणः । तस्य अविकृतत्वात् । नेतरस्य । त्वन्मते ब्रह्मभिन्नस्य सर्वस्य तद्रूपत्वात् । ननु ब्रह्मभिन्नं सर्वं मिथ्या । ब्रह्मभिन्नत्वात् । शुक्तिरजतेन दृष्टान्तसिद्धिः । तेन ब्रह्मभिन्ननिखिलप्रपंचमिथ्यात्वसिद्धिरिति

चेत् । न । पक्षतावच्छेदकहेतोरैक्येनांशतः सिद्धसाधनात् । दृष्टान्तासिद्धेश्चेति ।

स्यादेतत् । ननु माऽस्त्वसत्त्वमनित्यत्वमेवास्तु । तथाहि—तत्त्वं ध्वंसप्रतियोगित्वे सति प्रागभावप्रतियोगित्वमित्याकारकत्वं च जगन्मध्यपातिघटपटादिपदार्थे दृष्टम् । 'घटो भविष्यति भूतल' इत्यादिप्रतीतिबलादिति चेत् । न । किन्नाम भावित्वं भूतत्वं धर्मविशेष एव ? । तथा च धर्मस्य धर्मिणि समवायसंबन्धसंबद्धत्वेनाऽभिन्नत्वात्तस्य भाविभूतसमयासत्त्वान्निराश्रयत्वेन स्थित्यनुपपत्त्या तत्समये तत्स्वीकारस्याऽवश्यवक्तव्यत्वात् । नन्वन्यथानुपपत्तिभियैव तथात्वं चेत्काल एव सास्तु इति चेत् । मैवम् । कालस्तथेतिप्रतीतेर्दुर्वारत्वात् । एवं च सति तत्तत्समयेऽपि धर्मस्वीकार आवश्यकः । ननु घटादेः सदा सत्त्वेन भावित्वादि वक्तुमशक्यमिति तत्रापि तथात्वं चेद्विलक्षणकालेऽपि तथाप्रतीतिर्दुर्वारेति तवैवोक्तिर्दूषणग्रस्तेति चेत् । न हि शूकरसमूहजनितभयेन कदाचित् केसरी बिभेति । तथाहि—'पुरुष एवेदं सर्वं । यद्भूतं यच्च भव्य'मितिश्रुत्या तयोरपि सत्त्वं सदात्मकत्वेनाऽवगम्यत इति श्रुतिसिद्धम् । तस्यास्तु स्वतःप्रामाण्यम् । तथा च स्वतःप्रामाण्ये तत्सङ्कोचेन धर्मधर्मिणोरपि सत्त्वं यथा मन्तव्यं, तथैतत्सङ्कोचेनैव तस्मिन्कालेऽवर्तताऽनाविर्भूतः स इत्यपि मन्तव्यम् । तथा सति पदार्थसत्त्व एव भाविर्भूत इत्यादिप्रतीतिर्नित्यसत्त्वेऽनित्यत्वेऽपि । तत्तत्कालेऽसत्त्वमेव । अवर्तमानत्वात् । अस्माकं त्वदर्शनमात्रं न तु [1]तत्त्वम् तस्योपजीवकोपजीवकत्वात् ।

---

१ असत्वम् ।

तथाहि—ननु तासां न स्वतःप्रामाण्यम्। किंत्वीश्वरोक्तत्वात्तस्य चानुमेयत्वात्। तथा च तादृशं तदुक्तत्वात्[1] तथात्वं[2], न स्वत इति चेत्। न। मन्वादीनां सर्वज्ञत्वे मानाऽभावेन पूर्वपूर्वसर्गव्यवहाराऽनुपपत्त्या तदन्यत्वकल्पने गौरवेण च तव सिद्धो हीश्वरः प्रयोज्यप्रयोजकरूपेण व्यवहरति 'घटमानय गां नये'त्यादिना। सर्वतो बलवती ह्यन्यथानुपपत्तिः। ततश्च तत्रत्यो बालस्तच्छब्दश्रवणानन्तरं तद्व्यवहारात्संकेतग्रहणं करोति नयनानयनाभ्यां कृतिविषयात्मकम्। ततो घटादिपदं घटत्वाद्यवच्छिन्ने शक्तमित्यपि। तदनन्तरं भूयो दर्शनेन तत्तत्कृतिविषयसादृश्यं वस्तुषु पश्यतीति शब्दोपजीवकत्वमध्यक्षस्येति[3] सिद्धम्। अतएवाऽऽधुनिकस्याऽऽपि बालस्याऽयं पिता भ्रातेत्यादिवाक्यश्रवणानन्तरं तस्य तथा तथा दर्शनं ऋते जनन्याः। भगवदिच्छाधीनयावत्कालं जीवनादृष्टस्य विद्यमानत्वात्। अन्यथा तदसंभवात्। एवं च तथाविधवह्निधूमज्ञाने क्वचिन्महानसादाविन्धनसंयोगादिना फूत्कारद्वारा तज्जन्यत्वं तस्मिन्पश्यति। तदनन्तरं यो यज्जन्यः स न तद्व्यभिचारी यथा कपालजो घट इति जानंस्तत्राऽपि तज्जन्यत्वेनाव्यभिचारित्वं जानाति। ततश्च कदाचित्पर्वतादावनवच्छिन्नमूलं तं पश्यंस्तज्जन्यत्वेनाऽव्यभिचारित्वज्ञानेन वह्निं स्मरति। पूर्वदृष्टसंस्कारस्यापि विद्यमानत्वात्। सैवानुमितिरित्युच्यते तार्किकैः।

तेन च दर्शनोत्तरकालीनत्वेन प्रत्यक्षोपजीवकत्वमनुमानस्येति सिद्धम्। तस्मादुपजीव्योपजीव्यत्वाच्छब्दस्य स्वतःप्रामाण्यम्। कारणान्तराऽनपेक्षणात्। तथा च शब्दात्मकत्वात् तासां तथात्वं निर्व्यूढमित्यवेहि। ननु भावी नष्ट इत्यादिप्रतीतेः का गतिरिति चेत्। यथाधात्वर्थे

१ ईश्वरोक्तत्वात्। २ प्रामाण्यम्। ३ प्रत्यक्षस्येति युज्यते।

स्वीकार्येत्येव । एवञ्च पदार्थानामदर्शनदशायामनाविर्भूतत्वं, तद्भिन्ने तद्भिन्नत्वमित्यागतम् । अयं भाव्ययं भूत इत्यादिप्रतीत्यनुरोधात् । एतेनाऽनित्यानुचराणां वर्तमानप्रागभावेत्यादिलक्षणं निरस्तम् । सर्वेषां नित्यत्वात्पूर्वोक्तलक्षणञ्च । ननु सर्वस्य नित्यत्वाद्भाविभूतवर्तमानानामपि तथात्वाद्युगपदुपलम्भस्य दुर्निवारत्वमिति चेत् । मैवम् । भगवदिच्छाधीनत्वात् । तथाहि—पृथिवीजलयोस्तदात्मकत्वेनैकत्वेऽपि तस्यां गन्धो न तु तस्मिन्नित्यत्र किं नियामकम्? । इच्छैव । तथाऽत्राऽपीति तथात्वेनैकरूपत्वेऽपि न तथा । विष्णुपुराणे चोपपादितमाविस्तिरोभाववत्त्वं जगतस्तदेतदि'त्यनेन । विस्तरस्त्वाविर्भावतिरोभाववादे प्रतिपादितः प्रभुचरणैः । किञ्चाऽर्जुनावनाय कृतसारथ्येन सर्वज्ञेन भगवतैवोक्तं **'नासतो विद्यते भाव'** इत्यारभ्य, **'न कश्चित्कर्तुमर्हती'**त्यन्तम् । तस्मान्नाऽनित्यत्वम् ।

स्यादेतत् । ब्रह्मण एकविधत्वेन जगतश्चाऽनेकविधत्वेन कथं तद्रूपत्वमिति चेत् । अवधेहि—**'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती'ति 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति' 'प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्वानसृजत' 'अहं सर्वस्य प्रभवः' 'यस्यान्तः स्थानि भूतानि' 'यथाकाशः स्थितः' 'पितामहस्य जगतः' 'गतिर्भर्ता प्रभुः साक्षी' 'मम योनिर्महद् ब्रह्म' 'जन्माद्यस्य यत'** इत्यादिश्रुतिस्मृतिसूत्रैर्ब्रह्मणः सर्वकर्तृत्वं समवायिकारणत्वं तदधिकरणत्वं चागतं तथा सति । न हि कार्यं समवायिकारणाद्भिन्नं मृद्धटवत् । तथा च घटानामनेकविधत्वेऽपि मृद एक-

विधत्वेऽपि न तद्भिन्नत्वम् । किन्तु परिणामे तद्रूपत्वमेव । मृद्येव पर्यवसानात् । तथैतस्य[1] तथात्वे तस्य[3] च तथात्वेऽपि[4] न तथात्वम्[5] । तत्रैव पर्यवसानात् । अत एव समवायिकारणनाशे कार्यनाशस्तस्मात्तदभिन्नमिति तार्किकाः । इह तु तद्वैपरीत्येनैव व्याप्तिरिति गृहाण । नन्वत्र को वा परिणामः ? । भगवदिच्छाधीनाज्ञाननिवृत्तिरेव । अत एव निवृत्ताऽज्ञानानां ब्रह्मविदां सर्वं तदात्मकमिति मतिः । ननु तर्हि विकार्यत्वं मृद्वदिति चेत् । स्यादेव । स्याद्यदि समवायिकारणत्वमधिकरणत्वमात्रं चेत् । नत्वेवम् । कर्तृत्वस्यापि सत्त्वात् । न हि मृदि कर्तृत्वम् । जडत्वात् । तर्हि दृष्टान्तवैषम्यमिति चेत् । न । दार्ष्टान्ते दृष्टान्तीययत्किञ्चिद्धर्मग्राह्यत्वात् । अन्यथा मुखेऽपि चन्द्रगतकलङ्कित्वापत्तिरिति महद्दाक्षिण्यं तव ।

यद्वा **'स वै सर्वमिदं जगत्' 'पुरुष एवेदं सर्वं' 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं' 'वासुदेवः सर्व'**मित्यादिश्रुतिस्मृतिभिरेवेति सुगमः पन्थाः । अत एव **'अखण्डं कृष्णवत्सर्वं' 'जगत्कर्ता जगन्मय'** इति वागधीशचरणैः[6] । स्यादेतत् । ब्रह्मणो निर्गुणत्वेऽमुष्य सगुणत्वे, कथं तद्रूपत्वमिति ? । तथाहि **'अथात आदेशो नेति नेति' 'अस्थूलमनणु' 'अप्राणो ह्यमनाः' 'यतो वाचो निवर्तन्ते' 'सर्वेन्द्रियविवर्जितं' 'न सत्तन्नासदुच्यते' 'अव्यक्तोयमचिन्त्योयं' 'स वै न देवासुरमर्त्यतिर्यक्' 'अरूपवदेव हि' 'प्रकृतैतावत्त्वं ही'**त्यादिश्रुतिस्मृतिपुराणतत्त्वसूत्रैः तथात्वप्रतिपादनात् । युक्तं चैतत् ।

---

१ जगतः । २ अनेकविधत्वे । ३ ब्रह्मणः । ४ एकविधत्वेऽपि । ५ भिन्नत्वम् । ६ उक्तमिति शेषः ।

यद्येवं न स्यात्तदास्मात्सगुणस्य परिच्छिन्नत्वादव्यापकत्वमेव । तस्मादिदमेव साध्विति चेत् । वयं न सहामहे । मूर्खजल्पितत्वात् । तथाहि—ब्रह्मणोऽलौकिकत्वेन श्रुत्येकसमधिगम्यत्वात्तासां च **'अस्थूलमनणु' 'सहस्रशीर्षा पुरुष'** इत्यादिनोभयविधप्रतिपादकत्वात्परस्पराविरोधाय किमादृतम् ? । उपजीव्योपजीवकभावेनैकतरबाधस्तु वक्तुमशक्यः । तत्त्वेनैव तौल्यात्[1] । सन्देहादलक्षणमित्यपि तथा । तव शून्यवादाऽऽपत्त्योद्भूतनास्तिकत्वाऽऽपत्तेः । तथा सति तेष्वेवान्तर्भावेन चारितार्थ्ये किमर्थमेतावद्गौरवमधिकमतस्तथेत्यप्यवधारय ।

तस्माद् व्याख्यानतो विशेषप्रतिपत्तिरिति मन्तव्यम् । तथा च शृणुष्वावहितः । सन्देहवारणार्थं शास्त्राणां प्रवृत्तिः । स[2] च तत्त्वाज्ञानादेव । तज्ज्ञानं च शास्त्रादेव । तत्रैव सन्देह उत्तरोत्तरशास्त्रतस्तद्गतयुक्तिभिश्च व्यवस्था कर्तव्या । तथाहि । श्रुतिषूभयविधप्रतिपादनात् किंलक्षणं तदिति निर्गुणब्रह्मजिज्ञासाया**'मथातो ब्रह्मजिज्ञासे'** त्यनन्तरं, **'जन्माद्यस्य'** इत्यवदत्सूत्रकार एव । अन्यथा जगत्कर्तृत्वं न स्यात् । स्वातन्त्र्याभावात् । नन्वौपाधिकपरमेव तदिति चेत् । **'गौणश्चेन्नात्मशब्दात्तन्निष्ठस्य मोक्षोपदेशाद्धेयत्वावचनाच्चे'** तिसूत्रविरोधः । न ह्यौपाधिकनिष्ठस्य मोक्षः । किञ्चौपाधिकत्वे तवैव जीवतुल्यतया प्रत्युत हेयत्वमित्यग्रिमविरोधः । व्यासस्याऽसर्वज्ञत्वं च तज्जिज्ञासाया इति, तस्यापि तथात्वं मन्वानो

---

१–अभावनिरूपणस्य प्रतियोगिनिरूपणाधीनत्वात्सधर्मकप्रतिपादकश्रुतीनामप्युपजीव्यत्वमिति तौल्यमित्यर्थः । २–सन्देहः ।

व्यग्र एव, । तेषां भगवदवतारत्वात् । अत एव **'अरूपवदेव ही'**
ति **'प्रकृतैतावत्त्वं ही'ति,** ।

अयमर्थः । रूप्यत इति रूपं व्यवहारविषयः । तद्वत्सर्वम् । इदं त्वितो विलक्षणम् । व्यवहारविषयवन्न भवतीति यावत् । अनेनेतिव्युत्पत्त्या करादिभिन्नं, तद्वान् भिन्न, इति लोके यथा तथा नात्र । किन्तु करादितोऽभिन्नमित्यपि । तेषामेव तद्रूपत्वात् । रूपस्यापि रूपम् । अन्यथा **'अरूपमेव ही'** त्युचितम् । ननु गुणानां कथं तद्रूपत्वमिति चेत् । कलय । **'तत्प्रधानत्वा'** दित्यग्रिमेणावगम्यत्वात् । एतेन परम्परया ब्रह्मप्रतिपादकत्वात् सगुणनिरूपकाणामुपजीवकत्वमित्यपि निरस्तम् । रूपरूपप्रतिपादकत्वात् । तस्याऽभेदेन ब्रह्मत्वात् । प्रत्युत तासां तथात्वनिषेधमग्रेकृत्य प्रतिपादकत्वात् ।

एतदपि त्वदुपरि । अस्माकं तु सर्वासां तत्प्रतिपादकत्वेनैव सर्वत उपजीवकत्वमेव । अत एव **'प्रकृतैतावत्त्वं ही'** ति । प्रकृते लोके यदेतावत्त्वं स्थूलत्वादि । अथवा लौकिकमेतावत्त्वं तदादि, तस्य निषेधः । अन्यथा प्रकृतपदस्यैतावत्पदस्य च सर्वमित्यर्थकत्वात्प्रकृतैतावत्त्वमित्यत्रैकमेवोक्तं स्यात् । प्रयोजनाभावाद्गौरवाच्च । एवं सति निर्गुणत्वं लौकिकगुणाऽनधिकरणत्वमित्यागतम् । अत एवा**'ऽऽनन्दमात्रकरपादमुखोदरादि'** रित्यानन्दमात्रत्वेन लोकभिन्नत्वम् । करादिमत्त्वेन सगुणत्वम् । ननु तथात्वे[२] परिच्छिन्नत्वादव्यापकत्वमिति चेत् । न । तद्विशिष्टस्यैव तथात्वेन श्रुतिप्रतिपादितत्वात् ।

---

१–अरूपवदेवेति सूत्रार्थ इत्यर्थः । २–सगुणत्वे ।

तथाहि—'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मा अन्तर्याम्यमृत' इति 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्त्वाऽत्यतिष्ठद्दि'त्यादिना । अत एव 'प्राकृतधर्मानाश्रयमप्राकृतनिखिलधर्मरूपमिति निगमप्रतिपाद्यं यत्तच्छुद्ध' मित्यग्निकुमारैः[2] । ननु श्रुत्युक्तेनैव तथात्वमिति ब्रूषे । तर्हि तदुक्तास्तेऽपि लौकिका एवेति चेत्? । न । अहो ब्राह्मण्यं विशदीभवति । पूर्वोक्तश्रुतिप्रणीताऽनेकलक्षणलक्षितो लोके व्यापकत्वेन कश्चिद् दृष्टश्चेन्मामप्युपदर्शय । तथा चावधारय । कलिकालक्रमानुसारेण[3] विकलत्वमवाप्स्यसि । भगवत्प्रेरिता बुद्धिस्तवेत्याकारिका यतः । नन्वप्रसिद्धानपि बोधनार्थं निषेधति सेति चेत् । न । जगदप्रतीतेः । तथाहि—धर्मप्रतिपादकश्रुत्यनुरोधेन धर्मानारोप्य निषेधतीति तवाभिमतम् । नहि तच्छ्रुतिसिद्धं यदारोप्य निषेधति । न च लोकसिद्धमेव तदनूद्य निषेधयतीति वाच्यम् । तवैव वदतो व्याघातात् । बाधितविषयत्वाऽऽपत्तेश्च । 'प्रक्षालिताद्धी' तिन्यायाच्च । अन्योन्याश्रयाच्च । एतेन निर्धर्मकत्वं लौकिकतद्राहित्यमित्यपि ज्ञेयम् । तस्मादनेन पथा निर्गुणत्वं सगुणत्वं व्यापकत्वं च ब्रह्मणः । न तु त्वदुक्तेन ।

यद्वा 'तदेजति तन्नैजति तद्दूरे तदन्तिके' 'अपाणिपादो

---

२—उक्तमिति शेषः । ३—कलीत्यसावधिक इव पाठो भाति यतः—

कालक्रमाऽनुसारेण विकलत्वमवाप्स्यसि ।
भगवत्प्रेरिता बुद्धिस्तवेत्याकारिका यतः ॥ १ ॥

एवमिदं पद्यं भाति ।

**जवनो ग्रहीता' 'अणोरणीयान्महतो महीयान्' 'असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च। बहिरन्तश्च भूतानामचरं चरमेव च' 'आकाशमिव केवलं' 'नाभिर्नभोग्नि'**रित्यादिश्रुतिस्मृतिपुराणवाक्योक्तविरुद्धसर्वधर्माधारत्वेनाऽपि[1]। अत एव **'अनन्तमूर्ति तद् ब्रह्म ह्यविभक्तं विभक्तिमदि'**ति श्रीमदाचार्यैः[2]। एतेन लौकिकालौकिकत्वेनाऽप्येतच्छङ्का निरस्ता। सर्वस्य तद्रूपत्वात्। तथा चाऽस्मिन् भगवद्बुद्धिविपरीतबुद्धिमत्त्वमेव लौकिकत्वमिति जानीहि। एतदपि त्वत्समाधानाय। वस्तुतस्तु सर्वसामर्थ्यसहिते सर्वरूप ब्रह्मणि न कोऽपि विरोधः। **'न हि विरोध उभयं भगवती'**ति सूत्रकारोक्तत्वात्। विस्तरस्तु विद्वन्मण्डनेऽनुसन्धेय इति दिक्।

ब्रह्मरूपे प्रपञ्चेऽस्मिन्वादिना परिकल्पिता।
स्वभ्रमात्कियती शङ्का यथामति निवारिता॥ १॥
विभाव्य दूषणीयं चेत्सन्तोषं प्राप्स्यसे बुध।
अन्यथा मम का हानिः परं सा यास्यति त्वयि॥ २॥
श्रीविट्ठलपदसरसिजनतितिमुक्ताखिलाऽज्ञानः।
विद्वन्मण्डनसरणिरचीकॢपद्गिरिधरः[3] किञ्चित्॥ ३॥
एतेनास्मत्पतिर्योऽस्ति प्रभुः श्रीद्वारकेश्वरः।
स एव हि प्रसन्नोऽस्तु किं वृथा बहुभाषणैः॥ ४॥

---

१—सगुणनिर्गुणत्वादिकमस्तीति शेषः। २ उक्तमिति शेषः। ३—एतेन गोस्वामिश्रीमद्गिरिधराणां कृतिरियमिति ज्ञायते। पुस्तके तु समाप्तीतिश्रीचिह्नविरहात्कर्तुर्नाम न प्राप्तम्।

॥ श्रीः ॥

श्रीकृष्णाय नमः ।



# पुष्टिमार्गसिद्धान्तवाङ्मालायां गोस्वामिश्रीमद्व्रजरायविरचितो ब्रह्मवादः ।



## षष्ठो मणिः ।

**विशेषैः प्राकृतैः शून्यमप्राकृतविशेषवत् ।**
**अशेषोपनिषद्वेद्यं परं ब्रह्म वयं स्तुमः ॥ १ ॥**

ननु कथम्? । इत्थम् । पूर्वनिखिलप्रमाणसिद्धत्वात् । इति चेत् । न सर्वागमविरुद्धत्वात् । तथाहि—**'सर्वं खल्विदं ब्रह्म' 'सर्वं तज्जलानिति' 'अहंबहुस्यां' 'सहैतावानास' 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा' 'जन्माद्यस्य यतः शास्त्रयोनित्वा'**दित्यादिश्रुतिस्मृतिसूत्रैः सर्वस्यापि जगतो ब्रह्मात्मकत्वमवधारितमित्येतदन्तःपातिनामपि तेषां तत्त्वमेवेति कथं विशेषाणां प्राकृतत्वं कथं वा तन्निषेध इति चेत् । सत्यम् । **'स एकाकी न रमते स द्वितीयमैच्छत्'** । **'अहं बहु स्या'**मितिश्रुत्येकवाक्यतायां रमणार्थमेव नामरूपवैचित्र्येण स्वाविर्भावेच्छां कृतवानित्यर्थो लभ्यते । वैचित्र्यं चोच्चावचत्वकृतम् । तच्च न्यूनाधिकांशमन्तरा न सम्भवतीत्यनन्तशक्तित्वात्सच्चिदानन्दांशानेव यथानुरूप्येण तिरोभाव्य जडजीवान्तर्यामिरूपेण

स्वयं प्रादुर्भूतः । **'आविर्भावस्तु विद्यमानस्य वस्तुनोऽनुभवविषयतायोग्यत्वम्' 'तदयोग्यत्वं च तिरोभावः ।'** अत्राऽनुभवस्तु जैवो ग्राह्यः । जीवान्तर्यामिसाधारणो वा ।

तत्र तिरोहितचिदानन्दत्वे जडत्वम् । तिरोहितानन्दत्वे हि जीवत्वम् । प्रतिबिम्बत्वादिरूपमपीदमेव ज्ञेयम् । आविर्भूतानन्दत्वे ब्रह्मत्वम् । तदेतदुक्त**'माभासप्रतिबिम्बत्वमेवं तस्ये'**-त्यादिनाऽऽचार्यचरणैर्निबन्धे । अतिरोहितसच्चिदानन्दांशत्रयत्वमन्तर्यामित्वमिति । एवमेव भगवच्छब्दवाच्यानामैश्वर्यादिषण्णामपि धर्माणां तिरोभावमविद्यासम्बन्धेन जीवे कृतवान् । तथैव बन्धो जन्ममरणदेहादिरागरूपं विपरीतज्ञानञ्चाविद्ययैव । **'बन्धोऽस्याविद्यये'**तिवाक्यात् । जीवस्यैव नान्ययोः । प्रयोजनाभावात् । **'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'**विति वैयाससूत्रादपि तथा । जडे तु चित्तिरोभावादेवैश्वर्यादीनामपि तथा । चेतनधर्मत्वात्तेषाम् । तथा चैतादृशस्य जीवस्याऽविद्यकं ब्रह्मस्वरूपे तद्धर्मेषु च विपरीतज्ञानं भवति । तच्च जडजीवरूपे ब्रह्मण्यब्रह्मत्वेन ज्ञानम् । इदमेव स्वरूपाज्ञानम् । सत्यत्वाद्यनेकाऽलौकिकधर्मेषु चासत्यत्वविकारित्वाद्यनेकलौकिकत्वेन ज्ञानम् । एवं च सत्यविद्यासम्बन्धेन विषयीकृतालौकिका ये जडजीवधर्मास्त एव प्राकृतविशेषाः । तेषामनाश्रयत्वात्तैः शून्यमित्यर्थः । **प्रकृतिसम्बन्धसहकृतेन्द्रियज्ञानविषयत्वं प्राकृतत्व**मिति लक्षणं सिद्धम् ।

प्रमाणञ्चात्र निषेधिका एव श्रुतयः । अयं बन्धोऽप्राप्तबोधस्तार्तीयः । नाऽत्र दाशमिको न्यायः (?) । 'विशेषैः प्राकृतैः

शून्य'मितिपदेनैतेन निषेधश्रुतयोऽपि निषेधविषयाः प्राकृतविशेषविषयप्रदर्शनमुखेन व्याख्याता ज्ञेयाः । यद्यप्येतादृशनिषेधेनैव वक्ष्यमाणार्थसिद्धिस्तथापि विशेषत्वावच्छिन्नस्य प्राकृतत्वात्तदितरधर्माणां चाऽप्रसिद्धेर्विधायकश्रुतेश्चान्यपरत्वान्निर्विशेषमेव ब्रह्म सिद्ध्यतीति मतान्तरव्युदस्तये विशेषणान्तरमाह—**अप्राकृतेति** । न प्राकृता अप्राकृताः । प्रकृतिसम्बन्धसहितेन्द्रियाऽविषयाः । ईदृग्विशेषवदित्यर्थः । प्रमाणं चाऽत्र पूर्वोदाहृतश्रुतयः । श्रुत्याद्युदाहृतधर्माणामपि मायिकत्वात्कथं तथात्वमिति चेत् । नैवम् । तेषां समायिकत्वे प्रमाणाऽभावात् ।

ननु निषेधश्रुत्यनुरोधात्तथा कल्प्यते? । नैतद्युक्तम् । निषेधश्रुतेः प्राकृततद्विषयत्वात् । अन्यथा पाणिपादादिमत्त्वं निषिध्य **'जवन'**इत्यादिना **'पराऽस्य शक्तिरि'**त्यादिना च क्रियाज्ञानविधानवैयर्थ्यापत्तेः । नन्वन्तःकरणशुद्धिहेतूपासनार्थत्वात्तेषां न वैयर्थ्यम्? । **'अपाणी'**त्याद्युक्तनिर्विशेषस्य ध्यातुमशक्यत्वात् । उपासनार्थमलौकिकानामेव तेषां विधानमिति चेत् । न । लोकप्रसिद्धत्वेन तेषां लौकिकत्वादिति चेत् । नैवम् । पादादिसाधनाहेतुजवनादिक्रियाया अलौकिकत्वादेव । स्वरूपज्ञानार्थं निर्धर्मकत्वविधानमुपास्त्यर्थन्तु धर्मविधानमितिवाक्यभेदापत्तेश्च । भ्रान्तिप्रतिपन्नविषयवैशिष्ट्येनोपासनया तच्छुद्धेरेवाऽजननाच्च । **'अन्यथा सन्तमि'**त्यादिनिन्दाश्रुतेः । नचाऽसतोऽपि वैशिष्ट्यस्य ज्ञानं **'शाखाचन्द्र'**न्यायेन स्वरूपावगतिसाधनमिति नैतद्दोषावसर इति वाच्यम् । दृष्टान्तवैषम्यात् । नहि शाब्दं ब्रह्म प्रत्यक्षम् । यस्मिंश्चन्द्र इव धर्मा आरोप्यन्ते । नापि पाणिपादराहित्येऽपि जवनग्रहीतृत्वादयो

धर्माः कचित्प्रत्यक्षाः । तथा चाऽधिष्ठानाधिष्ठेययोरुभयोरप्यप्रत्यक्षत्वात्तद्दृष्टान्तोऽपि निरस्तः । किञ्चाऽऽरोपोऽन्यधर्मस्यान्यत्र स्थापनम् । इत्थं च सति स्वनिरूप्यधर्माणां लोकाप्रसिद्धतयाऽन्यदीयत्वाभावादारोपलक्षणाऽसंगतेर्नारोपोऽपि वक्तुं शक्यः । अत एव न निषेधविषयत्वमपि तेषाम् । प्रतीतस्यैव निषेधात् ।

न च लोकेऽस्मद्दृगविषयत्वेऽपि श्रुतिदृष्टिगोचरत्वेनारोपनिषेधौ नानुपपन्नाविति वाच्यम् । लोके मूर्ताऽमूर्तविलक्षणरूपसत्त्वे 'द्वे वावे'ति श्रुतिविरोधात् । न चेदमस्मज्ज्ञानानुवाद इति वाच्यम् । तथापि तयोरनुपपत्तेः । ननु कथमिति चेत् । इत्थम् । श्रुतिर्हि दोषदुष्टदृष्ट्या किं तान्विषयीकरोति शुक्तिरजतवत्? । किंवा गुणदृष्ट्या रजते रजतत्ववत्? । नाद्यः । रजतवदन्यत्राऽदर्शनात्तद्भ्रमानुपपत्तेः । नचास्मदादिवत्तासामविद्यावशाद्विपरीतज्ञानम् । जीववत्तासामविद्यावशाद्विपरीतज्ञानम् । सम्बन्धानुक्तेः ।

द्वितीये तन्निषेधाऽनुपपत्तेः । ब्रह्मणः सदैकरसत्वान्नाऽवस्थाभेदः । किंचोपासनार्थमसदुपदेशे प्रतारकत्वापत्तेश्च । उपासनार्थत्वे तु तेषां सर्वतः पाणिपादत्वादिधर्माणां ब्रह्मवदलौकिकत्वेन मनसाऽप्याकलयितुमशक्यत्वेन तद्वत्त्वेन, त उपासनाया एवाऽसिद्धेस्तन्निरूपणाऽऽनर्थक्यापत्तेश्च । निराकारोपासनवत्साकारोपासनस्याऽप्यशक्यतया भक्षितेऽपि लशुने न शान्तो व्याधिरिति दोषतादवस्थ्याच्च । ननु चोपासनायां हि वैशिष्ट्यज्ञानमपेक्षितम् । तच्च 'नद्याः कच्छे गावश्चरन्तीतिवत्सौन्दर्यस्य तरंगिणी' त्यादिवद्वा तद्विषयकं श्रौतं शाब्दमस्त्येव । तेनैव च निराकांक्षा सा । न तत्साक्षात्कारमपेक्षितमिति नाऽनर्थक्यमिति चेत् । नैतद्युक्तम् । तथा-

हि। उपासनादिकमिच्छा, क्रिया, ज्ञानं, तद्विशेषो वा?। तत्र नाद्यः। सा किं तावद्धर्मविशिष्टस्य दर्शनेच्छा?। तत्प्राप्तीच्छा वा?। तज्जिज्ञासा वा? । तिसृणामपि तासां, वस्तुनो निर्गुणत्वात्तस्य त्वन्मतेऽसम्भवात् न द्वितीयः । सापि किंतदुद्देश्यकहोमतादिरूपा क्रिया ?। किंवा द्रव्योपचारैस्तदर्चनादिरूपा?। आद्ये तादृशविधेरेवाऽभावान्न सा । द्वितीयेऽनिर्देश्ये तदसम्भवान्न तद्रूपापि सा । तृतीये तु मननरूपं तत्तद्वक्तव्यम्?। तथा सति निर्गुणस्यापि मननात्तद्वैशिष्ट्यज्ञानमकिंचित्करमेव। नियमेन तत्कारणत्वाऽभावात्।

ननु नाऽकिंचित्करत्वम्। बुद्धिस्थैर्यद्वारा निर्गुणमननार्थमेव तन्मननाङ्गीकारादिति चेत्। न। सविशेषमनने वा निर्विशेषमननेऽपि, तत्प्रतिपादकवाक्यार्थबोधातिरिक्तसाधनान्तराऽनपेक्षणात्। दृश्यतेऽपि चेदानीन्तनपरिव्राजकेषु विनैवोपासनां तत एव मननम्।

अथ मायाजन्यत्वमेव मायिकत्वमिति चेत्। तत्र ब्रूमः। मायायाः समवायित्वमसमवायित्वं वा?। नाद्यः । मायाधर्मत्वापत्तेः। समवेतानां समवायिकारणे ब्रह्मणि कार्यैकार्थकारणैकार्थप्रत्यासत्त्योरभावात्। तृतीये तु दंडचक्रादिवत्तत्त्वे ब्रह्मणि वस्तुतस्तादृशधर्मसिद्ध्या निर्विशेषत्वाऽसिद्धेः । किञ्च दंडादिवन्मायाया अपि, 'कर्तृप्रयोजकत्वनियमेन' कर्तुः प्रयोजकत्वस्याऽवश्यं वाच्यत्वेन तस्य च मायायाः सम्बन्धात्पूर्वमपि सत्वाऽवश्यकत्वाद्धर्माणां मायिकत्वाऽसिद्धेश्च। अथोपरागस्थानवज्जन्यतोच्यते करणस्य कर्तृप्रयोजकत्वनियमाभावपक्षेऽपि । तदानित्या, कादाचित्की वा?। नित्यत्वे द्वैतहानिः। धर्माणां च तन्नित्यत्वेन नित्यत्वाऽऽपत्तेः। निषेधानुपपत्तिश्च। कादाचित्कत्वे तु तस्य सनिमित्तत्वात्तदभावे न तत्र तद्वक्तुं शक्यम्।

नन्वस्तु प्रागभाववदनादिसान्तत्वपक्षस्तृतीय इति चेत् । न । अनादित्वे प्रमाणाऽभावात् । ननु सादित्वस्याऽदृष्टत्वादेवानाऽदित्वमनुक्तसिद्धमेव । बन्धोऽस्याविद्ययेति वाक्याच्च । तथेति चेत् । सत्यम् । यद्यप्यस्मदादिदृष्टं न सादित्वं तथापि नाऽनादित्वम् । तत्त्वे ब्रह्मतुल्यतापत्तेः । तथापि च **'न तत्समम'** इति श्रुतिविरोधः । **'सदेवे'**त्यादिश्रुतिविरोधश्च । ननु सांतत्वान्न तौल्यम् । न । सर्वथाऽनादिसिद्धस्य सान्तत्वाऽभावात् । ब्रह्मवत् । जन्यस्यैव भावस्य सान्तत्वनियमात् । ननूक्तः प्रागभावदृष्टान्तः । बलेनाऽऽत्मनोऽपि सान्तत्वाऽऽपत्तेः । दृष्टान्तस्याऽप्यसिद्धेः । नन्विह कपाले घटो भविष्यतीति प्रतीत्यन्यथानुपपत्तिसिद्धः स इति चेत् । नैवम् । भविष्यत्काला[1]वच्छिन्नघटसत्ताविषयत्वात्तत्प्रतीतेः ।

स्यादेतत् । 'इह कपाले नेदानीं घट' इति प्रत्ययबलात्तत्सिद्धिरिति । नह्ययमत्यन्ताभावं ध्वंसं वाऽवगाहते । पूर्वस्य नित्यत्वात्ततः परिशेषात्तत्सिद्धेरिति चेत् न । तिरोभावावगाहित्वात्तत्प्रत्ययस्य । नहि तिरोभावः[2] । ननु केस्य ह्ययं तिरोभावः? । अत्र ब्रूमः । विद्यमानस्य वस्तुनो दर्शनाऽयोग्यत्वं तत् । तच्च भगवदैच्छिकम् । नन्वीश्वरीयेच्छाया नित्यत्वात्तन्नित्यतापत्तिः । सिसृक्षासंजिहीर्षयोर्नित्यत्वात्तयोरपि नित्यत्वापत्तेः । नन्विष्टापत्तिस्तयोरुभयोर्नित्यानुवृत्तेरिति चेत् । मैवम् । तयोरेकवस्तुविषयत्वेन तत्सर्गप्रलययोर्नित्यत्वाऽऽपत्त्या तयोरन्यतर-

---

१–श्रीमद्बालकृष्णपुस्तकालयस्थमस्मदीयमेतद्ग्रन्थस्य पुस्तकमेकमेव लब्धम् । ततश्च भूयस्योऽशुद्धयः स्वव्युत्पत्त्यैव शोधिताः । अशुद्धिमयमिवाऽऽसीत्पुस्तकमेतत् । यदि तथाप्यवशिष्टाः स्युर्बुधाः क्षाम्यन्तु । २–ननु कोऽयं तिरोभाव इति कदाचित्स्यात् ।

स्याऽप्यशक्यनिरूपणाऽऽपत्तेः । अथवा 'नेदानीं घट'इति प्रत्ययोऽत्यन्ताऽभावविषयोऽस्तु । न चेदानीमित्यस्यानुपपत्तिस्तस्य नित्यत्वादिति वाच्यम्? । त्वन्मतीयप्रागभावस्याऽपि तदानीमुत्पत्त्यभावेन तदनुपपत्तेस्तौल्यात् । अनादित्वभङ्गप्रसङ्गाच्च । ध्वंसापसरणे च तथा प्रतीतेश्च ।

ननु तर्हि घटोत्पत्तावपि तादृगभावप्रत्ययापत्तिरिति । तन्न । घटवत्ताबुद्धेः प्रतिबन्धकत्वात् । किंच घटाऽत्यन्ताऽभावस्य घटत्वावच्छेदकाऽवच्छिन्नप्रतियोगिताकत्वादेतद्धटात्यन्ताभावस्य तत्रापि सत्त्वात्तद्विषयकत्वेनैव तादृशप्रतीत्युपपत्तेर्न तदनुरोधेनातिरिक्ता । गौरवात् । ननु तर्हि तादृशाभावस्य नित्यत्वाद्धटानुत्पत्तिप्रसंग इति घटाऽन्तरीयाऽत्यन्ताभाव एव, नत्वेतत् घटात्यन्ताऽभावस्तत्रेति तस्यैव परिशेषात्सिद्धिः? । फलमुखस्य गौरवस्याऽदुष्टत्वात् । न च तद्वत्ताबुद्धेस्तदभावबुद्धिप्रतिबन्धकत्वान्न निर्वाह इति वाच्यम्? । नात्र प्रतीतिमात्रस्यैव विचारः । किन्तूत्पत्तेरपि । एवं सति नित्यं प्रतिबन्धकस्य सत्त्वेन तदुत्पत्तेरेव वक्तुमशक्यत्वेन तद्वत्ताबुद्धेरेवाऽनुदयात् । अन्यथा वायुरूपाद्युत्पत्तिप्रसंगादिति चेत् । न । घटत्वसमानाधिकरणेन तत्र तदभावग्रहणे घटत्वाऽवच्छिन्नानां सर्वेषां कार्यत्वेनैवोत्पत्तिमत्तया तदभावस्य त्रैकालिकत्वाऽसिद्धेस्तदत्यन्ताभावाऽसिद्धिप्रसंगात् । स्यादेतत् । पूर्वं घटाभाववद्भूतलमितिबुद्धिः । तत्र च घट आनीते घटवद्भूतलमितिबुद्धिस्तत्र न तदभावबुद्धिः । तद्बुद्धिप्रतिबन्ध्यत्वात् । तथा च प्रतिबन्ध्यबुद्ध्यन्यथानुपपत्त्यैव तत्सिद्धिध्वस्त इति बुद्ध्यभावान्न ध्वंसो विषयः । सत्यम् । किं तत्र तत्सामानाधिकरण्येन तदभावग्रहः, किंवा तदवच्छेदेन? । आद्ये,

यत् किंचिद्घटवत्ताबुद्धिप्रसंगः । द्वितीयश्चेत्सर्वत्राऽपि स एवाऽस्तु, कृतं तत्सामानाधिकरण्येन तदभावग्रहणप्रयासेन । न च तस्य प्रतिबन्धकत्वम् । घटरूपेणाविर्भावेच्छायामभावरूपस्य तिरोधानात्सर्वेस्यैव व्यवह्रियमाणत्वात् । सर्वव्यवहारार्थमेव तत्प्राकट्यात् । न चैवम् । विद्वदाभरणे नित्यलक्षणे दोषप्रदर्शनात् । वस्तुतो भावाप्रतियोगित्वं तत्त्वमित्यत्रैव तात्पर्यात् । न चैवं ब्रह्मणो नित्यत्वप्रसंगः? । तयोः कार्यधर्मत्वात् ।

प्रकृतमनुसरामः । तथा च धर्माणां मायिकत्वाऽभावात्सिद्धमप्राकृतधर्मत्वं ब्रह्मणः । अत्रैव हेतुगर्भविशेषणमाह—**'अशेषोपनिषद्वेद्यमि'**ति । न विद्यते शेषो यासु ताः । ततः कर्मधारयः । ततस्तत्पुरुषः । सर्वोपनिषत्प्रतिपाद्यमित्यर्थः । अस्य तत्त्वं त्वित्थं बोध्यम् । तथाहि—यदि धर्माः प्राकृताः स्युस्तर्हि तद्विशिष्टं ब्रह्म न भवेत् । तथा सति तत्प्रतिपादकवेदान्तानामब्रह्मपरत्वे **'सर्वे वेदा यत्पदमि'**त्यादिवाक्यानि व्याकुप्येरन् । औपनिषदत्वमपि साधारणं स्यात् । अत ईदृशवाक्याऽन्यथानुपपत्तिरेव विशेषाणामप्राकृतत्वं साधयतीति सुधीभिरवसेयम् । अथेयं न दूषणसंगतिः? । अतात्त्विकत्वं ह्यौपाधिकत्वमायुष्मता वाच्यम्? । तत्रोपाधिर्माययैव तथा । तत्र सा किं सर्वं ब्रह्माभिव्याप्नोत्युत तदेकदेशम्? । आद्येऽभिव्याप्तेरेवाऽसम्भवः । परिच्छिन्न एव तत्सम्भवात् । उत्तरे सांशत्वापत्तिः । **'असंगो ह्ययमि'**त्यादिविरोधश्च ।

ननु 'घटावच्छिन्न आकाश' इत्याकाशवन्मायावच्छिन्नत्वेऽपि न सांशत्वापत्तिरिति चेत् । मैवम् । वैलक्षण्येन तस्य दृष्टान्तत्वाऽसिद्धेः । तस्य कार्यत्वेन सांशत्वात् । सांशत्वाद्ब्राह्मतापत्तिरिति चेत् ।

वायुवदग्राह्यत्वान्न सापत्तिः । ननु क्वचिद्वायोरपि ग्राह्यत्वं निरूप्यत इति चेत् । न । द्व्यणुकस्य ग्राह्यतापत्तेः । अयोग्यत्वान्न तद्ग्रह इति चेत् । अत्रापि तथा । महत्त्वाभावनिबन्धनं हि तत्राऽयोग्यत्वम् । तत्रापि स्पर्शाऽभावनिबन्धनं तदिति समाधिः । नच सांशत्वे तन्नाशापत्तिरिति वाच्यम् । इष्टापत्तेः ।

अन्यच्चाऽवच्छेदकं हि व्यवच्छेदकम् । यथा घटत्वं पटाद्यवच्छेदकम् । तथात्रापि घटाद्युपाधिरूपमवच्छेदकं महाकाशरूपमंशं परिच्छिनत्तीति घटावच्छिन्न आकाश इति प्रत्ययस्तूपपन्नः । ब्रह्मणि तु तथा वक्तुमशक्यत्वात्कथं मायावच्छिन्नतेत्यवधार्यम् । किंच ब्रह्ममाययोः कः सम्बन्धः ? । न तावत्संयोगः । अजसंयोगनिषेधात् । संयोगलक्षणाभावाच्च । उभयोरन्यत्रास्थितेः । अनाश्रितत्वादुभयोर्न समवायः । नापि स्वरूपलक्षणः । विशेषणविशेष्यादिभावाभावेन तस्य वक्तुमशक्यत्वात् । नन्वस्त्येव विशेषणविशेष्यभावः । दोषाऽभावात् । नैवं शक्यं वक्तुम् । तथाभावे ब्रह्मणः सधर्मकत्वापत्तेरेव दोषत्वात् ।

अथ कर्तृत्वादिधर्मवद्विशेष्यत्वमपि मायिकमिति न तदापत्तिर्वास्तवत्वाभावात् ? । तन्न । विकल्पासहत्वात् । तथाहि— तत्र मायिकत्वं मायाजन्यत्वम् ? । मायासम्बन्धेन प्रतीयमानत्वं वा ? । आद्ये ब्रह्मणः सद्धर्मकत्वापत्तिः । सदैकरसत्वव्याघातश्च । द्वितीयेऽसंगश्रुतिविरोधः । ननु न ब्रह्मणि मायासम्बन्धं ब्रूमोऽपि तु जीवे । तथा च जीवनिष्ठया तया दोषरूपया विचित्रा धर्माः प्रत्याय्यन्त आरक्ताद्युपनेत्रवदिति चेत् । न । जीवस्य ब्रह्माभिन्नत्वेन तथा वक्तुमशक्यत्वात् । तादृशोपनेत्रवन्मायायाः तद्धर्मत्वापत्तेश्च ।

तथा च मायासम्बन्धस्य वक्तुमशक्यत्वेनौपाधिकभेदाऽसम्भवाद-प्राकृताऽनेकधर्मवत्तया सर्वोपनिषद्वेद्यत्वं सिद्धं ब्रह्मण इति दिक् ।

उक्तविशेषणविशिष्टं वस्तु, विशेष्यत्वेन निर्दिशति '**परमि**'ति । सामान्येन परत्वस्येन्द्रियादिष्वपी'न्द्रियाणि पराण्याहुरि'तिवाक्येनो-क्तत्वाद्**ब्रह्मेति** । सर्वेभ्यो यत्परब्रह्म तदित्यर्थः । न च ब्रह्मत्वेनैव परत्वे प्राप्ते परपदानर्थक्यमिति वाच्यम्? । इन्द्रियादिपरत्वस्य ज्ञेये ब्रह्मण्यपि सत्वात् । ततोऽपि परत्वबोधनेन सार्थक्यात् । ननु '**महतः परमव्यक्तं सा काष्ठा सा परा गतिरि**'तिश्रुत्या, '**इन्द्रि-याणि पराण्याहुरि**'ति स्मृत्या च ब्रह्मणोऽन्यस्य न परत्वमिति चेत् । अत्रोच्यते । उक्तश्रुतेस्तत्र वाक्ये, पुरुषपदं न परब्रह्मवाचकं किन्त्वक्षरब्रह्मपरम् । स्मृतेश्च । तदनुयायित्वायापि (?) बुद्धिपरत्वेना-ऽक्षरं ब्रह्मैव ज्ञेयम् । न चाऽत्र प्रमाणाभावः । '**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव चे**'ति प्रमाणसद्भावात् । तथा च द्वाविमाविति वाक्यानुरोधात्क्षरस्य परत्वाऽसम्भवाच्चाऽक्षरपरमेव तत्र पुरुषपदम् । '**उत्तमः पुरुषस्त्वन्य**' इति परमात्मपदेन तत्पृथक्परमब्रह्मनिर्देशश्च । अन्यच्च । '**ब्रह्मविदाप्नोति पर**'मित्यत्र ज्ञेयाऽक्षरब्रह्मण एव परस्य, ब्रह्मणः पुरुषोत्तमस्यैवाभिधानाच्च । अत्र ब्रह्मेत्यादिपदार्थचतुष्टय-विवरणभूतायां '**सत्यं ज्ञानमनन्त**'मित्यृचि ब्रह्मविपश्चिच्छब्दाभ्यां विवृतत्वाच्चेति संक्षेपः । तथा चैतादृशं ब्रह्म वाञ्छितप्रदानेन ते मुदा प्रीतयेऽस्त्वित्याशीर्वचनम् ।

**इति श्रीमद्रघुनाथात्मजगोस्वामिश्रीव्रजरायविरचितो ब्रह्मवादः समाप्तिमगमत् ॥**

---

॥ श्रीः ॥

श्रीगोपीजनवल्लभाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## श्रीमत्पुरुषोत्तमविरचितो
# भगवत्प्रतिकृतिपूजनवादः ।

सप्तमो मणिः ।

सर्वः सर्वान्तरो देवो यो गुरुः प्रतिमादिषु ।
भक्त्या भक्तैर्विशेषेण पूज्यस्तं कृष्णमाश्रये ॥ १ ॥

नन्विदमसङ्गतमिवाभाति । कुतः ।

'स्थानतौल्यात्स्थितेः साम्यादवज्ञादिषु दोषतः ।
निन्दनाच्चाऽन्यथा भक्तेस्तुल्यं सर्वत्र पूजनम्' ॥ २ ॥

तथाहि—ब्रह्मवादिनां भगवान्सर्वात्मकः । विशिष्टाद्वैतवादिनां सर्वशरीरविशिष्टः सर्वोत्तरः । केवलद्वैतिनां सर्वान्तर एव । शरीरं तु भिन्नमेव । मायावादिमते शरीराणां सर्वेषां कल्पितत्वात्सर्वाधिष्ठानम् । नानाविधानां शिवभागवतादीनां शिवादिरूप इति । वस्तुस्वरूपविचारे तत्तन्मतानुसारेण सर्वेषां शरीराणां तौल्या 'ब्रह्मदाशा ब्रह्मेमे कितवा उतेति' श्रुतौ । 'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः समदर्शिनः' इति गीतायां 'सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् ।

भूरात्मा सर्वभूतानि भद्र पूजापदानि म' इत्येकादशेऽन्यत्र च सामान्यत एव निर्देशेनापि तन्निश्चयाच्च, न कोऽपि कापि विशेषः ।

किञ्च । अन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन्यः पृथिवीमन्तर' इत्यादिना पृथिव्यादिष्वात्मान्तेषु तुल्यतयैवाऽऽन्तरत्वश्रावणात् । 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । शालग्रामे च चक्राङ्के पटे मुद्रासु देवताः । नित्यं सन्ति हिरण्ये च ब्राह्मणेषु च गोषु चे'ति स्मृत्यर्थसारेऽपि तुल्यतयैव सन्निधानकथनाच्च । अन्तर्यामित्वेन स्थितौ देवतान्तरवदावेशप्रकारेण वा तेन तेन रूपेण भगवतः स्थितौ न कोऽपि विशेषः । न चाऽऽचारमाधवेऽर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः । यत्कृत्वा मुनयः सर्वे परं निर्गुणमाप्नुयु'रिति परमफलार्थम् । अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् । अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् । प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः । तस्य सर्वगतत्वाच्च स्थंडिले भावितात्मना'मित्याग्नेये तं तं प्रति विशेषतः स्थितिकथनान्न स्थितेस्तौल्यमिति शङ्क्यम् । तस्य तस्य तत्र तत्र श्रद्धासद्भावात्तस्याः[1] फलमुखाङ्गत्वेन फलशैघ्र्यार्थं तदतिशयोत्पादनाय[2] तथा कथनात् । तावताऽपि[3] साम्याबाधात् । अन्यथा सर्वगतत्वाच्चेति विशेषणवैयर्थ्यप्रसक्तेः ।

किंच । यद्येवं नाङ्गीक्रियते तदोत्कृष्टस्यैव पूज्यत्वादेकत्र विशिष्यार्चतोऽन्यत्राऽवज्ञादावपि दोषाऽभावप्रसङ्गः । 'अहं सर्वेषु

---

१—श्रद्धायाः । २—तं तमधिकारिणं प्रति स्थितिविशेषकथनात् । ३—चेति ख-पुस्तकम् ।

भूतेषु भूतात्माऽवस्थितः सदा । तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनम्' । 'अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे । नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ।' 'मनसा सर्वभूतानि प्रणमेद्बहु मानयन् । एतेषु जीवकलया प्रविष्टो भगवानिती'त्यादिजातीयाऽनेकपुराणवाक्यविरोधापत्तिश्च स्यात् । किंच । यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति स' इत्यादिष्वन्यथा भजनस्य निन्दनात् । 'यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः । यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखर' इति योगेश्वरान्प्रति दशमस्कन्धीये भगवद्वाक्ये तादृशबुद्धेः पूजकस्यापि निन्दनाच्च । अतः पूजा सर्वत्र समैवोचिता । न तु प्रतिमादिविशेषेणाऽन्यत्र न्यूनत्वेनेति । अथारम्भदशायामेवम्भावस्याऽशक्यत्वादशक्योपदेशत्वं विभाव्यते । तदापि पुरुषेषु ब्राह्मणेषु साधुषु स्थितेराधिक्यमङ्गीकार्यम् । 'एकद्वित्रिचतुःपादो बहुपादस्तथाऽपदः । बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिये'त्येकादशे । 'न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् । सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् । तस्माद्ब्रह्म ऋषीनेतान्ब्रह्मज्ञाञ्छ्रद्धयाऽर्चय । एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभि'रिति श्रुतदेवं प्रति । 'न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः । ते पुनन्त्युरुकालेन दर्शनादेव साधवः । भजन्ति ये यथा देवान्देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सला'- इत्यक्रूरं प्रति च भगवद्वाक्यात् । नारदं प्रति श्रीवसुदेववाक्याच्च ।

न चैवं सति गुरावपीतरसाम्यापातात्तदाधिक्यबोधकानां 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इत्यादि श्रुतीनां 'गुरौ वसति यस्त्वन्यमाश्रयेत्पूजयेत्कुधीः। न तस्य क्लेशनिस्तारो वर्तते मुनिसत्तमे'ति। 'तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत्। अभेदेनार्चयेद्यस्तु स भक्तिफलमाप्नुया'दिति। 'यत्र यत्र परीवादो मात्सर्याच्छ्रूयते गुरोः। तत्र तत्र न वस्तव्यं निर्यायात्संस्मरन्हरिम्। यैः कृता च गुरोर्निन्दा विभोः शास्त्रस्य नारद। नाऽपि तैः सह वस्तव्यं वक्तव्यं वा कथञ्चने'ति वाराहविष्णुरहस्यपञ्चरात्रस्मृतीनां 'सोऽहं भगवतो विदेशान्ददामि मां चापि सह दास्याये'ति गुरावात्मसमर्पणबोधिकायाः श्रुतेः। 'इयदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम्। यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरा'विति 'एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरा'विति तृतीयस्कन्धोक्तेश्च विरोधः शङ्कनीयः। तत्र स्वोपकारकत्वोपाधिं धर्माधिक्यं चादाय तथा बोधनात्। 'त्वं हि नः पिते'त्यादि श्रुतेः। "नैवोपयन्त्युपचितिं कवयस्तवेश ब्रह्माऽऽयुषापि कृतमृद्धमुदः स्मरन्तः। योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति' इत्येकादश उद्धववाक्यात्। 'ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्त्ति मा'मिति भगवद्वाक्याच्च तथा निश्चयात्। तावता स्वरूपेऽतिशयाऽसम्भवात्। प्रतिमापूजनन्त्वसङ्गतमेव। 'न तस्य प्रतिमाऽस्ती'तीति श्रुत्या ब्रह्मप्रतिमानिषेधात्।

---

१ विदेहानिति कपुस्तकम्। २ तच्छिष्यैरिति कपुस्तकम्।

अथेदानीं पूर्वोक्ताधिकारादपि जघन्याधिकार इत्यशक्योपदेशत्वमेतस्याऽपि विभाव्यते, तदापि शबलस्य[1] प्रतिमां स्वीकृत्य '**शिवं भास्करमग्निं च केशवं कौशिकीमपि। मनसाऽनर्चयन्याति ब्रह्मलोकादधोगति**'मित्यादि पञ्चायतनपूजाविधायकवाक्यैः पञ्चस्वपि तौल्यं बोध्यम् । यत्पुनरेतदन्यतमस्य मध्ये स्थापनं तदपि तस्य तस्य तत्र तत्र श्रद्धातिशयप्रयुक्तमितिवाक्यान्तरादवसीयते । अन्यथा सर्वेषामेव नियमेनैकस्या एव देवताया मूर्तेर्मध्ये स्थापनमुक्तं स्यात् । अतो वस्तुविचारे सर्वत्र स्थितिविचारेऽबादिषु समस्तचेतनेषु वाऽऽधिक्यविचारे पुरुषेषु ब्राह्मणेषु साधुष्वाधुनिकाधिकारविचारे पञ्चायतनेषु तौल्यात्केवलश्रीकृष्णप्रतिमायामेव पूजनं न प्रामाणिकपदवीमधिरोढुमर्हतीति प्राप्ते । अत्रोच्यते ।

**स्थानस्थित्योः समत्वेऽपि तद्धर्मादेर्विचारतः ।**
**गुरौ मूर्तौ विशेषोक्तेः पूजासाम्यं न युज्यते ॥ १ ॥**

यदायुष्मता स्थानसाम्यमुक्तं तत्तु ब्रह्मवादाऽनुसारेणाऽनुजानीमहे । शेषेषु वादेषु यथायथं, स्वल्पतदधिकाऽनेकश्रुतिविरोधेनोत्तरोत्तरमपकर्षस्याऽऽकारेषु सूचितत्वात् । तथाहि । मायावादिमत '**इन्द्रो मायाभिरि**'त्यादिवाक्याभासं, कार्यस्य जडत्वादिना तत्कारणमपि तादृगेवानुमातव्यमिति युक्त्याभासं चाऽऽश्रित्य प्रपञ्चस्य ब्रह्मणि कल्पितत्वाऽङ्गीकारेण शुक्तिरजतकल्पत्वा'**त्सर्वं खल्विदं ब्रह्म**' '**इदं सर्वं यदयमात्मे**'त्यादीनां सर्वस्य ब्रह्मात्मकत्वबोधिकानां '**ऐतदात्म्यमिदं सर्वं तत्सत्यं**' '**सत्यं चानृतं च सत्यमभवत्**' '**यदिदं किंच तत्सत्यमित्याचक्षत**' इत्यादीनां प्रपञ्चसत्यत्वबोधिकानां निर्गुण-

---

१ परिवारसहितस्य ।

स्योपादानत्वाऽनङ्गीकारेण **'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्या'**दित्यादीनां कारणताप्रकारबोधिकानां **'यतो वा इमानी'**त्यादीनां निर्गुणमेव ब्रह्म प्रकृत्य पठितानां ब्रह्मकारणत्वबोधिकानां श्रुतीनां तदुपबृंहणानां **'तदनन्यत्वमारम्भणशब्दादिभ्यः'** **'आत्मकृतेः परिणामा'**दित्यादीनां न्यायानां विरोधात्। तथा निर्गुणमेव प्रकृत्य पठिताना**'मेष आत्मा अपहतपात्मा विजरो विमृत्युर्विजिघत्सोऽपिपासः' 'सत्यसंकल्पः' 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः' 'सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'**त्यादीनां शरीरादिदोषनिषेधमुखेन निर्दुष्टतदात्मकब्रह्मस्वरूपनिर्दोषतद्गुणप्रतिपादकानां सोपबृंहणन्यायानां निराकारत्वाङ्गीकारेणोपासनस्य कल्पितत्वाङ्गीकारा**'त्तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत'** इत्यादीनां निर्गुणोपास्यत्वबोधकानां लक्ष्यत्वाङ्गीकारेणाऽन्यासां च किम्बहुनोपाख्यानानां काल्पनिकत्वाङ्गीकारेणाऽनेकश्रुतिविरोधाच्चात्यन्तमपकर्षात्।

भेदवादिमते चाऽद्वैतसमवायित्वकारणताप्रकारबोधकानां प्रपञ्चविशेषमायिकत्वबोधकानाञ्च विरोधेनाऽन्यासामविरोधेन ततोऽल्पापकर्षात्। विशिष्टाद्वैतवादिमते च सर्वरूपत्वबोधकश्रुत्यतिरिक्तश्रुत्यविरोधेन ततोऽप्यल्पापकर्षात्।

ब्रह्मवादे तु ब्रह्मण उभयव्यपदेशाधिकरणन्यायेन विरुद्धधर्माश्रयतयाऽचिन्त्यानन्तमहिमत्वेन कस्या अपि श्रुतेर्विरोधाऽभावेन सर्वत उत्कर्षात्तदनुसरणस्यैवौचित्यात्। तथैवाऽन्तर्यामिब्राह्मणाद्यनुरोधेन स्थितिसाम्यमप्यनुजानीमहे। यत्पुनः सर्वत्र पूजासाम्यं भवता

प्रतिपादितं तत्तु न मृष्यामहे[1]। पूजायास्तत्तन्मतभेदेन भगवद्भक्तिभगवत्तोषचित्तशुद्धिकारणत्वाद्यथाशास्त्रं तत्करण एव ततः फलसिद्धेर्निश्चये पूर्वोक्तवाक्येषु पुरुषादौ भगवत्प्रियत्वोपाधेराधिक्यात्। श्रुतदेवं प्रति वाक्ये च ब्रह्मर्षिपूजायाः स्वपूजासाकल्यफलकताबोधनादिदानीं भगवदागमनादीनां तत्पूर्वोत्तरपूजयोः प्रतिमादिविषयकत्वस्यैव सिद्ध्या तदाधिक्यस्यैव लाभादक्रूरं प्रति वाक्ये शीघ्रफलकत्वोपाधेर्नारदं प्रतिवाक्ये च दीनवत्सलत्वोपाधेराधिक्याद्गुरावाधिक्यस्य भगवतैवोपपादितत्वाच्च। तथा '**सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम्। आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना। वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया। वायौ मुख्यधिया तोये द्रवैस्तोयपुरस्कृतैः। स्थंडिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि। क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत मा**'मिति तत्र तत्र प्रकारबोधनेन वस्तुस्थितिसाम्ययोः पूजासाम्याऽप्रयोजकत्वस्य सिद्धत्वात्। तादृशबुद्धिमात्रेणैवाऽवज्ञादिदोषपरिहारसिद्धौ तेषामपि पूजासाम्याऽप्रसञ्जकत्वाच्च।

एवं पूर्वोक्तहेतूनामन्यथासिद्धत्वे पूर्वोक्तप्रमाणसिद्धप्रियत्वोपकारकत्वादिविचारेण गुरौ प्रतिमायां च विशेषतः पूजा कार्यैव। न च प्रतिमास्थले विप्रतिपत्तव्यम्। '**न तस्य प्रतिमाऽस्तीति**' श्रुतेः साम्यनिषेधपरत्वात्। '**न तस्येशे कश्चन, तस्य नाम महद्यशः**' '**न तत्समश्चाभ्यधिकश्च दृश्यत**' इति श्रुत्यन्तरेण तथा निर्णयात्। वैशम्पायनसहस्रनामव्याख्यायां शंकराचार्यैरपि तथा व्याख्यानात्। गुणातीतस्य साकारतायाः '**कृत्स्नः प्रज्ञानघन**'

[1] मन्यामह इति खपुस्तकम्।

इति श्रुतौ कृत्स्नपदाऽन्यथानुपपत्त्या प्रथम एव वादे साधितत्वात् । 'शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित्' । 'ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृत्' । 'तीर्थक्षेत्रस्थिते विष्णौ शिलाबुद्धिं करोति यः । स याति नरकं घोरं पुनरावृत्तिवर्जितम्' । 'अत्र सामान्यतो मूढा हैतुकाः पापबुद्धयः । प्रतिमेति विकल्पन्ते दृष्ट्वाऽऽनन्दात्मकं वपु'रिति स्कान्दसह्याद्रिखण्डोत्तरसंहितास्थपांडुरंगमाहात्म्यवचनादपि तन्निर्णयात् ।

उत्कलखण्डे च पुरुषोत्तममाहात्म्ये–'अदो यद्दारु प्लवत' इति मंत्रस्य दारुब्रह्मपरत्वेन, व्यासचरणैर्वेदभाष्ये च विद्यारण्यस्वामिभिर्व्याख्यानात् । वायवीयादिषु गयामाहात्म्ये गदाधरजनार्दनादिस्वरूपाणामनुभवसाक्षिकस्य माहात्म्यदर्शनाच्च । न चानादिसिद्धासु देवादिकृतासु न विप्रतिपद्यामहे । वाचनिकत्वात् । तावता कथं सर्वत्राऽविप्रतिपत्तिरिति शङ्क्यम् । एकादशस्कन्धे सर्वत्रैवाऽविशेषेण तथा प्रतिपादनात् । 'महापुरुषमभ्यर्चेन्मूर्त्याऽभिमतयाऽऽत्मन' इति जनकं प्रति योगेश्वरवाक्यात् । सप्तविंशाध्याये भगवतापि निःश्रेयसार्थं महता प्रबन्धेन तद्विस्तारभूतस्य प्रतिमापूजनरूपक्रियायोगस्यैवोपासकार्थं प्रतिपादनात् । तत्र 'मदर्चां संप्रतिष्ठाप्ये'ति "उद्वासाऽऽवाहने न स्तः स्थिरायामुद्धवार्चने । अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयमि'त्यादि वाक्यदर्शनेऽनादिप्रतिमाया वक्तुमशक्यत्वात् । एकादशेऽध्यायेऽपि 'भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृते'ति सदादृताया भगवदुपयोगिन्या भक्तेः प्रश्ने, 'मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चन'मित्यादिना 'गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः । यात्रा बलिविधानं

च सर्ववार्षिकपर्वसु । वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् । ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः । उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि । सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः । गृहशुश्रूषणं मह्यं दासवद्यदमायया । अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् । यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयन्मह्यं तदानन्त्याय कल्पत' इत्यन्तैस्तस्या एव भक्तार्थमपि महता प्रपञ्चेन कथनात् ।

अष्टविंशेऽध्याये ब्रह्मवादे सम्यक् प्रतिपादिते तदनुगुणजडचर्यायाः साम्यबुद्धेश्चानधिकारं बुध्वोनत्रिंशे श्रीमदुद्धवेनोपायान्तरे पृष्टे **'हन्त ते कथयिष्यामी'**त्यादिना पुनस्तस्या एवोक्तेश्च । अतो भक्तोपासकज्ञानिभेदेन त्रिविधानामप्यधिकारिणामर्थे तस्या एवोक्तत्वात्तत्राऽनादिप्रतिमाप्रतिपादकपदवाक्याभावादविशेषस्यैव प्रतीतेर्न शङ्कालेशोऽपि ।

ननु प्रतिमासु भगवतो नान्तर्यामिरूपेण स्थितिः । अन्तर्यामिब्राह्मणे शरीरत्वेन तदगणनात् । न वा जीवरूपेण । चैतन्यादर्शनात् । नापि विभूतिरूपेण । तास्वप्यसङ्ख्यानात् । न च **'नान्तोऽस्ति मम दिव्याना'**मिति वाक्यादसङ्ख्यानेऽप्यदोष इति वाच्यम् । विभूतिप्रसिद्ध्यभावात् । तथापि **'प्राधान्यतः कुरुश्रेष्ठे'**ति वाक्यान्तासु प्राधान्याभावेनाऽप्रयोजकत्वाच्च । किन्तु सन्निधानाऽपरपर्याया वन्हेरयसीवावेशरूपा वाच्या । सापि न सार्वदिकी प्रतिष्ठावाहनादिबोधकशास्त्रवैयर्थ्यापत्तेः । **'खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते । यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु । अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते । दशस्वेतेषु नो**

चक्रुः सन्निधानं दिवौकस’ इति ब्राह्मे निमित्तवशादसन्निधानस्याप्युक्तत्वात् । ‘खण्डिता स्फुटिता दग्धा यस्मादर्चा भयावहा । तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नर’ इति पञ्चरात्रे जीर्णोद्धारस्याप्युक्तत्वाच्च । ‘दशपञ्चाङ्गुला मुख्या मध्यमा द्वादशाङ्गुला । अष्टाङ्गुलाऽधमा प्रोक्तान्यूनाधिक्यं न कारयेत् । प्रतिष्ठा विफला तस्य पूजनं तस्य निष्फलम् । मानाङ्गुलिविहीना तु [1]प्रतिमा यत्र तिष्ठति’ इति गौतमीयतन्त्रे लक्षणवैकल्येऽपि प्रतिष्ठावैफल्यकथनाच्च ।

एवं सति प्रतिमापेक्षया शालग्रामादिपूजनमेव ज्यायः । नित्यसन्निधानादिति चेत् । प्रतिमायामपि तौल्यात् । विष्णुधर्मोत्तरतृतीयकाण्ड आवाहनप्रयोजनाध्याये ‘विष्णुः सर्वगतो देवो महद्भ्योऽपि महत्तरः । सूक्ष्मेभ्यश्चाति सूक्ष्मस्तु सर्वव्यापी जगन्मयः । नास्ति किञ्चिज्जगत्यस्मिन् यत्र नास्ति जनार्दनः । सदसच्च महाभाग तेन व्याप्तं महात्मना । आवाहनेन किं कार्यं तस्य सर्वगतस्यत्वि’ति राज्ञा( वज्रेण )पृष्टे ‘आवाहनमथात्रापि क्रियते यज्जगत्पतेः । नित्यसन्निहितस्यापि सर्वत्र परमेष्ठिनः । केवलं कारणं तत्र स्वमनस्तुष्टिकारणम् । आवाहितो मया देवस्तत्र सन्निहितोऽपि चे’ति मार्कण्डेयेन तथा निर्णीतत्वात् । न च प्रतिष्ठावाहनादिबोधकशास्त्रवैयर्थ्यापत्तिः । मन्दमध्यमानुपासकांच प्रति बौद्धसन्निधानार्थत्वेन सार्थक्यात् । एवमेव खण्डितत्वादीनामसन्निधायकत्वाभावेऽपि जीर्णोद्धारबोधकस्य ‘खण्डिता स्फुटिता दग्धा यस्मादर्चा भयावहा । तस्मात्समुद्धरेत्तां तु

१ प्रतिष्ठेति खपुस्तकम् ।

पूर्वोक्तविधिना नर' इति पञ्चरात्रस्मरणस्यापि तान्प्रत्येव सार्थकत्वं ज्ञेयम् । 'खण्डिता स्फुटित' इति वाक्ये दिवौकःपदबहुवचनाभ्यां भगवद्व्यतिरिक्तविषयत्वनिश्चयाच्च ।

नन्वेवं सति 'यः शूद्रस्थापितं लिङ्गं विष्णुं वा विनमेद्द्विजः । स याति नरकं घोरं यावदाभूतसंप्लवमि'ति । 'यः शूद्रेणार्चितं लिङ्गं विष्णुं वा विनमेन्नरः । न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपी'ति । 'नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा । स सर्वयातनाभोगी यावदाचन्द्रतारकमि'ति स्कान्दनारदीयादिवाक्येषु शूद्रकृतस्थापनार्चनस्पर्शादौ नमने दोषबोधनस्य का गतिरिति चेत् । न । उक्तैव । न चात्र विनिगमकाभावः शङ्क्यः । ज्ञानाधिकारिणः सर्वत्र भगवद्भावं हृदि कृत्वैव विष्णुधर्मोक्तप्रश्नोत्तरवाक्ययोः सर्वगतनित्यसन्निहितपदकथनात् ।

नन्वेवं सति सर्वत्र तौल्यात्प्रतिमायां को विशेष इति चेत् । न । नृसिंहरूपेण प्रल्हादमिव जगन्नाथरूपेणेन्द्रद्युम्नादीनिवैनमनेन रूपेणोद्धरिष्यामितीच्छया प्रादुर्भूतत्वमेव विशेषं जानीहि । नचात्र शिल्पिक्रियापि व्याप्रियत इति कथमिच्छाकारोऽवधेय इति शङ्क्यम् । श्रीजगन्नाथदृष्टान्तेनैव तस्या अपि प्रकारविशेषतयेच्छाशरीरप्रवेशस्य साधितत्वेन दत्तोत्तरत्वात् । न चात्र तथेच्छाकारे मानाभावः शङ्क्यः । ऊनत्रिंशाध्यायस्थसन्दर्भसिद्धत्वात् । 'येनाञ्जसा पुमान्सिद्ध्येत्तन्मे ब्रूह्यञ्जसाऽच्युते'ति प्रश्नोत्तरत्वेन स्वधर्मात्मकपूजनस्यानुवादेन तथा निश्चयात् । नन्वम्ब्वग्निसूर्यगोब्राह्मणानां हिरण्यस्य च साधारण्यान्माऽस्तूक्तो विशेषः । स्थण्डिलेऽपि बहूपचारानुक्तेर्माऽस्तु सः । तथापि शालग्रामचक्राङ्कपटमुद्रास्वाधिक्यस्य

वचनत्वात् (?)। हृदये च ध्याननिष्ठया सर्वेषामुपचाराणां कर्तुं शक्यत्वात्, ध्यानस्य च ज्ञानत्वेन, ज्ञानसमानाकारत्वेन वा, ज्ञानकोटिपातित्वात्, **'श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतपे'**त्यनेन तत्स्तुतेश्च शालग्रामादौ वा द्रव्येण हृदि वा ध्यानेन पूजा कार्या, न तु प्रतिमायामेवेत्याग्रहः कार्य इति चेत्। मैवम्। ज्ञानयज्ञस्य श्रेयस्त्वेऽप्यत्र तथात्वाऽभावात्। अञ्जसा सिद्ध्यर्थं द्रव्ययज्ञस्यैवाऽत्रोक्तत्वात्। **'पृथक् सत्रेण वा मह्यं पर्वयात्रामहोत्सवान्। कारयेन्नृत्यगीताद्यैर्महाराजविभूतिभिरि'**त्यादिवाक्यैस्तथानिश्चयात्। हृदयेऽपि मनोमयीं प्रतिमां कृत्वैव तत्करणे तस्या आवश्यकत्वाच्च। शालग्रामादिष्वसाधारणत्वस्य शक्यवचनत्वेऽपि भवता तदनुक्तेर्नानावासोलङ्कारोपचाराणामशक्यत्वाद्यथाकथञ्चित्करणेऽपि तत्तत्प्रदेशेषु तस्य तस्यादर्शनेन तथाङ्गीकारबुद्ध्यनुदयात्साकारस्य परब्रह्मणस्तत्र ध्यानसौकर्याभावात्प्रतिकृतौ च तस्य सौकर्याद्वन्हिवदावेशेन बहिस्तत्तदवयवानां सत्त्वे तेषु साक्षादेव तत्तदुपयोगाद्भगवता तदुक्तेश्च तदाग्रहस्यैवौचित्यात्।

नन्वस्त्वेवं तथाप्यल्पबुद्ध्याधिकारत्वमेव तस्येति चेत्। किं तावता। अपकर्ष एवेति चेत्। न। महारोगग्रस्तस्वास्थ्यसम्पादकरुच्युत्पादकौषधवदल्पबुद्धीनामपि फलसाधकत्वेन सुकरत्वेन चोत्कर्षस्यैव सिद्धेः। **'पूजनं प्रतिमायां तूत्तमं परिकीर्तितमि'**ति कालनिर्णयदीपिकास्थविष्णुधर्मवाक्य उत्तमत्वस्य कण्ठत एवोक्तेः। **'प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत्। यथा सन्ध्या तथा नित्या विष्णुपूजा स्मृता बुधैः। अशक्तौ विस्तरेणैव प्रातः संपूज्य केशवम्। मध्यान्हे चैव सायं च पुष्पाञ्जलि-**

मपि क्षिपेत्। मध्यान्हे च विस्तरेण संक्षेपेणाऽथवा हरिम्। संपूज्य भोजनं कुर्यादन्यथा नरकं व्रजेदि'ति तत्रैव नारदीये कर्मिणामपि नित्यत्वोक्तेश्च। न चेदमवैदिकपरमिति वाच्यम्। विनिगमकाऽभावात्। स्मृत्यर्थसारे 'नित्यं सन्ती'ति वाक्योत्तरं 'पौरुषेण च सूक्तेन गायत्र्या प्रणवेन वा। तल्लिङ्गैरेव वा मन्त्रैरर्चयेद्गुर्वनुज्ञये'ति वाक्येन वैदिकत्वस्यैव स्फुटीभावाच्च। न च नित्यस्य प्रत्यवायप्रागभावपरिपालनमात्रार्थत्वात्कर्मिणः प्रति पूर्वोक्तदृष्टान्तो न युज्यत इति शङ्क्यम्। 'श्रुतिस्मृती ममैवाज्ञे' इति वाक्याद्विधेर्नियोगार्थताया एवौचित्यात्। तदकरणे राजदण्डवत्प्रत्यवायस्य तत्करणे तद्वदेवत्वस्य शक्यवचनत्वेन नित्यस्य तावन्मात्रार्थताया अप्रयोजकत्वात्। अन्यथा यावज्जीवाधिकारकाग्निहोत्रादौ स्वर्गाद्यभावप्रसक्तेस्तद्बोधकस्वर्गकामादिपदवैयर्थ्यप्रसक्तेश्च।

न च 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम्। हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति स' इत्यादि तृतीयस्कन्धोक्तनिन्दाया निर्विषयत्वापत्तिरिति वाच्यम्। 'अर्चादावर्चयेद्यो मां पृथग्भावः स राजस' इत्यादि जातीयवाक्योक्तपृथग्भावपूजायां सावकाशत्वात्। प्रकरणेन वाक्यस्याऽवरुद्धत्वात्। तत्र 'भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते। स्वभावगुणमार्गेण पुंसां भावो विभिद्यत' इत्युपक्रमे भक्तिमार्गस्य नानात्वं प्रतिज्ञाय 'अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वे'त्यादित्रिभिर्नवविधसगुणभक्तेरेव निरूपणात्। 'मौढ्या'दिति विशेषणेनाऽप्रामाणिक्यामेव तथात्वव्यञ्जनाच्च। अन्यथा 'अर्चादावर्चयेत्तावदीश्वरं

मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूष्तेववस्थितमि'ति कालनियमवैयर्थ्यप्रसक्तेश्च ।

एतेनैव 'अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत' इत्यपि व्याख्यातं ज्ञेयम् । एकत्र पूजाकरणेनाऽन्यत्र तदज्ञानेनाऽज्ञानित्वस्याऽर्चाऽर्च्ययोर्भेदनिर्देशेन, पातिव्रत्यधर्मभिन्नत्वस्य च स्फुटीकरणेन पृथग्भावत्वस्य तत्र बोधनात् । तथैव 'गोखर' इति वाक्येऽपि देहात्मबुद्ध्यादिभिरनभिज्ञत्वस्यैव बोधनान्न कोऽपि शङ्कालेशः ।

इदमपि कर्माधिकृतविचारेणोक्तम् । ज्ञानाधिकृतविचारे तु 'चतुर्विधा भजन्ते मामि'त्यत्र चतुर्णां सुकृतित्वकथनात् । तत्रापि जिज्ञासोः पूर्वं ज्ञानार्थं, पश्चाच्च जाते ज्ञानेऽतिशयेन भजनात् । प्रकृते च 'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तममि'ति 'अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजेदि'ति योगीश्वरैर्भगवता चोपक्रमे तादृशस्यैवाधिक्रियमाणत्वान्न निकर्षसम्भावनापि । 'यावत्सर्वेषु भूतेषु मद्भावो नोपजायते । तावदेवमुपासीत मनोवाक्कायवृत्तिभिरि'ति भगवता सर्वत्र ब्रह्मभावोदयाऽवध्यस्यैवाऽऽवश्यकत्वकथनाच्च । न चाग्रे त्यागप्राप्त्या निकर्ष इति वाच्यम् । साधनान्तरेऽपि तौल्यात् । प्राप्ते फले साधनमात्रस्यैव त्यागात् । विवक्षितभक्त्यधिकृतविचारे तु सुतरां न तत्सम्भावना । 'मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये । मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ । लक्षणं भक्तियोगस्य निर्गुणस्याप्युदाहृतम् । सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृण्ह-

---

१ अर्चाइर्योरिति ख पुस्तकम् ।

न्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत' इति लक्षणकभक्तिद्वयान्यतरार्थिनामपि 'निषेविता निमित्तेने'त्यादिनोच्यमानेषु 'मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवादनैः । भूतेषु मद्भावनया सत्वेनाऽसङ्गमेन चे'त्यन्तेन तृतीयस्कन्धेऽपि धिष्ण्यपूजादीनामेवोक्तत्वात् । ऊनविंशेध्याये 'पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि'त्युपक्रम्य 'श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्तनम् । परिनिष्ठा तु पूजायां स्तुतिभिः स्तवनं मम । आदरः परिचर्यायामि'त्यादिना 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोन्योऽर्थोऽस्यावशिष्यत' इत्यन्तेन पूर्वोक्तमुख्यभक्तियोगकारणत्वेनाऽस्यैवोक्तत्वात् । तादृशस्य 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'त्येकादशे भगवद्वाक्येन ज्ञानस्योपेक्षणीयत्वाच्चाल्पबुद्ध्यधिकारस्याऽदुष्टत्वात् ।

न चैकादशोक्तपूजायां निर्गुणादिपदाभावान्न निर्गुणत्वमिति शङ्क्यम् । 'वनं तु सात्विको वासो ग्रामो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतं तु निर्गुणमि'ति स्वस्थाने निर्गुणत्वकथनेन सर्वगतस्य प्रतिमादिस्थितिं विनैकत्र निकेतस्य वक्तुमशक्यत्वेन तदधिष्ठितमन्दिरत्वादेव निर्गुणत्वे तत्संबन्धिपूजाया निर्गुणत्वस्याऽर्थादेव सिद्धत्वात् । अग्रिमे 'मत्सेवायां तु निर्गुणे'ति सेवाविषयकश्रद्धाया अपि निर्गुणत्वोक्तेश्च ।

अतोऽल्पबुद्धीनामित्यत्र गड्वादिसमासेऽन्यस्मिन्वा व्यधिकरणपदे दोषो, न तु समानाधिकरणबहुव्रीहाविति निश्चयः । ननु भवत्वेवं

तथाप्याधुनिकानामेवंभावाऽभावात्कथं गुणातीतत्वं शक्यवचनम्। तथा सत्यस्त्येव दोष इति चेत् । सत्यमस्ति । परमुपदेशाऽननुसरणे, न तु तदनुसरणेऽपि । 'अहरहः सन्ध्यामुपासीते'ति विधिमजानतापि बालेन पित्रादेः शिक्षया कृतस्य सन्ध्यावन्दनादेर्वैधत्ववदुपदेशाऽनुसारेण तत्करणे भक्तिमार्गीयप्रथमसोपानत्वेनाऽदोषात् । अतः पूजा तदधिकारिणोर्विवक्षितस्वरूपविचारे कथञ्चिदपि न निकर्षसम्भावनेति दिक् ।

नन्वेवमस्तु । तथापि परमात्मावेशस्य प्रतिमान्तरेऽपि तौल्याच्छ्रीकृष्णप्रतिकृतावेवाऽऽग्रहे बीजं न पश्याम इति चेत् । अत्रापि वदामः । सर्वासु प्रतिमासु परमात्मावेशो नैकेन रूपेण । तथा सति नानालिङ्गकप्रतिष्ठामन्त्रादीनां नानाकाराणां च वैयर्थ्यापत्तेः । किन्तु 'यदेकमव्यक्तमनन्तरूपमि'ति श्रुत्या 'सहस्रपादेकमूर्द्धा' 'विश्वतश्चक्षुः' 'नृकेसरिविग्रहं' 'गोपरूपो हरिः साक्षादि'त्यादिषु नानारूपश्रावणेन च तासु तासु मूर्तिषु तेन तेन रूपेणाऽऽवेश इति निश्चीयते । तत्तदुपासनौत्कट्ये तत्र तत्र तत्तत्साक्षात्कारेण च । रूपाणि च न सर्वाणि तुल्यानि । 'यो यो यां यां तनुं भक्त' इत्यादिना फलपर्यन्तबोधकेन वाक्यत्रयेण तथा निश्चयात् । तत्र 'अथर्वशिरःशिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेन तत्सममि'ति नृसिंहपूर्वतापनीये विद्यावदुत्कर्षमुखेन तद्विद्याप्रतिपाद्यरूपस्य शिवरूपत उत्कर्षाद्भास्कराम्ब्योश्च ब्रह्मपुराणे 'अन्यदेवेषु या भक्तिरि'त्यादिना शिवादपकर्षप्रतिपादनात् । गणपतितापनीये 'अवेहि मां भार्गव वक्रतुण्डमनाथनाथं त्रिगुणात्मकं शिवमि'ति त्रिगुणात्मकत्वकथनात् । शक्तेस्त्रिगुणात्मकत्वस्य सुन्द-

रीतापनीयमार्कण्डेयपुराणादिषु सुप्रसिद्धत्वात्तन्मूर्तिषु तादृग्रूपेण, **'कृष्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यत'** इत्याद्युक्तविष्णु-ब्रह्मरूपस्यापि प्रकृतौ संक्रात्या शबलत्वात्तादृग्रूपेण श्रीमूर्त्तावपि चिच्छक्तिरूपेणैवाऽऽवेशः ।

तथा कल्पभेदेन शुद्धभगवदवतारविचारेऽपि श्रीभागवते पुरुषावतारमुपक्रम्य **'आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यते'** । **'एतन्नानावताराणां निधानं बीजमव्ययमि'**त्यादिना **'एते चांशकलाः पुंस'** इति पुरुषांशत्वकथनाच्च, व्यन्तरित एवाऽऽवेशः । तथा **'रामकृष्णाविति भुवो भगवानहरद्भरम्'** । **'वृष्णीनां वासुदेवोऽस्मि' 'वासुदेवो भगवतामि'**त्यादिषूच्यत इत्यवतारविचारे कृष्णावतारेऽपि व्यन्तरित एव । अतो यो गीताद्युपदेशकर्ताऽक्षरादप्युत्तमः **'कृष्णस्तु भगवान् स्वयमि'**त्यनेनोक्तस्तापनीये च तुरीयातीतत्वेनोक्तः स एव भक्तोद्धाराय प्रकटो यत्राऽऽविशति तत्राऽनन्तरितः । एवं सत्यवताराणां मध्ये श्रेष्ठोऽवतारः को भवितेत्यादिप्रश्नोत्तराभ्यां गोपालतापनीये कृष्णावतार एव श्रैष्ठ्यप्रतिपादनात्तद्रूपप्रतिकृतावेव भगवानाविशति । भवति च सुबोध इत्येतदेव तादृशप्रतिकृत्याग्रहे बीजमिति जानीहि । वस्तुतस्तु तस्याः स्वरूपाऽनतिरिक्तत्वाद्भगवतो विभुत्वाच्च, प्रभोस्तत्र भावनासौकर्यात्तत्सहकृतया भक्त्या तदनुग्रहाय शीघ्रमाविर्भाव इति गुराविवात्राप्युपकारकत्वमेव बीजम् । एवं च **'स मानसीन आत्मा जनानामि'**ति श्रुत्या मनःसंबन्ध्येव भावौत्कट्ये **'रसो वै स'**इति श्रुत्युक्तरसरूपो यथा मनस्याविर्भवति तथा बहिरपि तत्र । न च वैयधिकरण्यात्तदनुपपत्तिः शङ्क्या । चन्द्रोदयेन सागरोत्तरलत्ववदु-

पपत्तेः । ततोऽपि भावौत्कट्येन विगाढसर्वात्मभावे 'स एवाधस्ता-दि'त्यादिश्रुत्युक्तरीत्या व्रजभक्तानामिव सर्वत्रेति न किञ्चिदनुपपन्नमिति सहृदयैर्विभावनीयम् । एवं सति 'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोऽपि शाखाः । प्राणोपहाराश्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्ये'त्येकादशस्कन्धे 'यथा हि स्कन्धशाखानां तरोर्मूलनिषेचनम् । एवमाराधनं विष्णोः सर्वेषामात्मनश्च ही'त्यष्टमस्कन्धे पञ्चमाध्याये चोक्तत्वाद्भगवति पूजिते सर्वे पूजिता भवन्तीत्यनन्यैस्तत्पूजनमेव कार्यमिति सिद्धम् । यत्पुनः शीघ्रपावनत्वदीनवत्सलत्वाद्युपाधिना साधुष्वाधिक्यं तदप्येकादशस्कन्धोक्तसाधुलक्षणविचारे भगवद्भक्तेष्वेव पर्यवस्यति । तत्र च 'मद्भक्तपूजाभ्यधिके'त्यनेन पूजाधिक्यं भगवताप्युक्तम् । तथापि पूजापरिकरत्वेन न तु स्वतन्त्रतया । तादृग्भिश्च भगवत्पूजैवोपदिश्यते । यथा योगेश्वरैर्जनकाय । अत एवं विचारेऽपि गुर्वाज्ञानुसारेण सैव करणीया फलतीति पूर्वोक्तं सर्वमविवादमिति शुभम् ।

इत्येकादशसिद्धा गूढा या सर्वनिर्णये सौक्ष्म्यात् ।
स्वाचार्यचरणकृपया रीतिर्विशदीकृताऽस्माभिः ॥ १ ॥

इति श्रीवल्लभाचार्यमतवर्तिश्रीपीताम्बरतनुजपुरुषोत्तमविरचितो भगवत्प्रतिपूजनः पञ्चदशो वादः सम्पूर्णतामगात् ॥

॥ श्रीः ॥

नमः श्रीकृष्णाय ।

पुष्टिमार्गसिद्धान्तवाञ्मालायां
गोस्वामिश्रीमत्पुरुषोत्तमविरचितः

# सृष्टिभेदवादः ।

## अष्टमो मणिः ।

यो लीलया किल गवामवनाय गोत्रं
हस्तेऽतिकोमलतमे कृपया दधार ।
यद्रूपमेतदखिलं यत आस यस्मा-
त्सद्वद्विभाति तमजं शरणं प्रपद्ये ॥ १ ॥

नन्वस्य जगतो भगवद्रूपत्वमत्र यदुक्तं तदनुपपन्नम् । कार्यद्रव्यत्वात् । सावयवत्वेन तदनुमानात् । न च भगवत्समवेतत्वेन तदुपपत्तिः । तत्समवेतत्वस्यैवाऽसम्भवात् । प्रत्यक्षबाधात् । न च सर्वस्य जगतः प्रत्यक्षाऽभावात्तद्बाध एव पराहत इति वाच्यम् । अनुमानेनाऽपि बाधात् । सर्वं जगत्सावयवसमवेतं कार्यद्रव्यत्वाद्घटवदिति प्रयोगात् । न च स्वावयवसमवेतत्वेऽपि घटादीनां पार्थिवत्ववद्ब्रह्मसमवेतत्वं न दुर्घटमिति वाच्यम् । असम्भवात् । परमाणुष्वेव पर्यवसानात् । तथाहि—प्रपञ्चः स्वल्पपरिमाणद्रव्यारब्धः । महत्त्वे सति कार्यद्रव्यत्वाद्घटवदित्यनुमानेन सिद्धे स्वल्पपरिमाण-

द्रव्यारब्धत्वे तदवयवानामपि त्रसरेणुपर्यन्तानां तेनैव न्यायेन स्वल्पपरिमाणद्रव्यारब्धत्वसिद्धिः । तथा तदारम्भकानां द्व्यणुकानामपि महद्द्रव्यारम्भकत्वेन स्वल्पपरिमाणद्रव्यारब्धत्वसिद्धिः । तदारम्भकास्तु परमाणवोऽनारब्धा एव । तदारम्भसाधकन्यायाऽभावात् ।

सिद्ध एवं परमाणुजन्यत्वे जगत्सर्वं स्वस्वावयवेष्वेव समवैष्यति । न ब्रह्मणि । तस्यैषा प्रक्रिया । अनादौ संसारे जीवात्मनां भोग्याऽदृष्टेन द्वयोः परमाण्वोः क्रियया संयोगे सति द्व्यणुकमुत्पद्यते । तस्य परमाणू समवायिकारणम् । तत्संयोगोऽसमवायिकारणमदृष्टादि निमित्तकारणम् । ततो द्व्यणुकानां त्रयाणां क्रियया संयोगे सति त्र्यणुकमुत्पद्यते । तस्य द्व्यणुकानि समवायिकारणं शेषं पूर्ववत् । एवं त्र्यणुकैश्चतुरणुकं, ततः स्थूलं, तैः स्थूलतरं, तैः स्थूलतममेवं क्रमेण महती पृथिवी, महत्य आपो, महत्तेजो, महांश्च वायुरुत्पद्यते । न च परमाणूनां ब्रह्मांशत्वमपि शक्यवचनम् । व्यापकत्वव्याकोपात् । निष्कलश्रुतिविरोधाच्च । कार्यगतरूपादयस्तु समवायिकारणगतेभ्यो रूपादिभ्यो जायन्ते । 'कारणगुणा हि कार्यगुणानारम्भन्त' इति न्यायात् । आकाशादयस्त्वसमवेता एव । तदारम्भकाऽवयवानामशक्यवचनत्वेन तदुत्पत्तेरपि तथात्वात् । अतः कालदृष्टान्तेनाऽपि न सांशत्वसिद्धिः । **'सर्वे निमेषा जज्ञिर'** इत्यादिश्रुतिस्तूपाधौ पर्यवस्यन्त्युपचरितार्थैव । किंच द्रव्यारम्भकत्वं स्पर्शवत्त्वेन मूर्तत्वेनाऽपि केचिदाहुः ।

ब्रह्मणि तु नोभयमित्यनारम्भकत्वादुपादानत्वमपि तत्राऽशक्यवचनम् । अतो जगत्स्वरूपविचारे ब्रह्मस्वरूपविचारे च न कथमपि जगतो भगवद्रूपत्वम् । एवं च कार्यस्थितिरपि स्वस्वावयवेष्वेव ।

तेषामेव तत्तत्प्रागभावाऽधिकरणत्वात् । अत एव तत्तद्धटादिकं प्रति तत्तत्कपालत्वादिना विशिष्यकार्यकारणभावोऽपि युज्यते । प्रलये तु प्रागभावदशायामिव कार्यस्याऽसत्त्वमेव । प्रलयोऽपि भोग्याऽदृष्टोपरमे संजिहीर्षोरीश्वरस्य संजिहीर्षया परमाणुषु विभाजिकया क्रियया । विभागात्संयोगे नष्टे द्व्यणुकनाशात्तन्नाशे च त्र्यणुकादिनाशक्रमेण पृथिव्यादिनाशात् । **'इदं सर्वं यदयमात्मेत्या'**दयः श्रुतयस्त्वयोग्यत्वादबोधिकाः सत्य ईश्वरस्य जगद्विष्टम्भकत्वेनाऽऽत्मविष्टभ्यपुरुषदेहवदस्मिञ्जगत्यात्मत्वं, ब्रह्मणि देहावष्टम्भकाऽऽत्मवत्सर्वत्वं वोपचरन्ति । **'तस्माद्वा एतस्मादित्या'**दयोऽपि तथा । तस्मान्नास्य भगवद्रूपत्वं मुख्यवृत्त्या शक्यवचनम् । नापि भगवदुपादानकत्वम् । अत एव च न सद्द्रवभास्यत्वमपि । ईश्वरजन्यत्वं तु स्यात् । जन्यकृत्यजन्यं(?) क्षित्यादिकं सकर्तृकं न वेति सन्देहे तथाभूतं क्षित्यादि सकर्तृकं । जन्यत्वात् । यद्यज्जन्यं तत्तत्सकर्तृकम् । यथा घटः । सकर्तृकत्वव्याप्यजन्यत्ववच्चेदम् । तस्मात्सकर्तृकम् । इत्यनुमानसिद्धत्वात् ।

न च तथाभूतं क्षित्यादिकं न सकर्तृकम् । शरीराऽजन्यत्वात् । यद्यच्छरीराऽजन्यं तत्तन्न सकर्तृकम् । यथा गगनम् । प्रत्यग्रजायमानाङ्कुरादिकं वा । शरीराजन्यं च क्षित्यादि । तस्मान्न सकर्तृकमिति प्रतिपक्षसद्भावात्पूर्वोक्तमयुक्तमिति शङ्कनीयम् । जन्यत्वेन कर्तृजन्यत्वेन यः कार्यकारणभावस्तस्य, श्रुतीनाञ्चानुकूलतर्कत्वेनाऽङ्कुरादावपि तथात्वेन दोषाऽभावात् । जन्यत्वादेव च गगनदृष्टान्तेन प्रतिपक्षाऽनुत्थानात् । सिद्धे चैवं कर्तृजन्यत्वेन तदुपादानगोचराऽप-

१ दिकारणत्वादिति क पाठः । २ इदं नास्ति क पुस्तके ।

रोक्षज्ञानचिकीर्षाकृतिमानीश्वर एवेति तन्निमित्तकत्वमात्रं साधीय इति कणभक्षाक्षचरणानुयायिनो वदन्ति ।

तत्रोच्यते । भवेदेतदेवं चेत्परमाणुषु कारणत्वं सम्भवति । तदेव तु न सम्भवति । तथाहि—भौतिकत्वे सति नित्यो गतिमान्परमाणुरिति हि परमाणुलक्षणम् । तत्र किन्नाम भौतिकत्वम् । न च भूतसम्बन्धित्वम् । तत्सर्गादौ तदितरस्य पृथिव्यादिभूतस्याऽभावेन लक्षणाऽसम्भवात् । आकाशमादाय समर्थने मनस्यतिव्याप्तेः । सर्गाद्यनङ्गीकारे परमाणूनामेवाऽसम्भवेन सिद्धान्तभङ्गाच्च । न च भूतसमवायित्वं तत् । सर्गादौ तदितरभूताऽभावेनाऽसम्भवग्रासस्योक्तत्वात् । योग्यतामादाय लक्षणसमर्थने भवतु वा तथा, तथापि पुराणेषु योगशास्त्रे च मानससृष्टेः स्मरणान्मनसोऽपि तथात्वेन तत्राऽतिव्याप्तेर्दुर्वारत्वात् । इष्टापत्तौ परमाणूनां पञ्चविधत्वापत्तेः । पूर्ववन्मनसोऽपि साऽवयवत्वापत्तौ तस्यापि नित्यत्वभङ्गाच्च । अन्यथा तद्विरोधात् । इष्टापत्तौ शब्दप्रामाण्यत्यागेन सिद्धान्तभङ्गापत्तेश्चेत्युभयतःपाशा रज्जुः ।

अथ कणादस्मृतिश्रद्धाजाड्यादस्तु वा यत्किमपि लक्षणं, तथापि द्व्यणुकवन्मध्यमपरिमाणद्रव्यारम्भकत्वेन तेषामप्यारब्धत्वमनिवार्यमेवेति नित्यत्वं दुर्वचमेव । न च यत्र विश्रान्तिः स एव परमाणुः । सिद्धान्तभङ्गापत्तेः । अनवस्थाभयात्तदादरणे तत एवाऽऽरम्भवादत्यागस्यौचित्याच्च । किं च कार्यस्य शरीरादेः पाञ्चभौतिकत्वेन जलादयः संयुक्ता अपि भवन्तीति पञ्चत्वदशायां तेऽपि पृथग्भूताः परमाणुत्वमापद्येरन् । तथा सति मृतकादिर्न[1] दृश्येत । अतः परमाणुका-

---

१ मृत्तिकादिरिति ख पाठः ।

रणवादः प्रत्यक्षविरुद्धः । किं च द्रव्यारम्भकत्वमपि न रूपवत्त्वेन । वायुपरमाणुषु व्यभिचारात् । नाऽपि मूर्तत्वेन । मनसि व्यभिचारात् । किन्तु स्पर्शवत्त्वेनेति भवतां मतम् । तदाऽपि मनसि व्यभिचारो दुर्वारः । संयोगस्य मनस्यङ्गीकारात् । तस्य च स्पर्शाऽनतिरेकात् । लोके स्मृतौ च संयुक्त एव स्पृष्टव्यवहारदर्शनात् । शब्दे च तथा । हृदयाऽवच्छेदेन महा[1]गुलीयंत्रशब्दजन्यस्पर्शस्याऽनुभवादित्यन्यत्र विस्तरः । अतः स्पर्शवत्त्वेनाऽऽरम्भकत्वमपि तथा ।

न च परमाणुलक्षणाऽसम्भवः । सद्विशेषचरमत्वस्य तल्लक्षणस्य सत्वात् । विभाजकाऽऽघाताऽसहिष्णवणुत्वस्य चरमपदार्थत्वात् । न चाऽत्र मानाभावः । **'चरमः सद्विशेषाणामनेकोऽसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यत'** इति तृतीयस्कन्धवाक्यस्यैव मानत्वात् । अत एव न तत्संयोगाद्द्रव्योत्पत्त्यङ्गीकारः । दूषणान्तरस्य [2]तर्कवाद उपपादनाच्च । तर्हि कुतः कथं चोत्पत्तिः? । स्थूलादेव कारणाद्विभागेनोत्पत्तिरिति वदामः । श्रुतिपुराणादौ तथैव दर्शनात् । न चानुगतकार्यकारणभावविरहः । जन्यद्रव्यत्वेन [3]स्वयोग्याऽवयवस्थूलांशत्वेन कारणताऽनुगमात् । न च पटादौ सूक्ष्मैरेव तन्तुभिः स्थूलस्य कार्यस्य दर्शनाद्व्यभिचारः शङ्क्यः । तत्राऽपि समुदायस्यैवोपादानत्वेन तं छित्त्वा यंत्रात्पट उद्ध्रियत इति तत्रापि स्थूलादेव । सूक्ष्मस्य समानस्य वोत्पत्तेस्तदभावात् ।

एवं सूत्रादावपि कार्पासादेः स्थूलस्यैव दीर्घाऽवस्थाप्राप्त्यर्थं, तत आकृतिविशेषसम्पादनार्थं च खण्डशोऽवयवयोजने तत्संघा ज्ञेयाः ।

---

१ तोप बन्दूक इतिभाषा । २ अयं वादोऽस्माभिर्न लब्धः । ३ स्वेति ख पुस्तके नास्ति ।

ते चाऽवयवाः स्थूलादेव कार्पासादेर्विभज्य ततः संयुज्यन्ते। तथैव कुण्डलप्रतिमादावपि सुवर्णमण्यादिसमुदायस्यैव कारणत्वम्। यत्र पुनर्लोहदारुदन्तनिर्यासादिभिः पर्यायेणाऽवयवयोजनं मंजूषादौ गृहादौ चेष्टकादिभिस्तत्रापि तत्तदवयवान्समुपादायाऽवान्तराऽवयव्युत्पत्तिस्तत्समुदायाच्च महावयव्युत्पत्तिरिति पटन्याय एव। एवमेव कञ्चुकादयो विज्ञेयाः। यत्र तु घटादिभङ्गेन दन्तशृंगादीनां, तक्षणेन वा पात्रीचषकादीनामुत्पत्तिः। तत्र विभाग एव व्यापारो निमित्तस्य। उपादानन्तु संश्लिष्टावयवसमाज एव।

एवं च गर्भादिष्वपि बीजरजःसमुदायस्यैवोपादानता मांधात्रादावपि पुंसवननीरादिकमेव रजःस्थानीयमित्यदोषः। एतेनाऽण्डजोद्भिज्जा अपि व्याख्याताः। स्वेदजास्तु स्थूलादेव स्वेदादुत्पद्यन्ते। अत एव प्रथमं सूक्ष्मत्वम्। वृद्धिरपि सजातीयसंवलनात्मिका स्थूलादेव। अत एवाऽऽहारे परिणते तत्तद्योग्यावयवसमुदायादेव तद्धातूत्पत्तिः। श्रुति'**श्चाऽन्नमशितं त्रेधा भवतीत्या**'दिः। वृद्धमपक्षीणं च न द्रव्यान्तरम्। तत्त्वेनाऽप्रत्ययात्। प्रत्यभिज्ञाऽनुपपत्तेश्च। पातिव्रत्यादिहान्यापत्तेश्च। विपरिणतं तु दध्यादि दुग्धान्तं च न समुदायजमिति द्रव्यान्तरमेव। तथैव पुत्रादिरपि। रजतादियोगजे दध्नि तु रजतादिकं निमित्तमेव। तत्रापि कारणतौल्यमेव, नतु सूक्ष्मादुत्पत्तिरिति न दोषः। समुदायस्तु न द्रव्यान्तरम्, तथात्वेन प्रत्ययाऽभावात्। अत एकस्यैकमेवोपादानमिति निश्चयः। अन्यथाऽनेकं कार्यं स्यात्। कारणगुणानामेव कार्यगुणजनकत्वेन करणगतैकत्वे प्रत्येकमेकत्वाऽऽरम्भेणाऽनेकैकत्वानां शक्यवचनत्वात्। अनारम्भे हेत्वभावात्। अन्यथा द्वित्वादेरप्यनुत्पत्तिप्रसङ्गात्।

न चाऽत्र पुञ्जात्पुञ्जोत्पत्तिरिति भ्रमितव्यम् । सामुदायिकस्य पुञ्जरूपत्वाऽभावात् । ननु स्थूलात्सूक्ष्मोत्पत्तौ विभागादुत्पत्तिरिति, नाशः कुतः स्यादिति चेत् । संयोगादितिवदामः । पाकजप्रक्रियायां तेजःसंयोगेनैव द्व्यणुकादिनाशस्य भवताऽप्यङ्गीकारात् । मुद्गरखड्गादिसंयोगेन घटशरीरादिनाशस्य प्रत्यक्षसिद्धत्वाच्च । वस्तुतस्तु प्रथममन्तिमं च कार्यं विभागात् । 'असतः सद्ये ततक्षुरि'ति श्रुतेः । विभाजकाघाताऽसहिष्णोः परमाणुत्वाच्च । अवान्तरं तु यथासम्भवमुभाभ्यामुत्पद्यते । नश्यति च । अत एव जलसंयोगाद्व्रीहिनाशः कपालविभागाद्घटनाशस्तक्षणाद्दान्तचषकाद्युत्पत्तिस्तन्तुसंयोगाच्च पटस्येति न कोऽपि क्वापि शंकालेशः । तस्मान्न परमाणुकारणवादः साधीयान् । तथैवाऽऽरम्भवादोऽपि । असतः सत्तापादकत्वात् । न च सा न दुष्टेति वाच्यम् । कार्यस्याऽनियतावधिकत्वप्रसङ्गात् । तथाहि—यदि घटादिकं पूर्वमसदेव पश्चात्कारणेनाऽऽरभ्यते तदा प्रागभावदशायां तस्य शशशृंगादितुल्यत्वादुत्पत्तिरेव न स्यात् । यतः कुतश्चन वोत्पद्येत । वटबीजादिक्षवोऽप्युत्पद्येरन् । न च गोमयाद्वृश्चिकोत्पत्तिदर्शनाददोष इति वाच्यम् । अतिप्रसङ्गाऽऽपत्त्या पाषाणादावनुद्भूतगन्धादेरिव गोमयादौ वृश्चिकादेरनुद्भूतसत्ताया आवश्यकत्वात् । अन्यथा मयूरादेरप्युत्पत्त्यापत्तेः । न चोपादाननिष्ठस्य कार्यप्रागभावस्य तन्नियामकत्वान्न तदावश्यकत्वमिति वाच्यम् । कार्योत्पत्त्यनुकूलया कारणावस्थयैव नियमसम्भवे तदतिरिक्तप्रागभावसत्तायामेव मानाऽभावात् ।

न च कपाले घटो नास्तीति प्रतीतिरेव तत्र मानमिति वाच्यम् । तस्या घटत्वावच्छिन्नप्रतियोगिताकाऽभावविषयतया घट-

संसर्गाऽभावसामान्यत्वेन प्रागभावात्मकविशेषाऽनवगाहितत्वात् । नाऽ'पीह कपाले घटप्रागभाव' इति प्रतीतिस्तत्र मानम् । तस्या एवाऽभावात् । तथाऽऽग्रहेऽप्यसार्वजनीनत्वेन प्रतिवाद्यनादरणीयत्वात् । किञ्चोक्तप्रतीत्याऽऽपाद्यमानः प्रागभावः, किं घटत्वावच्छिन्नप्रतियोगिक एक, उत तत्तद्घटप्रतियोगिकोऽनैकः । नाद्यः । सर्वेषु घटोपादानेषु तत्सत्त्वात्सर्वेभ्यः कपालेभ्यः सर्वघटोत्पत्त्या नियमभङ्गापत्तेः । न द्वितीयः । अभावज्ञानस्य धर्मिप्रतियोगिज्ञानाऽधीनतया तदानीं प्रतियोगिज्ञानाऽभावेन तत्प्रतीत्यनुदयाऽऽपत्तेः । न च घटत्वेन रूपेण प्रतियोगिज्ञानसत्त्वात्तदुदयो निर्बाध इति वाच्यम् । तथा सतीह घटत्वावच्छिन्नप्रागभाव इति तस्या आकारात्प्रागभावस्याऽपि सामान्यत्वाऽऽपत्त्या पूर्वविकल्पीयदूषणापत्तेः । अतस्तद्ग्राहकमानाऽभावात्सामयिकाऽत्यन्ताभावेनापि प्रतीतिनिर्वाहाच्च न तत्सिद्धिः ।

ननु कारणावस्थयापि न नियमसिद्धिः । तथाहि—कारणावस्था नाम कारणस्य फलोपधानदशा । तथा च येभ्यः कारणेभ्यो यत्कार्यमुत्पद्यते तत्कार्यं प्रति तेषां यदि कारणत्वेन फलोपधानं तदा वटबीजादपीक्षूत्पत्तिप्रसङ्गः । यदि च कारणविशेषरूपेण कपालत्वादिना तथात्वं, तदाप्येतेभ्यः कपालेभ्य एतद्घटोत्पत्तिनियमाऽसम्भवः । तज्जातीयं प्रति तस्याऽपि सामान्यत्वात् । अथैतत्कपालत्वादिना तथात्वम्, तदा विनिगमनाविरहो, बहुकपालजन्यं घटं प्रति तावत्सु तथात्वं कल्पनीयमिति गौरवग्रासश्चेति न तथापि नियमसिद्धिरिति चेत् । मैवम् । सत्कार्यवादे कार्यस्य कारणे सत एव ततोऽभिव्यक्तेर्यत्र यत्कार्यसत्ता तत एव तदुत्पत्तिरिति सुखेनैव

नियमसम्भवात् । न च बहुकपालजन्ये घटादौ गौरवग्रासः । समुदायस्यैव तत्र कारणत्वात् । एकस्यैकमेव कारणमिति प्रागेवोक्तत्वात् ।

न च प्रागभावाऽनङ्गीकार उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः । कार्यस्थितावपि कारणावस्थायां सत्त्वादिति वाच्यम् । कालोपाधीनं क्रमिकत्वेन निमित्तसामग्रीप्रविष्टस्य कालोपाधेस्तदानीमभावेन निमित्तसामग्रीविघटनादेव तदभावसिद्धेः । ननु यत्र पक्के घटे स्पर्शरूपरसगन्धानां पाकजानामुत्पत्तिस्तत्रोपादानस्य निमित्तसामग्र्याश्च विद्यमानत्वाद्विलक्षणस्पर्शरूपादिप्रागभावं विना न निर्वाह इति चेत् । न । तादृशविपरिणामस्य स्पर्शादिस्वभावादेव सिद्धेः । ननु यत्र पक्के (?) स्वभावस्य धर्मत्वेन तत्कल्पनेऽपि प्रागभावापेक्षया लाघवात् । एवमव्याप्यवृत्तिसंयोगादेस्तत्तदवच्छेदेनोत्पत्तावपि स्वभावस्यैव नियामकत्वं बोध्यम् ।

ननु प्रागभावाऽनङ्गीकारे कारणशरीरप्रविष्टस्य पूर्ववर्तित्वस्य कथं ग्रहणम् । तस्य प्रागभावावच्छिन्नसमवर्तित्वरूपतया प्रागभावग्रहाधीनत्वादिति चेत् । मैवम् । कार्यविषयकाग्रिमजननज्ञानेनैव तद्ग्रहणसम्भवात् । तादृशज्ञानस्य च लोकप्रवाहादेव सम्भवात् । प्रागभावग्रहाधीनत्वाङ्गीकारे तु प्रागभावस्यापि कारणत्वेन तन्निष्ठपूर्ववर्तित्वस्यापि प्रागभावघटिततया प्रागभावताज्ञानाधीनज्ञानकत्वेनाऽऽत्माश्रयापत्तेः । **'तस्मान्न कारणावस्थातिरिक्तः प्रागभावो न वा ध्वंसोऽप्यतिरिक्तः'** । कार्यस्थितिप्रतिकूलां कारणावस्थां पश्यत एवेह घटो ध्वस्त इत्यादिप्रत्ययात् । न चाऽभावमुखप्रतीतिर्बाधिकेति वाच्यम् । तमसि भावमुखप्रतीतेरिवाऽत्राऽभावमुखप्रतीतेरप्यबाधकत्वात् । न च ध्वंसाऽनङ्गीकारे नष्टस्य पुनरुन्मज्जनापत्तिरिति

वाच्यम् । तादृगवस्थायाः सत्त्वेन निमित्तविघटनेन च तथाऽऽपादयितुमशक्यत्वात् ।

यत्र चावस्थातिरोभावो निमित्तान्तरसमवधानं वा तत्रोन्मज्जनेऽपि बाधकाभावः । अत एव ताम्रादिघटेषु भङ्गोत्तरमपि निमित्तान्तरेण पुनः सन्धानमपि युज्यते । न च तद्घटान्तरमेवेति युक्तम् । प्रत्यभिज्ञाबाधापत्तेः । आश्रमवासिकपर्वस्थकुरुपाण्डवसैन्यस्य, कश्यपकृततक्षकदग्धवटतरूज्जीवनस्य, भारतादौ दर्शनात्तादृशस्थले पदार्थान्तरत्वाऽङ्गीकारे **'एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः । आमन्त्र्याऽन्योन्यमाश्लिष्य ततो जग्मुर्यथागत'**मित्यादिवाक्योक्तविहारादीनां विरोधापत्तेः । तक्षककृतकश्यपनिवर्तनस्याऽपि वैयर्थ्याद्यापत्तेश्च । न च प्रागभावध्वंसादिशब्दाभिलापबाधः । कार्यकारणादिशब्दवदेतयोरपि सापेक्षवृत्तिकत्वेनाऽवस्थामपेक्ष्य मुखेनैवाऽभिलापोपपत्तेः । **तस्माद्ध्वंसोऽपि नाऽवस्थातिरिक्तोऽतो ध्वंसदशायामपि कार्यस्य सत्त्वमेव नत्वसत्त्वम् ।**

प्रतीत्यभावस्तु सौक्ष्म्यादेवेति नाऽऽरम्भवादोऽपि युक्तिसहः । आविर्भावतिरोभाववादे वक्ष्यमाणेनोत्पत्तिस्वरूपविचारेणाऽपि तथा । तेन निर्मूल एव । अतः **'सदेव सौम्येदमग्र आसीदि'**त्यादिश्रुतेर्ब्रह्मण एव मूलकारणत्वम् । ततश्च **'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी'**ति श्रुतेः साक्षाद्वा, **'एतस्मादात्मन आकाशः सम्भूत'** इति श्रुतेः परम्परया वा, ब्रह्मण एव जगदुत्पद्यते । न चाकाशोत्पत्तिर्न सम्भवति निरवयवत्वादिति वाच्यम् । बुद्धिकर्मादिवदुपपत्तेः । न च द्रव्यत्वे सतीति विशेषणान्न दोष इति वाच्यम् । परमाणा-

चुक्तरीत्या व्यभिचारात् । [1]आकाशकालदिङ्मनःपरमाणवो जन्याः । विकारत्वात् । विकाराः । लौकिकपृथक्व्यवहारविषयत्वात् । आत्माऽन्यत्वे सति विभक्तत्वाद्वा । घटादिवदिति प्रत्यनुमानसत्वाच्च । एतेनैवाऽस्पर्शद्रव्यत्वात्पृथिव्यादिविधर्मद्रव्यत्वादिति प्रतिसाधनमपि निरस्तम् । अप्रयोजकत्वात् । अवयवचिन्ता तु न कार्यैव । स्थूलादेव सूक्ष्मोत्पत्तेः । श्रुतिसिद्धत्वात् । तस्य चाऽवयवित्वात् ।

न च निष्कलादिश्रुतिविरोधः । विरुद्धधर्माश्रयत्वात् । उत्पत्तिप्रलयौ च कूर्माङ्गन्यायेन संचरप्रतिसंचराविति सदेव कार्यमुत्पद्यमानं च भगवत्येव तिष्ठतीति भगवानेव समवायी । समवायोऽपि तादात्म्यमेव न त्वतिरिक्तः । तस्य सम्बन्धत्वेन द्विनिष्ठत्वात्प्रतियोग्यन्तराऽभावेन सृष्ट्यादौ त्वया तस्य वक्तुमशक्यत्वात् । तस्याऽपि वृत्तिनियामकसम्बन्धसापेक्षत्वेन तदभावादप्यशक्यवचनत्वाच्च । अनपेक्षत्वे तद्वत्कार्यस्याऽपि तं विना शक्यवचनत्वाच्च ।

अत्राऽनीश्वरसांख्याः—मास्तु परमाणुभ्यः सृष्टिस्तथापि भगवतो न सम्भवति । **'प्रधानाज्जगज्जायत'** इति श्रुतेः । ब्रह्मादिपदानामपि प्रकृतिवाचकत्वात् । **'एतस्माज्जायते प्राण'** इति त्वहंकारपरा । प्राणाद्युत्पत्तेस्तत एवाऽङ्गीकारात् । पुराणादिष्वपि तथैव दर्शनात् । एवं चा**'ऽजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य'** इति श्रुतेर्लोहितशुक्लकृष्णवर्णोपलक्षितरजःसत्त्वतमःसाम्यावस्थारूपा प्रकृतिरेव कर्त्री । उपादानमपि सैवेत्यनुमानात्सिध्यति । तथाहि—कार्यस्य भौतिकत्वात्तत्कारणानां भूतानां तद्गुणानां च सिद्धिर्वादिप्र-

---

१ इत आरभ्यात्मान्यत्व इत्यादिः पाठः ख पुस्तके नास्ति ।

तिवादिनोस्तुल्या। तानि स्थूलान्येव। नतु परमाणुरूपाणि जन्यानि चेत्यप्युक्तरीत्यैव सिद्धम्। आकाशोऽपि जन्यः। उक्तश्रुतेः। कालस्तु नोपाधिभिन्नः। चिरक्षिप्रादिव्यवहारस्य तत एव सिद्धेः।

दिशस्तु श्रोत्राधिष्ठातृत्वादिन्द्रियान्तर्गताऽऽकाशान्तर्गता वा। 'दिक्कालावाकाशादिभ्य' इति सूत्रात्। मनोऽपि जन्यमाकाशवत्। इन्द्रियाण्यपि तथा। नश्वरभावत्वेन वादिविप्रतिपत्त्यभावाच्च। गुणानां तन्मात्रात्वं, तद्भूतजनकत्वं च पुराणादिभ्यः सिद्धम्। इन्द्रियाणि गोलकाद्भिन्नानि कार्यलिंगकानुमानसिद्धानि। रूपादिग्रहणं सकारणकम्। कार्यत्वात्। [1]कार्यजन्यत्वात्। जन्यमनित्यत्वाद्धटवदित्यनुमानेन रूपादिग्रहणस्य कारणसिद्धौ गोलकसद्भावेऽपि तत्तदिन्द्रियाऽन्वयव्यतिरेकानुविधानादिन्द्रियसिद्धिः। मनसोऽपि संकल्पात्कार्यात्सिद्धिः। एतेषां सकारणकत्वं चाऽनुमानादेव सिद्धम्। द्विविधेन्द्रियाणि तन्मात्राणि च सकारणकानि। कार्यत्वात्। यदेवं तदेवम्। घटवत्। यन्नैवं तन्नैवम्। स्वस्वमतप्रतिपन्ननित्यवस्तुवदिति प्रयोगात्।

एवं बाह्याभ्यन्तरेन्द्रियैस्तन्मात्रैश्च कार्यैः सामान्यतः कारणे सिद्धे तस्याऽहंकारत्वेन परिस्थितिः पुराणादिभ्यः। तेन च तथैव महतः। तेन च प्रकृतेः। यद्वा महदादिकार्यं सुखदुःखमोहगुणकद्रव्यजन्यम्। कार्यत्वे सति सुखदुःखमोहगुणकत्वात्। स्त्र्यादिवत्। न च सुखादेरन्तरेवाऽनुभवात्स्त्र्यादीनां [2]सुखादिगुणकत्वे मानाभावः शङ्क्यः। चन्दनसुखं स्त्रीसुखमित्यादिप्रत्ययात्। एवं सिद्धे सुखादीनां बाह्यत्वे गुरुत्ववत्तेषां कार्यगुणरूपेण स्थितेर्निर्बाधत्वात्।

---

१ कार्यं जन्यत्वादिति ख पाठः। २ इति सुखादिकत्व इति ख पाठः।

विषयेषु त्रिगुणकार्येषु सुखादिसिद्धेरप्रत्यूहत्वाच्च । न च स्त्र्यादीनां सुखादिनिमित्तत्वमेव न तु तदात्मकत्वं प्रतीतेस्तथापि सम्भवादिति वाच्यम् । विमताः, सुखदुःखमोहात्मकाः । सुखदुःखमोहनिमित्तत्वात् । यदेवं तदेवम् । यथैका स्त्री रूपयौवनशीलादिशालिनी भर्त्तुर्मनसः सुखस्य, सपत्नीमनसो दुःखस्य, काम्यन्तरमनसो मोहस्य, निमित्तम् । तत्तत्प्रति तेन तेन रूपेणोद्भूतत्वात् । तद्वत् । यन्नैवं तन्नैवम् । केवलचेतनवदित्यनुमानेनापि तेषु सुखादिसिद्धेः ।

एवं च सिद्धे तेषां त्रिगुणकार्यत्वेऽनवस्थाभयेन क्वचिदवस्थितेरावश्यकत्वात्प्रकृतौ पर्यवसानम् । सृष्टेर्गुणवैषम्यजन्यत्वाद्वैषम्यस्य च प्रकाशसुखादिफलोपहितः सत्त्वादिव्यवहारयोग्यो यः कारणगुणपरिणामस्तद्रूपत्वादविषमा गुणा एव प्रकृतिः । एतेषु संयोगविभागादिमत्तयोपादनतया च द्रव्यत्वेऽपि पुरुषोपकरणत्वेन पारार्थ्याद्गुणेन पारार्थ्याद्गुणत्वव्यवहारः । तथा च प्रयोगः । विमतं परार्थम् । संघातत्वात् । घटादिवत् । यन्नैवं तन्नैवम् । पुरुषवत् । न च प्रकृत्यनित्यत्वापत्तिः । अजाश्रुत्यैव बाधात् । अस्यां च प्रक्रियायां पूर्वोक्ताः श्रुतयो मन्वादिस्मृतयः पुराणानि च । अनुग्राहकस्तर्कः । पुरुषस्तु न कर्ता । असङ्गत्वाऽकर्तृत्वयोस्तत्र श्रुतिस्मृतिसिद्धत्वात् । तस्मान्न भगवतः सृष्टिरित्याहुः ।

तन्न युक्तं श्रुतात्मत्वचेतनत्वविरोधनात् ।
प्रकृतौ मूलहेतुत्वस्याऽसिद्धेरनुमानतः ॥

तथाहि—'आत्मैवेदमग्र आसी'दित्यादि श्रुतिष्वात्मादिपदव्याकोपेन प्रकृतौ मूलकारणत्वस्याऽशक्यवचनत्वात् । न चात्मपदमहंकाराद्यन्यतरदिति शङ्क्यम् । तन्निष्ठस्य मोक्षोपदेशविरोधात् ।

'तदैक्षते'त्यादिसृष्टिप्रकरणस्थचेतनलिङ्गबोधकश्रुतिविरोधाच्च । केवलानुमानेन साधने तन्मात्रादिमहदन्तानां कथमप्यसिद्धेः । श्रुतिस्मृत्योः प्रक्रियाऽनुग्राहकत्वेन प्रामाण्याऽङ्गीकारे ताभ्यामेव सिद्धायाश्चेतनकारणतायास्त्यागाऽयोगात् । 'आसीज्ज्ञानमथो ह्यर्थ एकमेवाऽऽविकल्पितम् । यदा विवेकनिपुणा आदौ कृतयुगे युगे । तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयत' इति । 'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यंजकः कालो ब्रह्म तत्रितयं त्वहमि'ति चैकादशस्कन्धीयभगवद्वाक्ये स्वस्यैव तत्तद्रूपत्वकथनात् । न च 'प्रधानाज्जगज्जायत'इति श्रुतिविरोधः । श्रुतेः सावधारणत्वाऽभावान्महत्तत्त्ववदवान्तरकारणत्वेनाऽप्युपपत्तेः ।

एतेनैवा'ऽजामेकामि'त्यपि व्याख्याता ज्ञेया । तत्राऽपि प्रकरणेन भगवच्छक्तेरेवानुग्रहात् । श्वेताश्वतरे शक्तिमुपक्रम्याऽस्य पाठात् । वाक्यस्य साधारणत्वात् । न चात्र मानाभावः । 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति श्रुत्यन्तरे तेषां तेजआदिरूपत्वकथनात्तद्रूपत्रयवतः सत एवेक्षितुस्तत्राभिप्रेतत्वादत्रापि तदुक्तेः शक्यवचनत्वात् । बृहदारण्यकेऽपि 'अणोरणीयान्महतो महीयानात्मे'त्युपक्रम्याऽस्य पाठात् । कर्तृत्वस्य चैतन्यसामानाधिकरण्यं लोके दृष्टमित्यनुमानेनाऽपि साधने चेतनस्यैव तथात्वसिद्धेर्जडायां तस्यां तदभावस्यैव सिद्धेरुपादानत्व-

१ रूपत्वेति ख पाठः ।

मपि न सर्वदा तस्याः । कालस्याप्युपादानत्वात् । कालमुपक्रम्य **'गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः'** । **'पुरुषस्तदुपादानमात्मानं लीलयाऽसृजदि'**ति तृतीयस्कन्धवाक्यात् ।

अत एव कालोऽप्यतिरिक्तः । **'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानवि । चेष्टा यतः स भगवान्काल इत्युपलक्षित'** इति तृतीयस्कन्धे कपिलवाक्याच्च काल उपाधिभ्योऽतिरिक्तः गुणक्षोभकत्वादपि सिद्ध्यति । सृष्ट्यादावुपाधीनां सूर्यपरिस्पन्दादीनामभावात् । स्वतो वा स्वभावतो वा क्षोभे तस्य सार्वदिकापत्तेः । संचरप्रतिसंचराऽपलापप्रसङ्गात् । जन्यत्वन्तु कालस्यापि वाक्यादेव सिद्धम् । अत एव तस्य प्रलयोऽपि व्यवहारमात्रशरणस्य । तदभावे तत्सत्तायामपि मानाऽभावात् । न च **'सदेव सौम्येदमग्र आसीदि'**ति श्रुतावग्रपदेन कालस्याप्युक्तत्वात्तस्य नित्यत्वं शङ्क्यम् । बोधनार्थमेव तथोक्तेः । अन्यथा **'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यदि'**ति श्रुत्यन्तरविरोधापत्तेः ।

**तस्माद्ब्रह्म चेतनं जगत उपादानं निमित्तं कर्तृ चेति श्रुतिभ्य एव मन्तव्यम्** । अत्र केचिदेकदेशिनो जगतो ब्रह्मरूपत्वं तत्परिणामत्वं वाऽसहमाना मायावादमङ्गीकुर्वन्तः सत्कार्यवादं पूर्ववद्दूषयित्वा परिणामवादस्याऽपि विकल्पाऽसहत्वमेवं मन्यन्ते । तथाहि— स द्वेधा मीमांसकप्रतिपन्नः प्रवाहाऽनादित्वमादायैकः । प्रकृतिर्नित्या पुरुषसम्बन्धेन परिणमतीति सादित्वमादायाऽपरः । तत्र नाद्यः । सत्कार्यवादानुरोधेन हेतौ कार्यसत्ताया अवश्यमङ्गीकार्यत्वात् । तथा सति पूर्वापरभावाऽभावेन कार्यकारणभावस्याऽनिर्वाच्यतया व्यवस्थाविरहप्रसङ्गात् ।

न च कार्यस्य सत्त्वेऽपि निमित्तवशाद्बहिर्भावे प्रतीतिविशेषमादाय कार्यस्य सादित्वे कार्यकारणभावोपपत्तेर्नोऽव्यवस्थेति वाच्यम्। एकस्मात्फला[१]दनेकबीजोत्पत्तौ तेभ्यश्चानेकफलोत्पत्तावेकस्मिन्फले तावतां बीजानां फलानां च सत्त्वात्तत्तत्फलत्वेन तत्तद्बीजत्वेन कार्यकारणभावे नियामकाऽभावात्क्रमाऽसङ्गत्या एकस्याऽनेकफलोत्पत्तावेकस्याऽनेकतायां सूक्ष्मस्य स्थूलतायां हेतोर्निर्वक्तुमशक्यत्वेन च तस्या दुरुपपादत्वात्। यदि च बीजफलयोर्हेतुत्वे हेतुहेतुमत्ता, तदा तन्निर्वाहाय पूर्वाऽपरभावोऽवश्यमभ्युपेयः। अन्यथा सव्येतरगोविषाणवद्धेतुहेतुमत्ता न स्यात्। अङ्गीकृते च क्रमे फलपाकोत्तरं तत्र बीजदर्शनात्फलत्वेन बीजत्वेन कारणकार्यभावनिश्चयो न तु बीजत्वेन फलत्वेनाऽतः कार्यकारणभावाऽसिद्ध्या बीजावापोत्तरञ्च भूयसाऽनेहसा फलसम्भवान्मध्ये सन्देहेन क्वचिद्व्यभिचारदर्शनेन च फलार्थिना न बीजमुप्येत।

यदि च व्यभिचारस्य काचित्कत्वाद्बीजावापस्य दर्शनाच्च बीजफलयोरपि हेतुहेतुमद्भावः प्रसिद्ध एवेत्यङ्गीक्रियते, तदापि पूर्वोक्तरीत्या क्रमवैपरीत्यापत्तिरन्योन्याश्रयादनुत्पत्तिप्रसङ्गः। इष्टापत्तौ च प्रत्यक्षबाधः प्रसज्येत। किंच शक्तस्य शक्यकरणं हि सत्कार्यवादे युक्तिः। साप्यनुपपन्ना। पश्चाद्भाविनः शक्यस्य कार्यस्य शक्ते कारणे पूर्वं सत्त्वेन सिद्धत्वाच्छक्तस्य शक्यकरणाभावेऽशक्तिप्रसक्तेः। ततश्च कार्यानुत्पादस्याऽसत्कार्यवादस्य वा प्रसङ्गात्। एवं सहजशे[२]त्त्यभावे कार्यकारणभावाऽभावात्कारणादिपदेषु न तत्तदभिधायि-

---

१ अत्र हि खपुस्तके बहुतरमशुद्धं पङ्क्तीनां बह्वीनामसत्वं च। अस्माभिरपाठः परित्यक्तः। व्यर्थप्रयासात्। २ शक्येति खपाठः।

कायाः पदशक्तेरप्यपायात् । तथा च सति लौकिकवैदिकव्यवहारोच्छेदापत्तौ प्रयोजनाभावादाधेयशक्तेरपि मुधात्वाऽऽपाताच्च । न च पूर्वपूर्वकर्मणां नियामकत्वाङ्गीकारेण क्रमादिसम्पत्त्या न कश्चिद्दोष इति वाच्यम् । तेषामपि जडत्वेन नियामकान्तरसापेक्षत्वात् । न च जीवात्मनां नियामकत्वम् । तथा सति दुःखजनकानां विषादीनामनुत्पत्तिप्रसङ्गात् ।

अतस्तन्मत ईश्वरानङ्गीकारान्नियमनस्याऽसम्भवदुक्तिकत्वम् । शक्तेर्ज्ञातुमशक्यत्वं च । न च फलहेतुप्रवाहोऽनादिः । प्रवाहत्वात् । बीजाङ्कुरवदित्येवं क्रमस्याऽनादित्वं साधयितुं शक्यम् । तदापि हेतोः साध्यसमत्वादनादित्वाऽसिद्धेः । कथं साध्यसमतेति चेदुच्यते । यत्र गोधूमादिबीजनाशे वेणुगोधूमैर्गोधूमानां लुलायशृंगात्कदल्याः काशादिक्षोश्चाङ्कुरोत्पत्तिस्तादृशगोधूमादिभ्यश्च पुनर्वंशाङ्कुराद्यनुत्पत्तिर्दृष्टा तत्र हेतुत्वसन्देहसम्भवात् । न च व्यतिरेकव्याप्तिमादाय सन्देहनिवृत्तिः । यत्राऽनादित्वाभावः क्षुद्रनदीप्रवाहादौ तत्र वर्षासु प्रवाहदर्शनेन प्रवाहत्वाऽभावस्याऽशक्यवचनत्वात् । अथाऽन्यथानुपपत्त्या तथाङ्गीक्रियत इति चेत्तर्हि वादान्तरेऽपि तौल्याद्यवस्थाभावप्रसङ्गो दुर्वार एव ।

अथोत्पत्तिर्न बहिर्भावः । किन्तु मृदो घटरूपेण भवने मृदवस्था गता पिण्डावस्था जाता सा गता घटावस्था जातेत्येव प्रतीतेः । पटे च तन्त्ववस्थाऽनुपमर्देनाऽपि पटावस्थाप्रतीतेरवस्थाविशेषसम्बन्ध एवोत्पत्तिरिति कार्यस्य कारणभेदात्स्वरूपाऽनादित्वं चेदङ्गीक्रियते? । असङ्गतमेतदपि । तथा सति पुत्रेऽपि पित्रवस्थान्तरत्वं स्यात् ।

१ अतीतेति खपाठः ।

तथा च पितुर्नाशः स्यात् । पिण्डावस्थावत् । तन्तुवदनाशाङ्गीकारेऽपि सर्वो व्याप्रियेत । न च तथा । अतः पुत्रोंऽश एव पितुः । एवं बीजमप्यंश एव नत्ववस्थान्तरम् । समानन्यायात् । तथा च विभागद्वारा हेतुत्वमात्रं फले सेत्स्यति । नतु स्वरूपाऽनादित्वमपि । पूर्वमभावस्याऽध्यक्षसिद्धत्वात् । किंच पिता स्वयमनश्यन्पुत्रं प्रति विभागेन हेतुर्नतु संयोगेन । तथा फलमप्यनश्यदेव हेतुः स्यात् । अवयवसंयोगादवयव्युत्पत्तिसिद्धान्तश्च व्याहन्येत । एवमुत्तरावस्थारूपताऽप्यशक्यवचनैव । तथाप्रतीत्यभावात् । संसारप्रवाहस्य भावरूपस्याऽनादित्वाङ्गीकारेऽनिर्मोक्षप्रसंगश्च । अनादिभावस्याऽनन्तत्वनियमात् । आत्मनि तथा प्रसिद्धेः । अतो नाऽयमपि वादो युक्तिसहः ।

एवं प्रकृतिपरिणामवादोऽपि । तथाहि—प्रकृतिपरिणामो हि महदादितृणस्तम्बान्तोऽङ्गीकार्यः । तत्र पृच्छ्यते । महदादिर्भावः किं पूर्वमजात एव पश्चाज्जन्यत, उत जातो जन्यत इति । नाद्यः । स्वभावत्यागेनाऽजातत्वभङ्गप्रसङ्गात् । अजातस्याऽमृतत्वनियमात्तस्याऽनाशापत्तेश्च । अन्यथा प्रकृतिपुरुषयोरपि मर्त्यत्वापत्तेर्दुर्वारत्वात् । अथ प्रकृतिपुरुषमात्रविषय एवायं नियमो न सामान्य इत्यदोष इति वाच्यम् । तदपि न साधीयः । अभ्युपगमाऽतिरिक्तमानाऽभावात् । एवमजत्वेनाऽविकारित्वेनापि व्याप्तेः पुरुषेऽङ्गीकारात्प्रकृतेरविकारित्वं पुरुषे वैपरीत्यमपि शक्यवचनम् । अन्यथा स्वभावभङ्गप्रसङ्गात् ।

अथ प्रकृतेर्विकारित्वमेव स्वभावः पुरुषस्याऽविकारित्वमेव स इत्यजत्वेऽपि स्वभावभेदाददोष इति चेत् । न । तथापि सांसिद्धिकस्वाभाविकसहजाकृतप्रकृतीनां स्वभावाऽपरित्यागित्वस्य योगिव-

हिपक्षिजलादिषु दृष्टत्वात्स्वप्रकृतित्वरूपं स्वभावं परित्यज्य महदादिरूपेण विकृतित्वे प्रकृतेः प्रकृतित्वहानिविकृतित्वापत्त्योर्दुर्वारत्वात् । हान्यनङ्गीकारे च सृष्ट्युच्छेदप्रसङ्गात् । अथाऽमृतापि प्रकृतिरंशतो विकरोतीत्येवं तस्याश्चल एव स्वभाव इति चेत् । न । पर्यायेणैकदा वा सर्वांशविकारे प्रकृतिस्वभावहानेर्दुर्वारत्वात् । चलस्वभावपरित्यागे प्रलयोच्छेदप्रसङ्गाच्च ।

किंच परिणामवादे कार्यस्य कारणाऽभिन्नत्वात्कारणस्यापि कार्यादभेद इति कार्यरूपेण जनने प्रकृतेरजत्वभङ्गप्रसङ्गः । कार्यस्य वाऽजत्वप्रसङ्गः । अंशतो विकारे विभागादुत्पत्तिरित्युपमृद्य प्रादुर्भावान्नित्यत्वभङ्गप्रसङ्गः । अजस्य जन्माङ्गीकारो दृष्टान्तेन शून्य इत्ययमपि वादो न युक्तिसहः । जातो जन्यत इति प्रकारस्तु प्रवाहादित्वपक्षोक्तैरेव दूषणैर्ग्रस्त इत्यकिंचित्करः ।

एवं क्षीणेषु सर्ववादेषु सत एव मायया जन्मेत्येवंरूपो मायावादोऽवशिष्यते । स विचार्यमाणः स्वप्नदृष्टान्तेन जगतो मिथ्यात्वमेव द्रढयतीति पूर्वं स्वाप्निकानां मिथ्यात्वमुपपाद्यते । तथाहि—स्वाप्निकाः सर्वे भावभेदाः शरीरान्तःस्थाः । शरीरसंवृतत्वात् । यद्यत्संवृतं तत्तदन्तःस्थम् । गृहकुम्भवत् । अथवा यच्छरीरसंवृतं तच्छरीरान्तःस्थम् । नाडीवदिति न्यायेन स्वाप्निकानां शरीरान्तःस्थत्वसिद्धिः । न च स्वाप्निका न शरीरान्तःस्थाः । किन्तु बाह्याः । तद्बाह्यत्वेन महत्त्वादिना चाऽऽभासमानत्वादिति सत्प्रतिपक्षसत्त्वात्पक्षे हेत्वसिद्धेर्हेतोः साध्यसमत्वं वा शङ्कनीयम् । ते अबाह्याः । अदीर्घकालदर्शनकत्वात् । दृश्यमानदेशगमनाऽनपेक्षलौकिकदर्शनकत्वाद्वा । यन्नैवं तन्नैवम् । जाग्रद्दृश्यघटादिवदितिन्यायाभ्यां बाह्य-

त्वसाधकहेतोरेव साध्यसमत्वसिद्धेः प्रतिपक्षत्वस्याऽशक्यवचनत्वात् । यदि गत्वा पश्येत्तं देशं पश्यन्प्रतिबुद्धस्तत्रैव तिष्ठेत् । बहुकालेन च पश्येत् । यतश्चाऽगत्वा लौकिकप्रत्यासत्त्यभिमानेन पश्यत्यतोऽन्तरेव पश्यतीति तर्केणापि प्रतिपक्षनिरासाच्च ।

किं च वाजसनेयिनां बृहदारण्यके श्रूयते । **'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजत इति' 'स्वप्नान्त उच्चावचमीयमान'** इति मन्त्रेऽनेकरूपकरणम् । **'तन्नायतं बोधयेद्दुर्भैषज्यं हास्मै भवती'**ति सुप्तस्य निर्बन्धेन जागरणे कष्टं च श्राव्यते । यदि जाग्रद्दृष्टमेव तत्र स्यात्तदा न तत्रेत्यादिना तदभावं, ततः करणं, दुर्भैषज्यं च न वदेत् । यत्र सुप्तस्तत्रैव स्त्रिया रममाणः स्खलिते जाग्रंस्तां बहिः यदि पश्येत् । यतो न पश्यति ततः शोकं करोति । यतः करोति ततो रथाद्यभाव इत्यतोऽपि तेषामान्तरत्वसिद्धिः । न च चिन्तामण्यादिसिद्धसृष्टिन्यायेन स्वप्नेऽनुपादानिका सत्यासृष्टिर्बाह्यैव भवतीति वाच्यम् । पूर्वोक्तन्यायानां तत्प्रतिपक्षत्वात् । अनुपादानकत्वेऽवयवादिविघटनेऽपि नाशाऽसम्भवाऽऽपत्त्या चिन्तामण्यादिसिद्धसृष्टावपि तथात्वस्य विप्रतिपक्षत्वाच्च । न्यग्रोधधाना[१]दाविव तत्राप्यमूर्त्तसकलपदार्थाङ्गीकारे बाधकाभावाच्च । चिन्तामण्यादिसृष्टेर्जा[२]ग्रदनुभववदस्याः स्वाप्निकसृष्टेरननुभवेन स्वाप्निका मिथ्याभूता बाह्यधर्मत्वेन प्रतीयमानत्वे सत्यन्तर्दृष्टत्वात् । यदेवं तदेवम् । करतलदृष्टमा[३]यागजवत् । यन्नैवं तन्नैवम् । सत्यगजवदिति साधनेन च तत्सत्यताया अशक्यवचनत्वात् । सन्ध्याधिकरणविरोधाच्च । अतस्तत्र मायिक्येव सृष्टिरिति

१ धान्यादिति खपाठः । २ जाग्रत्त्यनुभवेति कपाठः । ३ मायिकवदिति खपाठः ।

निश्चीयते । सा च मिथ्यैव भवितुमर्हति । दृश्यमानस्य स्थूलस्याऽन्तर्मातुमशक्यत्वात् ।

एवं सिद्धे स्वाप्निकस्य मिथ्यात्वे यथेयं गजतुरङ्गमनुष्यादिरूपेण मिथ्या, तथा मनोध्यातापि सा ज्ञेया । तत्राऽयं प्रयोगः । जाग्रति मनोध्याता भावभेदा बाह्यरूपेण मिथ्याभूताः । तथा प्रतीयमानत्वे सत्यान्तरत्वात् । यदेवं तदेवम् । स्वाप्निकवदिति । न च ध्यानस्य स्मरणपर्यायत्वात्स्मरणे च बहिष्ठस्य सत एव संस्कारद्वारा गोचरत्वमात्रं भवतीति दृष्टान्तविरोध इति वाच्यम् । अतीतस्याऽसतोऽपि गोचरत्वात् । हेत्वन्तरेण च दृष्टान्तसंगतेः । तथा च प्रयोगः । मनोध्याता गजादयो वर्तमानत्वेनाऽनुभूयमानत्वेऽप्यसन्तः । आद्यन्तयोरसत्त्वात् । यदेवं तदेवम् । स्वाप्निकवत् । यन्नैवं तन्नैवम् । स्वमतप्रतिपन्ननित्यवस्तुवदिति । न च विमता वर्तमानत्वेनाऽनुभूयमानाः पदार्थाः सन्तः । आद्यन्तयोरसत्त्वात् । यदेवं तदेवम् । घटादिवदिति साधारणो हेतुरिति वाच्यम् । विमता घटादयो वितथाः । वितथसदृशत्वात् । यदेवं तदेवम् । ऐन्द्रजालिकवदिति साधने घटादीनामप्यसत्त्वसिद्धिर्दृष्टान्तविरहात् । न च विमताः सत्याः । अर्थक्रियाकारित्वादिति साधनान्न दोष इति वाच्यम् । असन्तः, अर्थक्रियाकारित्वात् । स्खलनजनकस्वाप्निकप्रमदास्पर्शवदिति प्रयोगेणाऽस्यापि साधारणत्वनिश्चयात् । न च जाग्रद्वृत्तिगम्यत्वे सतीति विशेषणे दत्ते हेतोर्न साधारणत्वापत्तिरिति वाच्यम् । तथापि मायाहस्त्यादौ व्यभिचारस्य दुर्वारत्वात्साधारणस्याऽनिवृत्तेः । एवं प्रपञ्चसत्तासाधकानां हेतूनामाभासत्वे सिद्धेऽसतो गगनकुसुमादेस्तत्त्वतो मायातश्च जन्माऽदर्शनात्सत एव मायातो जन्म वाच्यम् । सच्च ब्रह्मैव । अभेदश्रुत्यनुरोधात् ।

एवं सति ब्रह्मैव प्रपञ्चाकारेण मायया विवर्तत[1] इति सिद्धो मायावादः। अत एव छान्दोग्यश्रुतिरपि **'वाचारम्भणं विकारो नामधेयमि'**ति विकारस्य वाचारम्भणत्वमुक्त्वा मृत्तिकेत्येव सत्यमिति कारणस्य सत्यत्वं वदति। तेन दृष्टान्तेन कार्यस्य जगतो मिथ्यात्वं, कारणस्य ब्रह्मण एव सत्यत्वमाह। **'अनृतापिधाना'** इति च। बृहदारण्यकेऽपि **'इन्द्रो मायाभिः पुरुरूप ईयते'** इति परमेश्वरस्य मायाभिर्बहुरूपत्वमाह। **'अतोऽन्यदार्तमि'**ति च। श्वेताश्वतरेऽपि **'मायां तु प्रकृतिं विद्यादि'**ति। इममेवार्थं पुराणान्युपष्टभ्नन्ति। यथा ह्येकादशस्कन्धे **'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः। नश्वरं गृह्यमाणं च विद्धि मायामनोमयमि'**ति। अत्र च नश्वरमिति हेतुगर्भं विशेषणम्। तेनेदं मनआदिभिर्गृह्यमाणं मायामनोमयम्। नश्वरत्वादित्यनुमानं फलति।

एवं **'त्वय्युद्भवे'**त्यत्रापि विकारस्य मायात्व आदावन्ते चासत्त्वादिति हेतुः फलति। तेन च जन्मादयो देहस्यैवेति तथैव धर्मद्वारा मायिकत्वमुक्तं भवति। द्वादशाध्याये च **'स एष जीव'** इत्यारभ्याऽऽसमाप्ति प्रपञ्चस्य मायामयत्वं वेदार्थत्वं चोक्तम्। हंसगीतायां च। **'असत्त्वादात्मनोऽन्येषां भावानां तत्कृता भिदा। गतयो हेतवश्चाऽस्य मृषा स्वप्नदृशो यथे'**ति। **'ईक्षेत विभ्रममिदं मनसो विलासं दृष्टं विनष्टमतिलोलमलातचक्रम्। विज्ञानमेकमुरुधेव विभाति माया स्वप्नस्त्रिधा गुणविसर्गकृतो विकल्प'** इति। एवं योगेश्वरादिवचनेऽपि। एवमेव विष्णुपुराणादिष्वपि। तस्मान्मायिक एव प्रपञ्चो ब्रह्मसत्तयैव सदिति प्रतीयत

१–विवर्तित इति **ख** पाठः।

इत्येव मन्तव्यम् । ततश्च न ब्रह्मरूपत्वं न वा ब्रह्मपरिणामत्वमिति प्राप्ते—

**अत्रोच्यते न सर्वोऽपि प्रपञ्चो मायिकोऽपि तु ।**
**नश्वरो मायिकस्तेन सत्यो युक्त्यापि सिद्ध्यति ॥ २ ॥**

तथाहि—भवदभिमतो व्यावहारिकः प्रपञ्चः कस्यचिदुत्कृष्टसत्ताकस्य प्रतिकृतिः । अनन्तरोत्पन्नश्च । मायिकत्वात् । यदेवं तदेवम् । आभासादिवत् । यन्नैवं तन्नैवम् । ब्रह्मवत्खपुष्पवच्च । एवमुत्कृष्टसत्ताकप्रतिकृतित्वेऽनन्तरोत्पन्नत्वे च सिद्धे ततः पूर्वसिद्धस्य पारमार्थिकं सत्यत्वं सिद्ध्यति । न च प्रतिबिम्बस्य मायिकत्वादादर्शद्वयसाम्मुख्ये तदनवस्थादर्शनात्तस्मिन्दृष्टान्तिमे सत्यत्वं न सिद्ध्यतीति वाच्यम् । तत्रापि सत्यस्यैवादर्शद्वयबिम्बस्य पूर्वावधित्वात् । अन्यथा तदभावात् । एवं च व्यावहारिकसत्तापेक्षयोत्कृष्टा सत्ता पारमार्थिक्येवेति तत्सत्ताकत्वं पूर्वसिद्धस्य निराबाधम् । **'आत्मैवेदमग्र आसीत्स आत्मानँ स्वयमकुरुत । सत्यं चाऽनृतं च तत्सत्यमभवत् यदिदं किंच तत्सत्यमित्याचक्षते' 'पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम्' 'स वै सर्वमिदं जगत्तत्सम्भूतं सृस(?) भव्य'**मित्यादिश्रुत्यनुगृहीतत्वाच्च ।

न चाऽत्राप्यकुरुतेति श्रवणाज्जन्यत्वे पूर्वोक्तदोषप्रसङ्ग इति वाच्यम् । तथाऽऽविर्भावेनाऽदोषात् । तस्य वादान्तरे व्युत्पाद्यत्वात् । न च सत्कार्यवादोक्तदूषणग्रासः । श्रौतत्वेनाऽलौकिकेऽर्थे तदनवसरात् । अन्यथा तौल्यात् । नन्वेवं सत्युपन्यस्तानि पुराणवाक्यानि

---

१—अत्राऽप्यशुद्धबहुलः पाठो व्यर्थाडम्बरमिया न रक्षितः ।

श्रुतिवाक्यानि च कथं सङ्गच्छन्त इति चेदेवं सङ्गच्छते । यदिदं पौराणिकवचनकदम्बकमुपन्यस्तं तदपि मतान्तरसृष्टिरूपं तदभिमतमेवादाय वैराग्यार्थमुच्यते । न तु सृष्टिमात्रमिथ्यात्वाय । 'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया । यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशमि'ति तृतीयस्कन्धविरोधात् । अवान्तरप्रकरणेन वैराग्यार्थत्वनिश्चयाच्च । तथा—एकादशस्कन्धे सप्तमाध्याये **'त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु । मय्यावेश्य मनः सम्यक्समदृग्विचरस्व गामि'**त्यनेन बन्धुस्नेहत्यागः स्वस्मिन्सम्यङ्मनोनिवेशनं चेत्यङ्गद्वयविशिष्टसमदृक्तया गोविचरणमुपदिशतो भगवतो **'यदिदं मनसा वाचे'**त्यादिवाक्यपंचकं, तत्तु समदृक्त्वस्य पूर्वाङ्गं यः स्नेहत्यागस्तदर्थमान्तरालिकसृष्टिमादाय भवति । **'सर्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः । पश्यन्मदात्मकं विश्वं न विषज्जेत वै पुनरि'**त्युपसंहारे । **पश्यन्मदात्मकं विश्वमिति** समदृक्त्वविवरणात् । अन्यथा पश्यन्मायात्मकमित्येवं विवृणुयात् । एतस्यैव विस्तारोऽग्रे प्रश्नानुरोधेन ।

एवं सति तदग्रिमप्रश्ने **'सोऽहं ममाह'**मितिश्लोके **'त्वन्मायया विरचिते'** यत्तदपि सोहं ममाहमित्याकारिकाया अन्तरासृष्टिविषयिण्या मूढबुद्धेर्विशेषणम् । तथा च तदिति ल्यब्लोपात्पंचमी लुप्ता । तां बुद्धिं त्यक्त्वा विगाढो दृढोऽहं भवन्निगदितं यथा संसाधयामि तथा शाधीत्यन्वयो ज्ञेयः । दशमाऽध्याये तु **'सुप्तस्य विषयालोक'** इति श्लोके भेदात्मबुद्धेरेवाऽफलत्वमुक्तम् । न तु प्रपञ्चस्य मिथ्यात्वमिह । **'वैशारदी साऽतिविशुद्धबुद्धिरि'**त्यत्रापि विद्यया विकल्पबुद्धिरूपायाः सकार्याऽविद्याया नाशे तन्नाशिकायाः सात्त्विकज्ञा-

नरूपाया विद्याया अप्यग्निदृष्टान्तेन नाश्यनाशे स्वतो नाशमात्रमुच्यते । तावता न काचित्क्षतिः । सात्त्विकत्वेन तस्या अपि मनोवस्थारूपत्वात् । एतदग्रे '**अथैषामि**'त्यारभ्य '**मुह्यन्ति शुचार्पिता**' इत्यन्तेन कर्ममार्गीयभेदवादिनिन्दनं '**काल आत्मे**'त्यनेन नानावादं चाह । तत्त्वनुकूलमेव । एवमग्रे द्वादशाध्याये '**तस्मात्त्वमुद्धवोत्सृज्ये**'ति द्वाभ्यां सर्वत्यागपूर्वकपुष्टिमार्गीयशरणगमनोपदेशोत्तरमुद्धवसंशयनिवर्तनाय, '**स एष जीवो**' इत्यारभ्य '**अथ त्वजास्त**'मित्यन्तेन यदुक्तं तत्राऽपि संशयोत्पादकचांचल्यनिवृत्यर्थं मनोनिग्रहस्यावश्यकत्वात् । विहितप्रतिषिद्धादिभेदबोधनेन चित्तचांचल्यजनकस्य वेदस्य 'स एष' इत्यादि 'वाणी'त्यन्तेन स्वव्यक्तिरूपं स्वरूपं सपरिकरमुक्त्वा तदर्थस्य रूपप्रपञ्चस्याऽपि वेदाऽतिदेशेन स्वव्यक्तिरूपतामुक्त्वा त्याज्यांशं बोधयितुं 'य एष' इत्यादिना प्रकृतिपुरुषबीजस्य कर्मात्मकस्य भेदप्रपंचस्य स्वरूपं वदन्प्रतिषिद्धन्यायेन '**हेयमेतं मायामयं यो वेद स वेदं वेदे**'त्युपसंहृत्य '**एवं गुरूपासनये**'त्येकेन मनोनिग्रहप्रकारमाह । अतोऽत्रापि वैराग्यार्थं मतान्तरसृष्ट्यनुवादः पूर्ववदेवेति न चोद्यावकाशः ।

एवमेव त्रयोदशे योगबोधनार्थं हंसगीतामुपक्षिप्य तत्र भेदस्य वाचारब्धत्वमुक्त्वा '**यदिदम्मनसे**'त्यनेन सर्वस्यात्माऽभेदेन ज्ञानमुपदिश्य जीवदेहस्वरूपा ये गुणाश्चित्तं च, तदुभयत्यागार्थं जीवस्य मनोवस्थाविलक्षणत्वं साक्षित्वं च नृसिंहोत्तरतापनीयवदुक्त्वा '**तर्ही**'त्यादिद्वाभ्यां त्यागोपायमुक्त्वा 'यावन्नानार्थे'त्यादिना नानात्वस्य भ्रांतिकल्पितत्वाद्धार्दं नानात्वमनुमानादिना संछिद्य 'मां भजते'त्युपदिश'न्नीक्षेत विभ्रममि'त्यनेन त्रिविधस्य जाग्रदादिष्वन्तरा

सृष्टस्यैव मनोविलासत्वं भ्रमत्वं चाऽऽह । 'ततो दृष्टिं तत' इत्यादि त्रयेण जीवदेहस्य पूर्वोक्तस्यैव नश्वरत्वादिकं वदन्सांख्ययोगगुह्यमुपसंहरति । तेनेदमपि वैराग्यार्थमेव भेदवाद्यभिमतां गुणविसर्गसृष्टिमेव तादृशीं वदतीति पूर्ववदेव ।

अत एव चतुर्दशपञ्चदशाध्यायद्वये एकस्यैव वेदस्याऽध्येतॄणां प्रकृतिवैचित्र्यान्नानार्थवक्तृत्वं स्वमाययोक्त्वा, तुच्छफलभोक्तृत्वं च तेषामुक्त्वा, विंशैकविंशाभ्यामध्यायाभ्यां सप्रपञ्चं वेदार्थं संग्रहेणोक्त्वा, 'किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् । इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन । मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम् । एतावान्सर्ववेदाऽर्थः शब्द आस्थाय मां भिदाम् । मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदती'त्यन्तेन शब्दस्य स्वाऽऽख्यानेन भिदामायिकतावक्तृत्वमुक्तम् । तेन पूर्वोक्त एवार्थो निर्णीत इति निगर्वः । एवं सत्येकोनविंशे यदुक्तं 'त्वय्युद्भवाश्रयती'त्यनेन तदपि 'मायामात्रमिदं' ज्ञात्वेत्युपक्रमोक्तसन्यायांगवैराग्यसिद्ध्यर्थं पूर्वोक्तसृष्टिं लक्षीकृत्यैवोक्तमतोऽत्रापि न चोद्यावकाशः । एवमेवाष्टाविंशे 'छाया प्रत्याह्वयाऽऽभासा असन्तोऽप्यर्थकारिणः । एवं देहादयो भावा यच्छन्त्या मृत्युतो भयमि'त्यनेन पूर्वोक्तरूपाणामेव देहादीनामर्थक्रियाकारित्वेऽप्यसत्त्वं बोधयित्वा तदनुपदमेवा'ऽऽत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः । त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वर' इत्यनेन सर्वस्येश्वरात्मकत्वमुक्तमिति भेद एव मिथ्यात्वं पर्यवस्यति । समाप्तौ 'चैष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य संग्रह' इति कथनात्सर्वस्य ब्रह्मात्मकत्वमेव सिध्यतीत्यलं प्रसक्तानुप्रसक्त्या ।

एवमेव वैष्णवादिपुराणेष्वपि ज्ञेयम् । **'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवदि'**ति प्रथमांशे पराशरीयवाक्यात् । याः पुनश्छान्दोग्यादिश्रुतय उक्तास्तासान्त्वयमर्थः । तथाहि—छान्दोग्ये तावदेकविज्ञानेनाऽविज्ञातविज्ञानं प्रतिज्ञाय **'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि'**त्यादिना मृत्पिण्डलोहमणिनखनिकृन्तनदृष्टान्तैरेकोपादानकं कार्यैकदेशमुदाहृत्य तस्मिन्नेकदेशे यद्विकारत्वरूपो यो धर्मो निश्चितः स एव तु तज्जातीयेषु कार्यान्तरेष्वप्युपलभ्यमानसामान्यो भवतीति सामान्यलक्षणप्रत्यासत्त्यैव सर्वज्ञानं भविष्यतीति तद्वारणाय प्रकृते मृत्तिकेत्येव सत्यमित्यादिना कारणरूपेण सत्यत्वकथनान्मृदादिरूपेण ज्ञानस्यैव विवक्षितत्वं न तु मृण्मयत्वादिरूपेणेति । ततोऽपि वैलक्षण्यबोधनात् । दृष्टान्ते कार्यकारणयोः कारणताप्रकारस्य च प्रत्यक्षत्वात् । दार्ष्टान्तिके च कार्यस्य प्रत्यक्षसिद्धत्वं न तु कारणस्य, कारणताप्रकारस्य चेति प्रतिज्ञासिद्धये तयोः कार्यकारणाभेदस्य च बोधनीयत्वा**'द्यस्तु यस्यादिरन्तश्च स वै मध्यं च तस्य तत् । विकारो व्यवहारार्थो यथा तैजसपार्थिवा'** इत्येकादशस्कन्धवाक्ये पार्थिवतैजसपदाभ्यां मृत्पिण्डलोहमण्यादिगोचरीकरणेनैतच्छ्रुत्युपबृंहणादपि घटः पट इत्यादीनां कार्यप्रकाराणां व्यवहारार्थं वाचासंकेतितत्वम् । न तु तेन रूपेण तेषां वस्तुत्वम् । किन्तु मृदादिरूपेण । तथा प्रकृते कार्यप्रकाराणां कारणाऽनन्यत्वेन सत्यत्वमेव श्रुत्या बोध्यते, नतु मिथ्यात्वम् । शुक्तिरजतादिवत् । अन्यथा तदेव दृष्टान्तीक्रियेत । नाऽपि तत्र सामान्यलक्षणा सम्भवति । प्रमाणामनन्तरूपत्वात् ।

अत एव सूत्रकारोऽपि तदनन्यत्वमारम्भणशब्दादिभ्य इत्येवाऽसूत्रयत् । यत्तु 'तदनन्यत्वसूत्रे भेदव्यासेध एव क्रियते नत्वभेदो बोध्यत' इति कैश्चिदुक्तं तदपि दृष्टान्तोपरोधादेव परास्तम् । व्यासेधिते च भेदेऽभेद एव पर्यवसानादभेदपर्यन्तत्वमेवाचार्याशयगोचरम् । नो चेत्सन्देहनिराकरणार्थं प्रवृत्तत्वात्तन्मिथ्यात्वमेव ब्रूयात् । 'पुरुषस्य चैतन्यं' 'राहोः शिर' इत्यादौ या नामधेयमात्रता सापि ज्ञाता सती तयोरभेद एव पर्यवस्यति । नतु भेदस्य कल्पनामात्रतां गमयित्वा निवर्तते । यदि तावदेव कृत्वा निवर्तेत तर्ह्यर्थस्याभिलापमात्रत्वाद्वन्ध्यासुतादिवच्चैतन्यराहू कदाचिदपि न प्रतीयेयाताम् । **'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प'** इति पातञ्जलस्यापि तादृशो भेद एवाऽत्र लक्ष्यः । तस्यैवाऽवस्तुत्वात् ।

रज्जुसर्पमृगतृष्णोदकादिषु यद्व्यासेधमात्रे पर्यवसानं, तत्तु तत्स्वरूपस्याऽवस्तुत्वात् । न चेह तथा । अबाधितप्रतीतिसिद्धत्वात् । 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेद' इत्यादिश्रवणात् । प्रकृतश्रुतिरपि वाचारम्भणरूपाया विक्रियाया एव नामधेयतां विधत्ते वाचारम्भणं विकारो नामधेयमिति । यदि कार्यस्वरूपस्याऽपि वाङ्मात्रतामभिप्रेयाद्वाचारम्भणं नामधेयमिति पदद्वयं न ब्रूयात् । एकेनैव चारितार्थ्यात् । अतो वाक्संकेतस्यैवाऽनृतत्वमेवं फलतीति स्वरूपं कारणादभिन्नमेव । अतो दृष्टनष्टस्वरूपत्वं स्वरूपेणानुपाख्यत्वं च सृष्ट्यन्तरविषयकं न तु विषयश्रुतिगोचरमिति कल्पितमेवैतत् ।

एवमेव दार्ष्टान्तिकवाक्ये **'ऐतदात्म्यमिदं सर्वमि'**त्युक्त्वाऽग्रे तच्छब्देन सर्वं परामृश्य तस्य सत्यत्वं विदधती श्रुतिर्यदात्मक-

मिदं सर्वं सत्यमुक्तं तत्स्वरूपमाह—'स आत्मे'ति। जडवज्जीवस्याऽपि तदात्मकत्वमाह **'तत्त्वमसी'**ति। यदि जीवस्य परब्रह्मात्मकत्वमभिप्रेयात्तत्पदं पुनर्न ब्रूयात्। स आत्मा त्वमसीत्येतावतैव चारितार्थ्यात्। अतो दार्ष्टान्तिकेऽप्यनभिप्रेतमेव मिथ्यात्वम्। अनृताभिसन्धबन्धनादिकं त्वनेकान्तिवादिनामेव भीषकं नत्वेकान्तिवादिनाम्। वृक्षशाखोदधितरंगवन्नानात्वाऽनङ्गीकारात्। **'अपागादग्नेरग्नित्वमि'**त्यादावपि वाचारम्भाग्नित्वादेरेवाऽपायो न कारणाऽभेदस्यापि। त्रीणि रूपाणीत्येव सत्यमितिकथनात्।

यदि कारणाभिन्नस्याऽग्न्यादिस्वरूपस्याऽपि मिथ्यात्वमभिप्रेयात्तर्ह्यग्न्यादित्वमपोह्य नेदमित्येव सत्यमित्येव ब्रूयात्। **'स वा एष महानज'** इत्यादिश्रुतयस्तु विरुद्धधर्माधारत्वबोधनेन माहात्म्यमेव परब्रह्मणो गमयन्तीति व्युत्पादितमन्यत्र। अतो यदविद्यात्मकत्वं नामरूपजीवव्याकरणादीनामङ्गीकृत्येश्वरस्य नामरूपसम्बन्धात्तादृशतत्कारणत्वादिसमर्थनं तत्त्वप्रज्ञाविलसितमात्रमिति निपुणधीभिरवधेयम्।

**'आकाशो वै नामरूपयोर्निर्वहिता'**। **'ते यदन्तरा तद्ब्रह्मे'**ति श्रुतिस्तु तन्निर्वाहकत्वं ब्रह्मणो वक्ति। न तु तयोराविद्यकत्वम्। एवमेव **'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्त'** इत्यपि तयोः कार्यत्वमात्रं वक्तीति पूर्वतुल्यैव। कार्यस्वरूपस्य ब्रह्मात्मकता तूपपादितैवाधस्तात्। आत्मैकत्वदर्शनस्याभयमिव परिणतसर्वभूतब्रह्माभेददर्शनस्य फलमपि श्रूयत एव। **'तदिदमप्येतर्हि य एवं वेद ब्रह्माहमसीति स इदं सर्वं भवति तस्य ह न देवाश्चर्षयश्च नाभूत्या ईशत आत्मा ह्येषां सम्भवतीति'**। भार्गव्यां

च विद्यायां '**य एवं वेद प्रतितिष्ठती**'त्यादि । न च फलजाघन्यं शङ्क्यम् । पुत्रेष्टिकारीर्यादिवद्विद्वदौन्मुख्यजननार्थत्वेनाधिकारसम्पादकत्वात् । अस्तु[1] वा तथा । तथाप्यफलत्वं गतमेवेति दिङ्मात्रमत्रोक्तम् । विशिष्यतु भाष्यविभागे प्रतिविधास्यामः । एव- '**मनृतापिधाना**' इत्यपि छान्दोग्ये दहरविदः कामानुपक्रम्य पठितम् । '**त एते सत्याः कामा अनृतापिधानास्तेषां सत्यानामनृतमपिधानमिति**' । तदप्यन्तरासृष्टावेव पर्यवस्यति । तस्या एवाऽपिधायकत्वात् ।

वस्तुतस्तु '**सत्यं चानृतं च सत्यमभवदि**'ति श्रुतेः सस्यैव बहुभवनमुपक्रम्य पाठनात्तत्र च मायादिशब्दाभावा'**द्यदिदं किंच तत्सत्यमित्याचक्षत**' इत्युपसंहाराच्चानृतशब्दोऽप्यत्र न मिथ्यावचनः किन्तु द्वैरूप्यकथनप्रस्तावादाधिदैविकसृष्टिविलक्षणमात्रपर इति तत्र सिद्धत्वात्प्रकृतेऽपि प्रस्तुतलक्षणापिधानपरो नतु मिथ्यापरः । खपुष्पतुल्येन पिधानाऽसम्भवात् । शुक्तिरजतादावपि बुद्धेः सत्याया एव तेन रूपेणाख्यानाद्भूतवत्तया पिधानाविरोधः । एतेनैवा'**ऽनृतं वै वाचावदति**' '**अनृतं मनसा ध्यायतीत्या**'द्यपि व्याख्यातप्रायम् । '**इन्द्रो मायाभि**'रिति तु मायाभिः पुरुरूपदर्शनं वक्ति, न तु तया तथा भवनम् । तया तथा भवने विवक्षिते ऋक्पूर्वार्ध एव माययेति वदेत् । न च मायापुरुरूपपदयोः समभिव्याहारबलात्तथार्थो लप्स्यत इति वाच्यम् । एतस्य पूर्वोक्तानुवादत्वेन पुरोवादवैलक्षण्यस्याऽशक्यवचनत्वात् । न च तदर्थनिश्चायनार्थमेवात्र समभिव्याहार इति वाच्यम् । विनिगमकाऽभावात् ।

---

१ वस्तुवेति प्रतिभूपुस्तकद्वयेप्यशुद्धपाठो लब्धः ।

किंच इदं हि वाक्यं मधुब्राह्मणस्थम् । तत्र च मैत्रेयीब्राह्मण-प्रतिपादितस्याऽऽत्मनः पृथिव्यादिषु विद्यमानत्वममृतब्रह्मसर्वात्मकत्वं चोपक्रमे प्रतिपाद्यते । द्रष्टा ऋषिर्मंत्रः पुरां करणं, पक्षिरूपेण तासु प्रवेशं, चोक्त्वा सर्वस्य तत्संवृतत्वमुवाद । तेन प्राप्ते भेदे पूर्व-प्रतिपादितसर्वरूपत्वहानिमालोक्य तन्निरासेन सर्वरूपत्वसमर्थनाय **'रूपं रूपमि'**ति मन्त्रः पठ्यते । **'यं वै हरयो यं वै दश च सहस्राणि बहूनि चानन्तानि चे'**त्यनेन विप्रतीयते । ततो यस्यैवं हर्यादिरूपताऽत्रोक्ता ब्राह्मणोपक्रमे चामृतब्रह्मस्वरूपतोक्ता तस्यैव **'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमि'**त्यनेन स्वरूपमुक्त्वा **'य आत्मा ब्रह्म सर्वानुभूरित्यनुशासनमि'**त्युपसंहृतम् । तत्रोपक्रमोपसंहाराभ्यां ब्रह्मणः सर्वरूपता मायां विनैव बोधिता, मंत्रव्याख्याने च तथैव हर्यादिरूपतेत्यात्मन एव च सर्वरूपताऽभ्यस्तेति सर्वानुभूरित्युपपत्त्या च मायावाद्यभिमताया मायाया वाक्यार्थविरुद्धत्वादत्र मायाशब्देनेन्द्रियवृत्तिरेवोच्यते । **'स्यान्माया शांबरी कृपादम्भो बुद्धिश्चे'**त्यनेकार्थकोशे मायापदस्य बुद्धिवाचकताबोधनाच्च । अतो नानेनापि प्रपंचस्यात्रोक्तस्य मायिकत्वसिद्धिः । **'अतोऽन्यदार्तमि'**ति तु ईश्वरातिरिक्तस्य रूपस्य जीवजडात्मकस्य दुःखित्वं बोधयति न मिथ्यात्वम् । ब्रह्माभेदस्य श्रुत्यन्तरसिद्धत्वात् । दुःखं चानन्दतिरोभाव एवेति । तत्रापि न भवदिष्टसिद्धिः ।

श्वेताश्वतरीये तु मायायाः प्रकृतित्वं बोध्यते । तस्याश्च सत्यत्वमेकादशस्कन्धादवगम्यते । **'तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद्बृहदि'**त्युपक्रम्य

'प्रकृतिर्ह्यस्योपादानमाधारपुरुषः । परः सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयन्त्वहमि'ति कथनात् ।

न च नृसिंहतापनीये 'सैषाऽविद्या जगत्सर्वमि'ति प्रतिज्ञाय तस्यास्तमोरूपत्वमप्यनुभाव्य 'सैषा वटबीजसामान्यवदनेकवटशक्तिस्तद्यथा वटबीजसामान्यमेकमनेकान्स्वाऽव्यतिरिक्तान्वटान्स्वबीजानुत्पाद्य तत्र तत्र पूर्णं सन्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवती'ति कथनान्मायिकत्वमेव सर्वस्य जगत इति शङ्कनीयम् । तस्याऽन्तरासृष्टिपरत्वात् । 'मायया त्वन्यदिवे'त्युपक्रमेण 'तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपी'त्युपसंहारेण च तथा निश्चयात् । अत एव दृष्टान्तो व्याख्यानेन दार्ष्टान्तिके दर्शनमादायैव योजितो नतु जननमादाय । वटबीजं तूत्पाद्य वटेषु पूर्णं सन्तिष्ठति । एषा तूत्पादने तत्र स्थाने चासमर्थत्वात्तादृशानि क्षेत्राणि दर्शयित्वा स्वयं मायाविद्यारूपाऽऽदर्शद्वयस्थानीया सती जीवेशावाभासेन करोतीति । तथा च यस्मादियमाभासाधारभूता ब्रह्मादित्रिरूपवती तस्मादाभास्यस्यात्मन एव त्रैविध्यम् । आभासाभास्ययोः समानाकारत्वनियमात् । यस्माच्चेयं दर्शयित्र्येव न तु जनयित्री । दर्शनं च जननं विनाऽनुपपन्नं तस्मादात्मन एव सर्वत्र योनित्वमिति । तत एव जातमिति सिध्यतीत्यनेनापि न जगन्मात्रमायिकत्वसिद्धिः । अत एवोपक्रमेप्यन्यदिवेत्युक्तं न त्वन्यदेवेति । नापि मिथ्यैवेति ।

एवं चान्तरासृष्टिं प्रति विवर्तोपादानत्वमात्मसृष्टिं प्रति परिणाम्युपादानत्वं ब्रह्मण इति निश्चयः । इममर्थमाचार्योऽप्यात्मकृतेः

परिणामात्' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'योनिश्च हि गीयत' इत्यादि सूत्रयन्ननुमेने । अतो ये मायिकमेव प्रपञ्चमाहुस्ते प्रतारका एव । अज्ञा वा । यो यादृशं पश्यति स तादृशं वदति । 'मायेत्यसुरा' इत्यसुराणां मायोपासकत्वात्तदनुगृहीतास्ते यथा पश्यन्ति तथा वदन्तीति तेषामपि न दोषः ।

ननु वेदान्तानां ब्रह्मप्रतिपत्त्यर्थं प्रवृत्तत्वेन सृष्टौ तात्पर्याऽभावात्तत्सत्यत्वं न वेदान्तैः सिध्यतीति युक्तिसिद्धं मिथ्यात्वमेवाङ्गीक्रियतामिति चेत् । न । सत्यस्यानुकार्यस्य तादृग्रूपस्याऽभावे खपुष्पादिवन्मायिकस्याप्यसिद्धेस्तत्सिद्ध्यर्थं तादृग्रूपस्य प्रपञ्चान्तरस्य तत्पूर्वसिद्धस्यावश्याङ्गीकार्यत्वात् । सिद्धे चैवं तस्मिन्प्रतिज्ञादृष्टान्तानुपरोधबलेन ब्रह्मप्रकृतिकस्यैव सिद्धेस्तात्पर्याभावं वदतोऽपि श्रुत्यैव तत्सिद्धेरप्रत्यूहत्वात् । उपपादितं चैतदधस्तात् ।

एतेनैवाध्यारोपापवादपक्षोऽपि प्रत्युक्तः । वास्तविकाभावेऽध्यारोपस्याप्यभावेन प्रतीत्यभावापातेऽध्यारोपस्य दूरापेतत्वात् ।

न च ब्रह्मणो निराकारत्वान्नेदं साधीय इति वाच्यम् । उभयलिङ्गाधिकरणसिद्धस्य विरुद्धधर्माश्रयत्वस्य पूर्ववाद एव व्युत्पादितत्वात् । एतेनैवाऽकर्तृत्वादेरपि दत्तोत्तरत्वात् । विकृतत्वस्यापि श्रौतत्वादेव परिहारात् । न च द्वैतापत्तिः । तदनन्यत्वादेव तन्निरासात् । प्रतीयमानद्वैतस्य श्रुत्याऽवास्तविकत्वबोधनाच्च । अतो 'बहुस्यां प्रजायेयेती'च्छया ब्रह्मैव स्वभावतो लीलयोच्चनीचप्रपञ्चाकारं भवतीति वास्तविकभेदभानेऽपि नाऽद्वैतहानिः । अत आगन्तुकत्वेऽपि घृतद्रवत्ववद्वस्तुधर्मत्वेन धर्मधर्मिणोश्चाऽभेदेनाऽदोषात्पू-

वोक्तं निर्व्यलीकम् । इच्छा च सर्वभवनसमर्थं ब्रह्मैव धर्मरूपेण भवत्तेन रूपेणापि भवतीति स्वरूपाऽनतिरिक्ता ।

न च सा सर्वदा भवतीति शङ्कनीयम् । आपादकहेतुभूतस्य कालस्याऽभावात् । तस्य भगवच्चेष्टारूपत्वेन पाश्चात्यत्वात् । **'योऽयं कालस्तस्य ते व्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वमि'**ति वाक्यात् । **'ऐक्षताऽकामयते'**त्यादिश्रौतप्रयोगानुरोधात्सहभवन-पक्षेऽपि कालस्य सर्वानियामकत्वादिच्छामपि नियमयिष्यतीति न सर्वदा भविष्यति ।

तत्रैषा प्रक्रिया । भगवान्सच्चिदानन्दरूपो धर्मरूपेण भवन् सदंशशक्तिं क्रियां चिदंशशक्तिं व्यामोहिकां मायामानन्दरूपस्य जगत्कारणभूतां मायां[1] च भिनत्ति । तेन धर्माः सच्चिदानन्दाः स्वयंभिद्यमानाः स्वस्वाश्रयं भिन्दन्ति । तदा भगवान्सर्वतः पाणिपादान्तो भवति । साकारताञ्चाऽऽपद्यते । एवं भिन्नोऽपीच्छया मिलितः सन्न भिन्न इवाखण्डो भवति । तदपेक्षया कार्यरूपस्याऽल्पत्वात् । **'पूर्णमदः पूर्णमिदमि'**त्यादावयमेव गीयते । अत एव सद्रूपस्य कार्येषु प्रत्येकपर्यवसायित्वम् । प्रजायेयेतीच्छयोत्कर्षापकर्षरूपेण जातत्वादानन्द उत्कृष्टः । अत एवान्तर्यामिषु भगवदाकारत्वं नेतरेषु । तदेतरौ तं सेवमानौ भवतः । तदा सच्चितोर्धर्मौ ज्ञानक्रिये आनन्दधर्मरूपेण तिष्ठतः । तदाऽऽनन्दो ज्ञानक्रियाशक्तिमान् भवति । तदा चिदंशशक्तिर्ज्ञानधर्मस्याऽऽनन्दे गतत्वाच्चिदंशं मोहयति । तदा स प्राणधारणप्रयत्नं कुर्वञ्जीवो भवति । सदंशस्तु क्रियाशक्तेर्गतत्वाज्जडत्वमापद्यते । ततो मूलभूतक्रियांशाभिः क्रियाभिर्यथायथं

---

१—सर्वभवनसामर्थ्यरूपा ।

महदादिक्रमेण वाऽन्येन श्रौतेन क्रमेण वाभिव्यज्यते । तस्यास्तत्कृतधर्मस्य वा तिरोभवतीत्यादिरूपा सुबोधिनीतोऽवगन्तव्या ।

सेयं प्रक्रिया सर्वश्रुतिवाक्यानुरोधेन श्रुतार्थापत्तिसिद्धा सर्वत्रैवोपयुज्यते । अन्यथाप्रक्रिया तु वाक्यानि बाधते । वाक्यानि तु गौरवभयात्सुबोधिनीविवृतौ लिखितत्वाच्चात्र न लिख्यन्ते । तथा क्रमभेदाश्च । तस्माद्ब्रह्मणः सकाशाज्जगदुत्पत्तौ न कोऽपि दोषः ।

वस्तुतस्तूभयलिङ्गाधिकरणरीत्या ब्रह्मणः स्वत एव सर्वाकारत्वस्य पूर्ववाद एव साधितत्वात्स्वतन्त्रं ब्रह्म क्रीडद्यदायदा यद्यद्रूपं बुद्धेः शब्दस्येन्द्रियाणां वा गोचरीकरोति तदा तदा तत्तदाऽऽविर्भूतं लोकशास्त्रादिव्यवहारविषयं भवति । यच्च यतस्तिरोभावयति तन्न भवतीति मुख्यसिद्धान्ते परिणामोऽपि न विचारविषयः । युक्त्यगोचरत्वस्य भूषणत्वात् । अत एव **'नायमात्मेत्या'**दि श्रुतिभिर्भगवत्सामर्थ्येनैव भगवान्प्रकाशो नेतरसामर्थ्येनेति न कोपि चोद्यावसरः । अत एव वृत्तसूक्ते **'इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन् सो अंग वेद यदि वा न वेदे'**त्युक्तम् । तथा च यद्यादधे तदोक्तरीत्या ततो जाता । यदि च नादधे तदा स्वयमेव तथाविर्भूत इत्यर्थः । न च सूक्तारम्भे तमस उक्तत्वान्मायिकत्वं शक्यशङ्कम् । तत्रापि **'तम आसीत्तमसा गूढमि'**ति कर्मकर्तृव्यपदेशात्सदेवेति सावधारणश्रुत्यनुरोधात्पूर्ववादे ब्रह्मणः सर्वशब्दवाच्यत्वव्यवस्थापनेन शङ्कानिरासाच्च । तस्मात्पूर्वोक्तमविवादमिति दिक् ।

एवं च प्रपञ्चः सामान्यतश्चतुर्धा सिद्धः । ब्रह्मणः स्वत एव सर्वाकारत्वाद्ब्रह्मरूपो गुणातीत एकः । केनापि श्रौतेन पौराणा-

दिना वा क्रमेणेच्छया मुख्यशक्त्या वा निर्गमितोऽनेकविधो घृतद्रवत्ववद्ब्रह्मधर्मात्मकविकारशाली ब्रह्मपरिणामो द्वितीयः । तत्र श्रौतो घटितपात्रवदिच्छया कृतः । पौराणस्तु मायां प्रतिकृतिरूपां संचायिकां विधाय तन्मध्ये पूरितपात्रवत्कृतो मायोपदिग्ध इति तयोर्भेदः । एतदुपदेहभूतो मायोपादानकः प्राकृतविकारशालिव्यावहारिको ब्रह्मविवर्तात्मा तृतीयः । तथा अविद्याया निद्राचिन्तादिभेदेनानेकत्वात्तन्निमित्तकस्तदुपादानको वा शुक्तिरजतस्वाप्निकादिरूपोऽन्तःकरणविकारात्मा व्यवहारदुष्टेन्द्रियादिगोचरस्तुरीयः ।

एतौ द्वावपि मायिकौ प्रपञ्चौ विषयधर्मत्वाद्विषयताशब्देनाऽत्र परिभाष्येते । मायिकत्वेऽपि विषयनिष्ठतया भासमानत्वात् । यथा सदृशधर्माभिन्ननिष्ठा अपि तद्वत्त्वेनोच्यन्ते । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति तद्वत् । अत्राऽऽद्या विषयता व्यामोहकमायाकार्यत्वान्मायानिष्ठापि मायया विषयोपदेहाद्विषये प्रतीयत इति मायावादिनो विषयं मायिकमित्यभिमन्यन्ते । बुधास्तु निर्विचिकित्से शास्त्रज्ञाने जाते उपदेहात्मिकां विषयतां घटभ्रमवत्पश्यन्तोऽपि तां न्यक्कृत्य विषयं ब्रह्मात्मकं वदन्ति । जातसाक्षात्काराः शुकादितुल्यास्तु यथाऽस्मदादयः प्रतिबिम्बमेवमतिरिक्तामेव विषयतां पश्यंतीति तादृक्तादृगधिकारिषु तथा तथा वदन्ति । 'विश्वं वै ब्रह्मतन्मात्रमि'ति 'सर्वम्मायेति तर्केणे'ति च । भगवानपि 'यदिदं मनसा वाचा गृह्यतेऽन्यैरपीन्द्रियैः । अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमञ्जसे'ति 'यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च तद्धि मायामनोमय'मिति वदति शुक्तिरजतादिसंग्रहाय ।

शुक्तिरजतादिकञ्चान्तःकरणादिगतमेव । जीवव्यामोहिकया तया तदन्तःकरणबहिःकरणयोरेव तदुत्पादनात् । विषयदेशे प्रतीतिस्तु संस्कारादिप्राबल्यतया व्यत्यासात् । न च व्यत्यासो न शक्यवचन इति शङ्क्यम् । भ्रमदृष्ट्या घटादिदर्शने तथानिश्चयात् । चक्षुरादिनिष्ठाया एव भ्रमेर्घटादौ भानात् । अन्यथा सर्वेषामपि तथा भानप्रसंगात् । न चेन्द्रजालादौ सर्वेषां तथा भानाद्विषयदेश एव सा विषयतोत्पद्यत इति व्यत्यासो न युक्तिसह इति वाच्यम् । तत्रापि सामाजिकचक्षुःष्वेव तदुत्पत्तेः । अन्यथा दूरादागतस्याऽपि तददर्शनाभावप्रसक्तेः । **'जित्वा बलान्निबद्धाक्षान्नटो हरति तद्धनमि'**ति वाक्यात्तथा प्रसिद्धेश्चेति न कोऽपि क्वापि शं[1]कांशः ।

नन्वस्त्वेवं तथापि नाशोत्पत्तिभेदेष्टानिष्टशुद्धाशुद्धादिप्रतीतीनां जायमानत्वाद्वादिप्रतिवादिनोः प्रापञ्चिकप्रतीतावापाततो न कोपि विशेष इति चेत् । किमेतावता । वस्तुतस्त्वस्ति विशेषः । यथा चतुरतरतक्षनिर्मितो यन्त्रेण संचरन्नपि काष्ठकेशरी भुजंगमो वा ज्ञाततत्वस्य न भयादिकं जनयितुं शक्नोति । प्रत्युत कुतुकम् । निर्मातृमाहात्म्यमेव च ख्यापयति । तथा प्रकृतप्रतीतिरपि विस्मयमुत्पादयन्ती भगवतोऽप्यलौकिकं माहात्म्यमेव व्याचष्टे । नत्वितरवत्संसारयतीति । एतेन भगवन्मूर्तिदर्शनादौ भक्ताभक्तादीनां विषयविषयतयोरेव यथायथं बोध इति न कोऽपि क्वापि शंकांश इति दिक्॥

**इति श्रीवल्लभाचार्यचरणाम्बुजचेतसा ।**
**निबन्धाद्युक्तमार्गेण सृष्टेर्भेदो निरूपितः ॥**

**इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीवल्लभनन्दनचरणैकतान-**
**श्रीपीताम्बरतनुजपुरुषोत्तमविरचितः पञ्चमः**
**सृष्टिभेदवादः सम्पूर्णतामगात् ॥**

---

१ शंकालेश इति खपुस्तकम् ।

॥ श्रीः ॥

॥ श्रीकृष्णाय नमः ॥

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## गोस्वामिश्रीमत्पुरुषोत्तमविरचितः
## ख्यातिवादः ।

नवमो मणिः ।

यन्मायया बहिःक्षिप्ता ख्यायते बुद्धिरर्थवत् ।
निवर्तते च यद्बोधात्तं नमामि जनार्दनम् ॥ १ ॥

ननु किमिदमपूर्वमुच्यते बुद्धेः ख्यानम् ? । तस्यास्त्रिक्षणावस्थायित्वनियमेनाऽमूर्त्तत्वेन च बहिःक्षेपनिवृत्त्योरशक्यवचनत्वेन तत्ख्यानस्य सुतरां तथात्वात् । न च सा स्थिरेति वाच्यम् । मानाऽभावात् । न च ज्ञानधाराया अपि दर्शनात्तस्याः स्थैर्यं शङ्कनीयम् । उपेक्षाबुद्ध्यादौ व्यभिचारात् । धारावाहिकस्थले सजातीयज्ञानान्तरोदयेन तथा बुद्धेः सूपपादत्वात् । अन्यथा शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वनियमभङ्गप्रसङ्गात् । न चाऽनन्तबुद्धितत्प्रागभावध्वंसादिकल्पनागौरवमप्रामाणिकमिति वाच्यम् । धारावाहिकव्यति-

---

१ द्वितीयस्कंधनवमाध्यायीय'तेऽर्थं प्रतीयेते'ति श्लोकसुबोधिनीस्वारस्यान्माययेत्यस्य समानीतस्वविषयेत्यर्थः । २ अर्थाऽभावेप्यर्थवद्भासत इत्यर्थः । ३ एतेन सिद्धान्तेऽख्यातिरप्यङ्गीकृतेतिबोध्यम् । तत्प्रकारस्त्वग्रे स्फुटीभविष्यति । ४ जनां मायामर्दयतीति व्युत्पत्तेः । ५ अशक्यवचनत्वादित्यर्थः ।

रिक्तस्थले तथात्वस्य निश्चयात् । अन्यथा सर्वत्र ज्ञानधाराऽऽपत्तेः । मायाया आमोक्षमनुवर्तमानत्वेन स्थिरत्वपक्षे तवाऽपि सर्वदा भ्रमापत्तेः । अतो बुद्धिस्थैर्यमायाकृतव्यत्यासरसर्वदातदभावकारणादिकल्पनाऽपेक्षया युक्त्यन्तराणामेव ज्यायस्त्वात्ख्यात्यन्तरमेवाऽऽदरणीयम्[1] । ननु कल्पनागौरवग्रस्ता विक्षिप्तबुद्धिरूपाऽन्यख्यातिरिति प्राप्ते । उच्यते ।

यथार्थताऽन्यथाख्यातौ मुष्टतत्तास्मृतावपि ।
स्मरणानुव्यवसितिः स्याद्ग्रहस्मरणात्मके ॥ १ ॥
ज्ञानद्वये चैकज्ञानतुल्यत्वस्य विरोधनम् ।
संस्कारादेर्बलिष्ठत्वान्नापेक्षा रजतस्य च ॥ २ ॥
अनिर्वाच्यस्यात एव नासत्ख्यातिः सदादृता ।
सर्वदा तत्प्रसङ्गाच्च सदसत्ख्यातिरर्थतः ॥ ३ ॥
[2]अतएव चाभिनवाऽन्यथाख्यातिर्न युज्यते ।
बुद्धिस्तत्त्वान्तरं तेन नात्रात्मख्यातिसंशयः ॥ ४ ॥
कार्यः सर्वजनीनत्वात्तत आद्रियतामियम् ।

आत्मा हि निर्विषयज्ञानात्मकः । बुद्धिस्तु विशिष्टज्ञानाकारा तत्त्वान्तरम् । 'बुद्धिर्विज्ञानरूपिणी'ति वाक्यात् । अतो नाऽत्मख्यातिवादापत्तिः । सा च न ज्ञानम् । यो बुद्धिमांस्तस्य पदार्थज्ञानं भवति । सुबुद्धिरयं पदार्थान् जानातीति ज्ञानकरणत्वेन लोके व्यपदेशात् । बुद्ध्यभावे बालस्य सम्यक्पदार्थज्ञानाऽभावदर्शनाच्च । किन्तु ज्ञानजनिका यस्य शक्तिस्तादृशोऽहंकारभेदः सा । 'ज्ञान-

---

१ अन्यथाख्यातिरेवाऽऽदरणीयेत्यर्थः । २ संस्कारादेर्बलिष्ठत्वादेव ।

शक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजंस' इति द्वितीयस्कन्धेऽहंकारभेदेषु गणनात् । अतएव च स्थिरा । तेन मूर्तायास्तद्वृत्तेर्मायया बहिःक्षेपादिकं न दुर्घटम् । इदमेव च युक्तम् । त्रिक्षणावस्थायित्वनियममात्रैकशरणानां तज्ज्ञानतत्प्रागभावध्वंसकल्पनाऽपेक्षया ज्ञानस्थैर्यकल्पनस्य, विरुद्धवृत्तितिरोभाव्यत्वकल्पनस्यैव च लघुत्वात् । उपेक्षाबुद्ध्यादौ शीघ्रं विरुद्धवृत्त्युदयेन पूर्वज्ञानतिरोभावेऽप्यन्यत्र तिरोभावाऽदर्शनेन त्रिक्षणावस्थायित्वनियमस्याऽप्रयोजकत्वाच्च । न च मूर्तत्वाऽभावः । अर्थदर्शनोत्तरं नेत्रनिमीलनेन तदर्थाकारस्याऽनुभवेनाऽविवादत्वात् ।

अतः शुक्तिरजतादिस्थले मायया बहिःक्षिप्तबुद्धिवृत्तिरूपं ज्ञानमेवाऽर्थाकारेण ख्यायत इति मन्तव्यम् । न चेदानीं मायायाः सर्वदा सत्वात्सर्वदा भ्रमापत्तिः । संस्कारप्राबल्यस्याऽपि सहकारित्वात् । अतिरिक्तसंस्काराऽनङ्गीकारपक्षे तूद्बोधकैरेवान्तःशयानाया बुद्धिवृत्तेरुद्बोध इति तदा सदृशाऽदृष्टचिन्तादिरूपोद्बोधकसामग्रीप्राबल्यस्यैव सहकारित्वात् । अतः प्रबलसंस्कारेण प्रबलोद्बोधकसामग्र्या वा सहकृता माया बुद्धिं बहिः क्षिपति, नेतरथेति, न सर्वदा तदापत्तिरिति । आत्मनः ख्यानं त्वसङ्गतमेव । तस्याऽहंवित्तिवेद्यत्वाद्गौरोऽहमितिवदहं रजतमिति प्रतीत्यापत्तेः । तदभावे आत्मनः ख्यान एव मानाऽभावाच्च । तस्मादन्यख्यातिरेव सर्वजनीना ।

अत्र नैयायिकाः । मायाकृतबुद्धिव्यत्यासकल्पनापेक्षया चाकचक्याऽऽद्युद्बुद्धसंस्कारसहकृतेन दोषोपहतेन्द्रियेण संप्रयुक्तं शुक्त्यादिकमेव रजताद्यात्मना गृह्यत इति कल्पनस्य लघुत्वात्संप्रयुक्त-

१ राजसाहंकारविशेष इत्यर्थः ।

स्याऽन्यथाभानेनाऽन्यथाख्यातिरेवाऽऽदरणीयेत्याहुः । तन्न । अन्यथात्वे यथार्थतापत्तेः । तथाहि । किमिदमन्यथात्वं नाम आरम्भो विपरिणामस्तादात्म्यविशेषो वा? । सोपि विशिष्टस्य वा, विशेषणस्य वा, विशेष्यस्य वेति? । तत्र नाऽऽद्याः । संप्रयुक्तस्य शुक्त्यादेर्मृदो घटस्येव रजतस्यारम्भे दुग्धस्य दधिरूपेणेव रजताद्याकारेण परिणामे वा लोहादीनां स्पर्शमणिस्पर्शे सुवर्णाद्यात्मकत्ववद्रजतात्मकत्वे वा घटदधिवत्सुवर्णवच्चार्थानतिक्रमाद्रजतमेव स्यात् । तज्ज्ञानस्य च यथार्थत्वं स्यात् । तथा सति भ्रम एवोच्छिद्येत । अर्थक्रियाऽपि तेन सिद्ध्येत् । नाऽन्ये । विशेषणस्याऽऽरम्भे परिणामे च शुक्तित्वस्य द्रव्यरूपतापत्तिर्जातिताहानिश्चेत्यधिकदूषणद्वयापत्तेः । तादात्म्यपक्षे च तादात्म्यकारणाऽनिर्वाच्यतापत्तेरेवाधिकत्वात् । नेतरे । विशेष्यस्यैव पूर्वोक्तरीतिकाऽन्यथात्वपक्षेऽपि दग्धपटन्यायेन यथार्थत्वापत्तेरेव दूषणत्वात् । विशेषदर्शनोत्तरमपि दुष्टरजतप्रतीत्यापत्तेश्च ।

अथाऽन्यत्र सतस्तत्रालब्धसत्ताकत्वेपि प्रकारीभावोऽन्यथात्वमित्युच्यत इति चेत् । न । तत्राऽलब्धसत्ताकेन तेन लब्धसत्ताकशुक्तित्वादितिरस्कारस्याऽशक्यवचनत्वात् ।[1] अतिप्रसङ्गात् । अर्थस्मृत्योपनयोत्तरं लब्[2]धसत्ताकस्येति विशिष्यत इति चेत् । न । अन्यतरेणाऽन्यतरतिरस्कारात्पुरुषभेदेन तत्र युगपद्भ्रमप्रमानुपपत्तेः ।

अतिरस्कारे तूभयोर्दण्डकुण्डलवानितिवदुभयशबलज्ञानापत्तेः । अथ गुणदोषयो[3]स्तत्र नियामकत्वमिति नैवं ज्ञानमिति चेत् । न ।

---

१ अलब्धसत्ताकेन पटत्वादिना घटत्वतिरस्काराऽऽपत्त्या पटत्वप्रकारकं ज्ञानं स्यात् । २ तथा चाऽन्यत्र सतस्तत्रार्थस्मृत्योपनयोत्तरं लब्धसत्ताकस्य प्रकारीभावोऽन्यथात्वमिति क्रियते चेदित्यर्थः । ३ भ्रमप्रमयोरित्यर्थः ।

गुणदोषयोर्विषयनिष्ठत्वे तयोरुभयं प्रति साधारणत्वेनोक्तदोषतादवस्थ्यापत्तेः। तयोस्तत्तत्करणनिष्ठत्वे चैकस्य रजतशकलयो रङ्गरजतभ्रमप्रमासमूहालम्बनाऽनुपपत्तेः। आत्मनिष्ठत्वेऽपि तदनुपपत्तेर्दुर्वारत्वान्न किंचिदेतत्।

अथेदं रजतमित्यत्र रजताऽभिन्नपुरोवर्तीतिप्रतीत्या रजतभेदाऽभाव एव प्रकारीभूय भासते स च [1]व्यापक इति न कोपि दोष[2] इति यदि विभाव्यते। तदपि न मञ्जुलम्। रजतभेदाऽभावस्याऽभावप्रतियोगिकाभावतया भावरूपप्रतियोग्यात्मकत्वेनाऽतिरिक्तपक्षेऽपि प्रतियोगिमात्रनिष्ठत्वेन प्रतियोगिव्यतिरिक्ते तस्य प्रकारीभवितु[3]मनर्हत्वात्तादृशाऽभावस्य व्यापकत्व एव मानाऽभावात्। प्रतियोगिनो रजतभेदस्य व्यापकत्वे तदभावस्यैवाऽसम्भवाच्च। अव्यापकत्वेऽपि प्रतियोगिमात्रव्यावृत्तत्वेन तदिते[4]रत्र सत्वात्प्रतियोग्यभावयोः सहानवस्थानविरोधस्य दुर्वारत्वात्। ग्रहिलतया सहस्थितिकल्पनापक्षेऽपि तत्र तस्य सत्तालाभकल्पनं, सहस्थितिकल्पनं, तेन च रजतभेदाभिभवकल्पनं, कालान्तरे च भेदेनाभिभवादिकल्पनमिति कल्पनाचतुष्टयगौरवस्य दुष्परिहरत्वात्प्रमाणविरहाच्च नेदमतिरम्यम्।

किंच। भेदाऽभावस्याऽतिरिक्तत्वपक्षे भेदाभावस्य योऽभावस्तद्भावो रजतभेदाऽभाव इति रजताऽभिन्नभिन्नभिन्नः पुरोवर्तीति प्रतीत्यापत्तिरप्यधिका ज्ञेया। ननु मास्तु विषयस्याऽन्यथात्वं तथापि

---

१ व्याप्यवृत्तिरित्यर्थः। २ अव्याप्यवृत्तित्वप्रयुक्तभ्रमप्रमासमूहालम्बनात्मक इत्यर्थः। ३ रजतभेदाऽभावस्य रजतात्मकत्वे रजतभेदप्रकारत्वं रजताऽतिरिक्तत्वे घटभेदाऽभावस्येव रजतप्रकारत्वं स्यान्न तु पुरोवर्तिप्रकारत्वेन भानमित्यर्थः। ४ शुक्त्यादावित्यर्थः।

रजताकारग्रस्तं ज्ञानं शुक्तिमालम्बत इत्याकारके ज्ञानस्याऽन्यथात्वपक्षे किं बाधकमिति चेत् । न । तादृशज्ञानस्य शुक्त्यालम्बकत्वात्तत्र शुक्त्या स्वाकारसमर्पणे 'रजतमहमनुभवामी'त्यनुव्यवसायो न स्यात् । शुक्तिं रजतत्वेन जानामीति च स्यात् । असमर्पणे तु शुक्त्यालंबन एव प्रमाणविरहः । विरुद्धाऽनुव्यवसायादिति । अथ रजतज्ञानं स्वप्रयुक्तव्यवहारविषयां शुक्तिं करोतीदमेवाऽलंबकत्वमिति चेत् । न । यत्र रजतज्ञानोत्तरं संघ एव बाधो विषयान्तरज्ञानं वा तदा शुक्तेस्तत्प्रयुक्तव्यवहाराऽविषयत्वाज्ज्ञानस्य तदनालम्बकत्वे रजताकारग्रस्तस्यापि तस्य प्रमात्वापत्तेः । न चेष्टापत्तिः । संघातात्मज्ञानस्याऽपि प्रमात्वापत्तेः । आत्मनः संघातात्मज्ञानप्रयुक्तव्यवहाराऽविषयत्वात्संघातात्मज्ञानस्य तदनालम्बकत्वेन संघातात्माकारग्रस्तताऽनपायात् । न चेदानीं तस्याऽप्यस्तु प्रामाण्यमिति वाच्यम् । तथा सति समर्थप्रवृत्तेः पूर्वं सर्वत्रैवाऽप्रामाण्याऽग्रहेणोक्ततुल्यत्वाद्भ्रमोच्छोदापत्तेः ।

यदपि सौरालोकतदभावाभ्यां कमलविकासमुकुलीभावाविव दोषतदभावाभ्यां रजतशुक्तिभावौ समर्थितौ । तदपि मतं प्रतिनियतसमकालिकविरुद्धप्रतीत्योर्दर्शनादेव ग्रन्थान्तरे परास्तमित्यन्यथाख्यातिवाद एवाऽसाधुरिति दिक् ।

ननु पूर्वोत्पन्ने प्रमारूपे रजतादिप्रत्यक्षे देशकालादीनामपि विशेषणत्वेन भानाद्बहिःक्षिप्तेऽपि तस्मिंस्तद्विशिष्टमेव रजतं भासतामिति चेत् । न । संस्कारादेः शब्दस्य च पदार्थमात्राऽपेक्षत्वेन तद्वैशिष्ट्यस्याऽनियामकत्वात् । स्मृत्युपनीतं संस्कारोपनीतं वा रजतं भासत इति वदतः प्रतिवादिनोऽपि पूर्वोक्तदूषणोद्धाराय सादृश्या-

द्युद्बुद्धः संस्कारः पदार्थमात्रमपेक्ष्यैव स्मृतिं जनयत्युपनयति वा तं, नतु देशादिवैशिष्ट्यमप्यपेक्षत इत्यस्याऽऽवश्यवाच्यत्वेन समाधेः समत्वाच्च। अत्र शब्दग्रहणं तु श्रुतपदार्थविषयकस्यापि भ्रमस्य संग्रहायेति ज्ञेयमतो न कोऽपि दोषः।

भाट्टास्तु भ्रमस्थलेऽपि रजतादिज्ञानस्य संस्कारमन्तरेणाऽसम्भवात्तज्ज्ञानं स्मृतिरूपमेवाङ्गीकार्यम्। न च तत्तास्फुरणाऽऽपत्तिः। कर्तृगतदोषेण तत्प्रमोषात्। दोषाऽभावे तु रजतसादृश्यस्फूर्तिः शुक्तिस्फूर्तिर्वा स्यात्। दोषाश्च क्वचिद्रागादयः। क्वचित्प्रबलालोकादिना विवेकाऽसामर्थ्यम्। क्वचिदन्यचित्ततेत्येवमादयोऽननुगतास्तथा तथादर्शनादुन्नेयाः। तस्मात्प्रमुष्टतत्ताका स्मृतिरेवाङ्गीकार्येत्यख्यातिमाहुः। तन्न। 'रजतमहमनुभवामी'त्यनुव्यवसायबाधापत्तेः। स्मरामीत्यनुव्यवसायापत्तेश्च।

प्राभाकरास्तु—मास्तु केवला स्मृतिस्तथा, किन्तु ग्रहणस्मरणात्मकं ज्ञानद्वयमेवाऽत्राऽख्यातिरूपमङ्गीकार्यम्। स्मृतिप्रमाणभेदेन ज्ञानस्य द्वैराश्यात्। न चाऽनुव्यवसायद्वयापत्तिः। स्मरणाऽभिमानस्य दोषप्रमुषितत्वात्। अतोऽविविक्तज्ञानद्वयाऽङ्गीकारेण न कोऽपि दोष इत्याहुः। तन्न। एकज्ञानतुल्यत्वेन ज्ञानद्वयस्य वक्तुमशक्यत्वात्। न च न तौल्यमिति वाच्यम्। यद्यगृहीताऽसंसर्गकं ज्ञानद्वयं स्यात्। एकज्ञानतुल्यता न स्यात्। यदि सा न स्याद्व्यवसायाऽनुव्यवसाययोर्नोपलभ्येतेति, तर्केण तन्मूलभूतव्यवसायाऽनुव्यवसायाभ्यां चैकज्ञानतुल्यत्वनिश्चयात्। किञ्च, ज्ञानद्वैराश्याऽग्रहेणाऽत्र ज्ञानद्वयाङ्गीकारे सर्वत्र विशिष्टज्ञानोच्छेदापत्तिः। घटोऽयमिति प्रमायामप्य-

गृहीताऽसंसर्गकवद्गृहीतज्ञानद्वयस्य शक्यवचनत्वात् । द्वैराश्ये मूलस्य चिन्त्यत्वाच्च ।

मायावादिनस्तु—मास्त्वख्यातिः । अनिर्वचनीयख्यातिरेवाऽङ्गीकार्या । न च रजताऽऽरम्भकाऽऽवयवानां शुक्तावभावेनाऽऽरम्भाऽनुपपत्त्याऽनिर्वाच्यमपि रजतं कथं स्वीकर्तुं शक्यमिति वाच्यम् । विषयचैतन्यनिष्ठाऽविद्ययैव तदारम्भोपपत्तेः ।

तथाहि । प्रथमं तावद्दोषसहकृतेनेन्द्रियेण पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचक्याकारा चान्तःकरणवृत्तिरुत्पाद्यते । तस्यां च वृत्ताविदमवच्छिन्नं चैतन्यं प्रतिबिम्बते । तच्चैतन्यं सुषिर[1]द्वारनिर्गतकुल्या[2]प्रवाहवत्केदारस्थं वृत्तचतुष्कोणाद्याकारभूभागभरितमहासारसलिलवज्जाताऽस्ति चक्षुर्द्वारनिर्गताऽवयवसंयुक्तघटाद्याकारकतैजसान्तःकरणवृत्तिः । तस्यामुक्तरीत्या निर्गमनेन प्रमातृवृत्तिविषयचैतन्याऽभिन्नं भवति । तच्च विषयचैतन्यं साविद्यमिति विषयचैतन्यनिष्ठा याऽविद्या सा करणदोषेण सादृश्योद्बोधितसंस्कारेण च सहकृता । तद्ग्राहकवृत्त्याकारेणेति द्विधा विवर्तते । परिणमति वा । एवमारब्धं तच्चाविद्यकं रजतमविद्याधिष्ठाने विषयाऽवच्छिन्नचैतन्ये वर्तते । सर्वस्याऽपि कार्यस्य स्वोपादानाऽविद्याऽधिष्ठानाऽऽश्रितत्वनियमात् । एवं विषयचैतन्येऽध्यस्तमपि रजतं चैतन्यैक्यात्साक्षिण्यध्यस्तमिति तदेव ग्राह्यमित्येवं मिथ्याज्ञानोपपत्तौ कृतमन्यथाख्यात्येत्याहुः ।

तन्न । संस्कारेण स्मृतिवत्संस्कारप्राबल्येनोद्बोधकादिसामग्रीप्राबल्येन वा मिथ्याज्ञानस्याप्युपपत्तावप्रयोजकत्वाद्गुरुत्वाच्चाऽनिर्वचनीय-

---

१ छिद्रम् । 'सुषिरं विवरं बिल'मिति कोशात् । २ 'नहर' इति भाषा । कुल्याल्पा कृत्रिमा सरिदिति कोशात् ।

रजताङ्गीकारस्य व्यर्थत्वात् । न च संस्कारस्य बहिःपदार्थोपस्थापकत्वमप्रयोजकमिति वाच्यम् । स्वप्ने त्वयाऽपि तन्मात्रेणैव पदार्थोपस्थित्यङ्गीकारात् । न च तत्स्मरणमेवेति वाच्यम् । तथाऽनुव्यवसायाऽभावात् । स्वप्नसृष्टिश्रुतिविरोधाच्च । न च दोषं विनैकेनैव संस्कारेण कथं स्मृतिभ्रमयोरुपपत्तिरिति वाच्यम् । ऊष्मस्पर्शाऽप्राबल्यप्राबल्याभ्यां शीतनिवृत्तित्वग्दाहयोरिव संस्काराद्यप्राबल्यप्राबल्याभ्यां स्मृतिभ्रमयोरपि सुखेनोपपत्तेः । प्राबल्येनैव वाऽनुभवसामग्र्या तस्य तिरस्कारः । इदमेव वा[1]ऽप्राबल्यं ज्ञेयम् । अतएव नैयायिकानामेकेन स्नेहेन प्रकर्षाऽप्रकर्षवैशिष्ट्याद्वह्निनाशोद्दीपनयोरङ्गीकारोऽपि युज्यते । न चैवं दोषाऽनभ्युपगमे पीतभ्रमजनकसंस्कारोद्बोधकस्य शङ्खेऽभावात्पीतः शङ्ख इति भानाऽनुपपत्तिरिति वाच्यम् । बहिःकरणे कामलवदन्तःकरणे संस्कारादिप्राबल्यस्यैव तत्त्वात् । एतादृशभ्रमेषु बहिःकरणदोषाङ्गीकारस्तु घटपटादिप्रमोत्पत्त्या प्रत्यक्षविरुद्धत्वाच्च जघन्य एव । निर्गमेण चैतन्यत्रयाऽभेदाङ्गीकारोऽपि व्यापकाऽऽत्मवादमेवाऽऽत्मवादं च निरु[2]णद्धीति नेतरविद्वदादरभाजनं भवतीति दिक् । एवं संस्कारादिप्राबल्यादेवाऽसत्ख्यातिरप्यपास्तेति ज्ञेयम् ।

सांख्यास्तु सदस[3]त्ख्यातिरत्र । सत इदंत्वस्याऽसतो रजतत्वस्य च भानात् । अतएव चैकस्य बाधोऽन्यस्याऽबाध इत्याहुः । तन्न । असत्ख्यातस्याऽन्यथाख्यातावेव दूषितत्वात् । अभिनवाऽन्यथाख्या-

---

१ चाऽप्राबल्यमिति खपुस्तकम् । २ इदं यथा तथोपपादितं प्राणाधिकरणस्य 'तस्य च नित्यत्वा'दिति सूत्रस्य भाष्यप्रकाशे । ३ 'सदसत्ख्यातिर्बाध्यबाधाच्चे'ति सांख्यसूत्रात् ।

तिवादिनो माध्वास्तु भ्रमस्थलेऽत्यन्ताऽसत एव रजतादेः प्रतीतिमङ्गीकृत्य वल्मीके घटाऽऽरोपस्य शुक्तौ रजतारोपस्य च नियमनायाऽनुभूयमानचाकचक्यादेरारोप्यनिष्ठत्वाऽभावेऽप्यारोप्यरजतसादृश्यस्याऽधिष्ठानाऽसत्वेन शुक्तौ रजताऽऽरोपो वल्मीके घटाऽऽरोपो नान्यस्येत्येवं नियममाहुः। तन्न। अत्यन्ताऽसतः प्रतीतेरसङ्गतत्वात्। तादृशस्य चाक्षुषापत्तीतिगोचरतायाः क्वाऽप्यसिद्धत्वात्।

अथाऽत्राऽत्यन्ताऽसत इति विशेष्यत इति चेत्। न। सादृश्यस्योभयप्रतियोगिकत्वनियमेन तत्सादृश्यस्याऽत्रैवैतत्सादृश्यस्य तत्राऽपि वक्तुं शक्यत्वात्तस्याऽत्यन्ताऽसत्येन सादृश्यस्याऽऽधाराऽभावेनाऽसिद्ध्याऽत्रापि नियामकस्य पूर्वोक्तरीतिकाऽसत्सादृश्यस्य वक्तुमशक्यत्वादभिमताऽसिद्धेः। तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यत्वेनाऽसद्ग्राहृधर्माणामसत्त्वादेव तत्सजातीयत्वस्याऽशक्यवचनत्वात्। यदि च तेनाऽयं सदृश इति ज्ञानजनकीभूतज्ञानोल्लिख्यमानो यो रजतादिशब्दः तद्विषयत्वमेवात्र सादृश्यप्रतियोगित्वमिति विभाव्यते। तदापि तत्सादृश्यप्रतियोगित्वं शाब्दं सदृशज्ञानं नियमयिष्यति, नतु चाक्षुषं सदृशज्ञानम्। नापि भ्रमम्। अधिष्ठानाऽसन्निकर्षेऽपि रजतमिति शब्दप्रयोगमात्राद्रजतसदृशचाक्षुषरजतभ्रमयोः प्रसङ्गादिति न हृदयंगमम्। श्लेषाऽलङ्कारादौ चमत्काराऽनाधानप्रसङ्गादनुभवविरोधाच्चेति।

रामानुजाचार्यास्तु सर्वं ज्ञानं यथार्थमेव। त्रिवृत्करणश्रुतेः। 'त्र्यात्मकत्वात्तु भूयस्त्वादि'ति वैयाससूत्रात्तत्त्वसंघातबोधकपुराणाच्च सर्वस्य सर्वात्मकत्वनिश्चयात्। पूर्वतन्त्रेऽपि व्रीहिप्रतिनिधित्वेन नीवारग्रहणे व्रीह्यारम्भकावयवानामेव नीवारे सत्वाऽङ्गीकाराच्च।

अतः शुक्त्यादावपि रजतादेः सत्त्वात्तत्राऽपि ज्ञानं यथार्थमेवेत्यख्यातिरेवोचिता । शुक्तिरजतादिनिर्देशभेदस्तु भूयस्त्वादिहेतुक इत्युपपद्यते । तथा व्यवहारव्यवस्थाऽप्युपपद्यत एव । एवं सति करणदोषवशेन शुक्त्यंशाऽग्रहणे रजतम् । शुक्तिज्ञाने तन्निवृत्तिरित्याहुः ।

तदस्माकमभीष्टम् । परं कश्चिद्विशेषोऽस्ति । तथाहि । श्रुतिसूत्रयोस्तेजोबन्नविषयत्वेन पुराणानां च संघातविषयत्वेन कारणात्मकं तत्तत्सत्ताबोधकतया तैस्तत्र तत्र कार्यभूतरजतादिसत्तायाः प्रमातुमशक्यत्वात् । पूर्वतन्त्राऽनुरोधेन तदङ्गीकारेऽपि नीवारे व्रीहिकारणीभूताऽवयवसत्त्ववच्छुक्त्यादावपि रजतकारणीभूताऽवयवसत्तामात्रसिद्ध्या रजताद्यसिद्धेः । अथाऽस्तु **'सर्वं सर्वमयमि'**तिश्रुत्या सर्वत्र सर्वसत्ता । तथापि भ्रमस्थले शुक्त्यंशाऽग्रहणवद्विशेषदर्शनोत्तरं प्रमास्थले रजताऽग्रहणेऽपि कश्चिद्दोष एव नियामको वक्तव्यो, नतु गुणः । सन्निकृष्टस्य सतः पदार्थस्याऽग्रहणे सर्वमतेषु दोषस्यैव नियामकत्वात् । तथैव सर्वजनीनप्रसिद्धेश्च । एवं सति भ्रमप्रमयोरविशेषाऽऽपत्तिः । दोषजन्यत्वस्योभयत्र तुल्यत्वात् । न च रजताऽग्रहणेऽल्पत्वमेव नियामकमिति वाच्यम् । तस्य भ्रमदशायामपि तुल्यत्वात्तदाऽप्यग्रहणाऽपत्तेः ।

अतः सर्वत्र सर्वसत्त्वेऽपि भ्रमप्रमाभेदनिर्वाहाय प्रसिद्धाऽतिरिक्तस्य तिरोभाव एव सर्वथाऽभ्युपेयः । अन्यथा सर्वत्र सर्वप्रतीतेर्दुर्वारत्वाऽपत्तेः । स्वोपगतव्यवहारविभागभङ्गाऽऽपत्तेश्च । ततश्च शुक्त्यादौ रजतादिसत्त्वेऽपि तेषां तिरोहितत्वान्न प्रतीतिगोचरत्वसिद्धिः । अतस्तादृशस्थले रजतादिज्ञानं प्रत्यस्मदुपगतैव सामग्र्यवश्यमभ्युपेया । भवद्भिरपि सामग्र्यां दोषस्यैव निवेशितत्वात् । एवं

सति 'ऋतेऽर्थं यत्प्रतीयेते'ति भगवद्वाक्यस्य पूर्वोक्तश्रुतेश्चाऽप्यविरोधः। अन्यथाऽन्यतरविरोधस्य दुर्वारत्वाऽपत्तेः।

तस्माद्ये पूर्णज्ञानिनः पूर्णयोगिनो वा तेषां सर्वत्र सर्वप्रत्यक्षम्। 'अनागतमतीतं चे'त्यादि वाक्यात्। अतस्तेषां ज्ञानस्य यथार्थत्वात्तत्रोक्ताऽख्यातिरुचिता, न सर्वत्र। अन्येषां तु संस्कारप्राबल्येन मायया बुद्धिरेव बहिः क्षिप्यत इति रजतादिधर्माणामेव प्रतिभानमित्यन्यख्यातिरेवोचिता। अन्यपदस्य सदृशवाचकत्वेनाऽनुभूतसदृशधर्माणामेव ख्यानात्। तस्मादख्यात्यन्यख्याती विभागेन मन्तव्ये इति। अतः ख्यात्यन्तरेषु युक्तिशैथिल्यात्संप्रयुक्तादन्यख्यानस्य सर्वजनीनत्वाच्च पूर्वोक्तरूपाऽन्यख्यातिरेवाऽविद्वद्दशायां सुधीभिरादरणीयेति निष्कर्षः।

एवं सुबोधिनीप्रोक्तप्रकारस्याऽनुसारतः।
यथाबुद्धि मयाऽप्येष ख्यातिवादो निरूपितः॥ १॥

इति श्रीमद्वल्लभनन्दनचरणैकतानपीताम्बरतनुजपुरुषोत्तमविरचितः ख्यातिवादः सम्पूर्णतामगात्॥

---

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां

गोस्वामिश्रीमत्पुरुषोत्तमविरचितः

# अन्धकारवादः ।

## दशमो मणिः ।

दर्शय नाथ गुहायां तमोवृतायां स्वतः समागत्य ।
मुचकुंद इव शयाने मयि कृपयाऽनेहसाऽपि वपुः ॥ १ ॥

नन्विदमयुक्तम् । अभावरूपेण तमसा गुहावरणस्याऽसंभवदुक्तिकत्वात् । नच भावमुखप्रत्ययेन तस्य भावरूपत्वं शङ्कनीयम्? । तस्य भ्रमरूपत्वात् । तादृशप्रत्ययेनाऽपि तस्य सिद्ध्यङ्गीकारे मरुमरीचिकायां जलप्रत्ययेन जलमपि सिद्ध्येत । नच बाधाऽभावात्तस्य प्रमात्वमेवेति शङ्कनीयम्? । आकाशनैल्यवदप्रयोजकत्वात् ।

अत्र भेदाः । तमस्तावत्सामान्यविशेषसमवायेभ्योऽतिरिक्तम् । स्वाश्रयाऽविषयलौकिकप्रत्यक्षविषयत्वात् । वाय्वानीतचंपकाऽवयवसमवेतगंधादिवत् । कर्मणोऽप्यतिरिक्तम् । संयोगाद्यसमवायिकारणताऽभावात् । गुणेभ्योऽप्यतिरिक्तम् । द्रव्यासमवेतत्वात् । गगनादिवदित्यनुमानेन द्रव्याऽतिरिक्तपदार्थभेदसिद्धिः । नच गुणभेदहेतुः स्वरूपाऽसिद्ध इति शङ्क्यम्? । तमसो द्रव्यसमवेतत्वाऽसंभवात् ।

तमो न दिक्कालाऽत्ममनोव्योमवायुषु समवेतम् । लौकिकचाक्षुषविषयत्वात् । रूपादिवत् । न तेजःसमवेतम् । तेजोऽविषयकलौकिकप्रत्यक्षविषयत्वात् । पीतादिवत् । न भूजलसमवेतम् । आलोकाजन्यलौकिकचाक्षुषविषयत्वादित्याद्यनुमानैर्द्रव्यासमवेतत्वसाधनात् । नापि क्लृप्तद्रव्यान्तःपाती । पृथिव्यादिनवकविरुद्धधर्माध्यासात् । तथाहि । नाऽवनिः । गन्धहीनत्वात् । अशुक्लत्वाच्च नोदकम् । न तेजः । कृष्णरूपत्वात् । रूपवत्त्वाच्च नेतरदित्येवं पृथिव्यादिवैधर्म्ये रूपवत्त्वाद्द्रव्यान्तरमेव तमः । नन्विदं समवेतमसमवेतं वा? । नाऽऽद्यः । जन्यद्रव्यत्वावच्छिन्नं प्रति स्पर्शवत्त्वेन हेतुत्वात्तमसश्चाऽस्पर्शत्वात्तदवयवेऽपि स्पर्शाऽभावाऽनुमानस्य शक्यत्वात् । न द्वितीयः । समवेतस्वरूपद्रव्यस्याऽणुत्वनियमेनाऽप्रत्यक्षत्वाऽऽपत्तेरिति चेन्न । द्वितीयनियमे मानाभावात् । तमसोनित्यद्रव्यत्वाऽभ्युपगमे लाघवाच्च । नित्यद्रव्यस्यैव कल्पनालाघवात् । अन्यथा ध्वंसप्रागभावकल्पने गौरवप्रसंगात् । नचैवं दिवसेऽपि तच्चाक्षुषाऽऽपत्तिः? । तस्यालोकाभावव्यंग्यत्वात् । तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवाऽऽलोकस्य सहकारित्वकल्पनादित्याहुः ।

तदेकदेशिनस्तु, 'छाया चलती'ति प्रत्ययेन, क्रियावत्त्वा'न्नीलं तम' इति प्रत्ययेन, रूपवत्त्वा'त्परमपरं चेति' प्रत्ययेन, परत्वाऽपरत्ववत्त्वादनित्यमेव तमः । आलोकानपेक्षचक्षुर्ग्राह्यञ्च । तत्समवायिनश्च तमःपरमाणव एव । नच निःस्पर्शत्वं बाधकमुक्तमिति वाच्यम्? । उद्भूतरूपे धूमेऽनुद्भूतस्पर्शवदिहाऽप्यनुद्भूतस्पर्शस्य कल्पयितुं शक्यत्वात् । नच गोलकाऽवच्छेदेन धूमीयस्पर्शस्योपलंभान्न तत्स्पर्शस्य सर्वत्राऽनुद्भूतत्वं, तमःस्पर्शस्य तु क्वचिदपि नोपलम्भ इति तदनुद्भू-

तत्स्पर्शे मानाभाव इति शङ्क्यम् । धूमस्पर्शानुभवस्य भ्रमत्वात् । अन्यथा वज्रनिर्घोषादौ जायमाने हृदयगोलक आघाताऽनुभवाच्छब्देऽपि स्पर्शवत्ताऽऽपत्तिः । अतः पृथिवीत्वेनेवाऽऽरम्भकत्वेन स्पर्शवत्त्वेनाऽपि व्याप्तेरारम्भार्थमत्राऽनुद्भूतस्पर्शाङ्गीकारे न कोपि दोषः । नचाऽऽरम्भकत्वस्पर्शवत्त्वयोर्ज्ञप्तावन्योन्याश्रय इति वाच्यम् । 'चलती'ति प्रत्ययेनाऽन्धकारस्याऽनित्यत्वे निश्चिते तेन चारभ्यत्वे निश्चिते तेन तदवयवेष्वारम्भकत्वज्ञानात् ।

अन्ये त्वनुद्भूतस्पर्शे मानाऽभावात्प्रभाया अनारभ्यत्वाऽऽपत्तेर्जन्यद्रव्यत्वाऽवच्छिन्नं प्रति मूर्त्तत्वेन हेतुतामेतदर्थमाहुः । मनस आरम्भकत्वे चेष्टमभ्युपगच्छन्ति । अत एव पुराणेषु मानसी सृष्टिर्योगशास्त्रे च मनःकल्पितं विश्वं स्मर्यत इति प्रमाणयन्ति चेति नित्यं द्रव्यान्तरमेव तमः ।

काणादास्तु तन्न द्रव्यान्तरम् । तमोऽभिधानाऽतिरिक्तद्रव्याङ्गीकार आलोककार्यताऽवच्छेदककोटौ तमोभिन्नत्वनिवेशे तमश्चाक्षुषं प्रत्यालोकाऽभावस्य हेतुत्वे च गौरवात् । नच द्रव्यचाक्षुषं प्रत्यालोकत्वेनेति द्वयमतो न दोष इति वाच्यम् । वैजात्याऽवच्छिन्ननियामकस्याऽशक्यवचनत्वात् । तथाहि—न तावद्विजातीयक्रिया नियामिका । यत्रैकयैव चक्षुःक्रिययाऽऽलोकसंयुक्ते घटे तदयुक्ते च पटे चक्षुःसंयोगद्वयमुत्पाद्यते, तत्र क्रियावैजात्याऽभावादुभयोश्चाक्षुषत्वाऽऽपत्तेः । नच तदुत्तरदेशरूपविषयस्यैव नियामकत्वमिति वाच्यम् । यत्रालोकसहकृतचक्षुःसंयोगेन पूर्वं घटचाक्षुषमुत्पादितमनन्तरञ्चालोकनाशस्तत्र विषयनियतसंयोगवैजात्यसत्त्वात्तदापि घटचाक्षुषाऽऽपत्तेः । एवं भवन्मते तमश्चक्षुःसंयोगोत्तरं चाक्षुषे

जाते तत आलोकसमवधानेऽपि तमसो नित्यत्वेन तच्चक्षुःसंयोगसत्त्वात्तच्चाक्षुषाऽऽपत्तेश्च । न च तदानीं तादृशसंयोगनाशान्न दोष इति वाच्यम् । नाशे हेत्वभावात् । यत्तु तमोद्रव्यं न चाक्षुषमपि तु तामसेंद्रियान्तरग्राह्यम् । न चाऽधिष्ठानाऽभावे तत्कल्पनमशक्यमिति शङ्क्यम् । चक्षुःश्रवसामेकगोलके इन्द्रियवदत्रापि चक्षुरिन्द्रियगोलके तस्याऽपि शक्यकल्पनत्वात् । चक्षुरन्वयाऽनुविधानेन तथा निश्चयात् । न चैवं सत्याऽऽलोकसमवधानकालेऽपि तमसि तामसेंद्रियसंयोगसत्त्वेन तमसस्तामसप्रत्यक्षाऽऽपत्तिः ? । तमसोऽनित्यत्वाभ्युपगमेनाऽऽलोके तन्नाशे नाऽदोषादिति ।

**तन्न विचारसहम् ।** तमस्तामसत्वाऽवच्छिन्नं प्रति तामसेंद्रियसंयोगहेतुतायास्तथाविधेन्द्रियाऽन्तरस्य तमोद्रव्यस्य तत्प्रागभावध्वंसानाञ्च कल्पनेनाऽतिगौरवग्रासात् । क्रियावतो रूपवतो महतो द्रव्यस्याऽऽलोकजन्यचाक्षुषविषयत्वनियमेन तथाविधकल्पनाया अशक्यत्वाच्च । तस्मात्तमो न द्रव्यं, किंतूद्भूताऽनभिभूतरूपप्रकृष्टमहत्तेजःसामान्याऽभाव एव । तथा च सूत्रं **'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भावाऽभावस्तम'** इति । निष्पत्तिः सामान्यविशेषसमवायाभावः । उक्तविधं तेजः । वैधर्म्यं भेदः । तथा च द्रव्यादिषट्कभेदादुक्तविधतेजोऽभावस्तम इति सूत्रार्थः ।

अत्राऽनुद्भूतरूपचक्षुरात्मकतेजसस्तमस्यपि सत्त्वादव्याप्तिवारणाऽयो**'द्भूतपदम्'** । वालुकाप्रविष्टरविरश्मिसत्त्वादव्याप्तिवारणायाऽनभिभूतपदम् । तेजःपरमाण्वादिसत्त्वादव्याप्तिवारणाय प्रकृष्टमहत्पदम् । वस्तुतस्तु, प्रभात्वाऽवच्छिन्नप्रतियोगिताकाऽभावस्तमः । न तु पूर्वोक्ताऽभावः । गौरवात् । प्रभात्वं चाऽनुगतप्रतीतिसाक्षिका जा-

तिरिति । नच चाक्षुषत्वाऽवच्छिन्नं प्रत्यालोकसंयोगस्य हेतुत्वात्तदभावे तमश्चाक्षुषानुपपत्तिरिति वाच्यम् । तेजःसामान्याऽभावाद्यतिरिक्तचाक्षुषत्वावच्छिन्नं प्रत्येवाऽऽलोकस्य सहकारित्वाऽभ्युपगमादित्याहुः ।

अत्र **प्रत्यक्तत्वदीपिकाकारः** । क्षितेस्तावद्रूपरसगन्धसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वगुरुत्वद्रवत्वसंस्काराख्यचतुर्दशगुणकत्वेन, सलिले गंधराहित्येऽपि स्नेहसाहित्यादुक्ततावद्गुणकत्वेनाऽत्मनश्च संख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मभावनासंस्काराख्यचतुर्दशगुणकत्वेन, तेजसो रूपस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वद्रवत्वसंस्काराख्यैकादशगुणकत्वेन, वायोश्च रूपद्रवत्वराहित्यादुक्तनवगुणकत्वेन, मनसः स्पर्शराहित्यादुक्ताऽष्टगुणकत्वेन, व्योम्नः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाख्यषड्गुणकत्वेन दिक्कालयोः शब्दस्याऽपि राहित्यात्संख्यादिपञ्चगुणकत्वेनाऽविनाशित्वेन च तेषु तमसोऽन्तर्भावाङ्गीकारे तावद्गुणकत्वप्रसङ्गान्नैतेष्वन्तर्भावः । नाऽपि गुणेषु, नीलप्रतीत्या रूपेऽन्तर्भावे तत्सहचरितगंधादिगुणाऽन्तरस्याऽप्युपलब्धिप्रसङ्गात् । सलिलतेजसोः शुक्लत्वाच्च । नभोनभस्वतोरपि रूपवत्त्वाच्च । नाऽपि कर्मणि । संयोगविभागसमवायित्वाऽभावात् । नाऽपि सामान्यविशेषसमवायेषु, तेषां व्यक्त्याश्रयसंबंध्युपलब्धिसापेक्षोपलब्धिकत्वात् । तमस आधारभूतानां व्यक्त्याश्रयसंबन्धिनां चाऽनुपलम्भादनुपलम्भप्रसङ्गात् । नाप्यभावे 'तमालश्यामं तम' इति रूपवत्त्वप्रतीतेः । एवं क्लृप्तेष्वनन्तर्भावाद्द्रव्याऽन्तरमेव तमः । न च द्रव्यचाक्षुषत्वाऽवच्छिन्नं प्रति आलोकसंयोगस्य सहकारित्वात्तदभावे

चक्षुषा जायमानं तमोज्ञानं निमीलितनयनस्य 'तमः पश्यामी'ति प्रत्ययवदभिमानमात्रमिति वाच्यम् । चेतनव्यवहारस्य ज्ञानपूर्वकत्व-नियमात्तदभावे तादृशव्यवहारबाधापत्तेः ।

न च शौक्ल्यज्ञानाऽभावे पटादौ नीलव्यवहारवदालोकज्ञानाऽ-भावविषयकविषयज्ञानमेव तादृशव्यवहारहेतुरिति वाच्यम् । तस्याऽ-चाक्षुषत्वेन 'नीलं तम' इति चाक्षुषव्यवहारानुपपादकत्वात् । तस्मा-दालोकविरोधिनस्तमस आलोकाऽभावव्यंग्यत्वात्तमोज्ञानमालोकनिरपे-क्षचक्षुषा जायमानमपि न भ्रमः । सामर्थ्यस्य कार्यगम्यत्वात् । अ-न्यथाऽऽलोकाऽभावस्यापि रूपवदभावतयाऽऽलोकनिरपेक्षचक्षुरग्राह्य-त्वप्रसङ्गात् । अत्रावग्रहस्य सर्वत्र योग्याऽनुपलब्धिसहकृतप्रतियो-गिग्राहकसामग्रीग्राह्यत्वदर्शनात् । आलोकविरोधितयाऽऽलोकनैर-पेक्ष्यस्य प्रकृतेऽपि तौल्यात् । नचाऽलोकाऽभावस्याऽपि तमोव्यंजकत-याऽपेक्षणीयत्वे तावतैव तमःपदसार्थक्यादनर्थकं तस्य द्रव्यान्तरक-ल्पनमिति वाच्यम् । कल्पनाऽभावात् । प्रत्यक्षसिद्धे तमसि तद्ग्रहस्य प्रमात्वायाऽत्रोद्योगस्य तेनाऽपर्यनुयोज्यत्वात् । न चाऽस्य ज्ञानस्य भ्रमत्वमिति वाच्यम् । बाधकप्रत्यक्षान्तराऽभावात् । अनुमानं बाधकमिति चेत् । न । प्रत्यक्षविरोधे तस्य बाधितत्वात् । नच-मीलितनयनस्य चक्षुर्व्यापाराऽभावेऽपि तमस उपलम्भात्तच्चाक्षुष-मेव न भवतीति वाच्यम् । तत्राऽपि पक्ष्मपटलाऽन्तवर्तितमसश्चक्षु-र्व्यापारादेवोपलब्धेः । न च रूपवदन्तरग्रहप्रसङ्गः ? । तत्राऽऽ-लोकस्य सहकारित्वात् । न चेन्द्रियाणामन्तःप्रवृत्यदर्शनान्नेदं साधीय इति वाच्यम् । पिहितकर्णपुटस्य श्रोत्रेन्द्रियव्यापारादेव प्राणघोषश्रवणात् ।

न च श्रोत्रेंद्रियस्य स्वसमवेतशब्दग्राहकत्वान्न व्यापारवत्त्वमिति वाच्यम् । तस्य बहिरपि प्रवृत्तिदर्शनात् । अन्यथा सुरसरित्तीरे शब्द इति देशप्रतीतिबाधाऽऽपत्तेः । न च गन्धाऽभावे तद्व्याप्तं नील-रूपमपि न स्यादिति वाच्यम् । अनुष्णाशीतस्पर्शस्य पृथिव्यां गन्धादिव्याप्तस्याऽपि गन्धाऽभाववति वायौ प्रतीतिबलेनैवाऽङ्गी-कारवदिहाऽपि तथा नीलरूपस्योपगन्तुं शक्यत्वात् । न च पाकजा-नुष्णाशीतस्पर्शस्यैव गन्धादिव्याप्तत्वं नेतरस्येत्यदोष इति वाच्यम्? इहाऽपि पाकजनीलरूपस्यैव तद्व्याप्तत्वमित्यदोषसाम्यात् । न च पाकजनीलरूपमेवाऽसिद्धमिति वाच्यम्? । सद्भावग्राहिणः प्रत्यक्ष-स्योभयत्र तौल्यात् । न च तमो रूपरहितं, स्पर्शरहितत्वात् । आका-शवदित्यनुमानविरोधात्तमसि रूपमेव नाऽस्तीति वृथैवेयं चिन्तेति वाच्यम्? । रूपग्राहकप्रत्यक्षविरोधे हेतोः कालात्ययापदिष्टत्वात्[१] । अन्यथा वायुः स्पर्शरहितः, रूपरहितत्वादाकाशवदितिसाधनेन वायावपि रूपापत्तेर्दुर्वारत्वात्? । तस्मान्नाऽभावरूपं किन्तु मनो-वदस्पर्शपरमाण्वारब्धं तम इति । **अत्रोच्यते**

**न तद्द्रव्याद्यसौत्रत्वान्नान्यो नामादिभेदतः ।**
**मायेत्युक्तेः पुराणे स्यान्मायाकार्यान्तरं तमः ॥ १ ॥**

यदिदं द्रव्यान्तरत्वं तमस उपगतं तदनालम्बितमेव । भग-वता बादरायणेन जैमिनिना च स्वशास्त्रेऽनुक्तत्वात् । पुराणादि-ष्वपि सृष्टिप्रक्रियादौ द्रव्यत्वेन न तदुक्तेः । न च सूत्रकारस्य लौकिकपदार्थशोधनायाऽप्रवृत्तत्वात्तदनुक्तिर्न दोषायेति वाच्यम्? ।

---

१ बाधितत्वादित्यर्थः । अन्यहेत्वाभासत्वाद्वा ।

तथा सति विरोधाऽभावात्काणादस्मृत्युक्ताङ्गीकारेऽप्यदोषात् । अथ शिष्टाऽपरिग्रहसूत्रादौ तन्मतदूषणादिदमपि नाऽऽद्रियते तर्हि नियतपदार्थवादोऽप्यनादरणीय इति व्यर्थ एव दशमद्रव्यत्वप्रवादः । युक्तिसिद्धस्य यस्य कस्याप्यादरणीयत्वात् । नन्वस्त्वेवं तथापि समवायिकारणत्वाद्गुणाश्रयत्वाच्च द्रव्यत्वमाद्रियत इति चेत् । मैवम् । आरम्भकसिद्धेरारभ्यसिद्ध्यधीनत्वात्प्रतियोगिप्रतिबद्धप्रतीकतयाऽपि क्रियावत्त्वादिप्रतीतिनिर्वाहे तदारभ्यताया एव वादकलितत्वेनाऽऽरम्भकाऽसिद्धौ समवायिताया दुर्वचत्वात् । गुणाश्रयत्वेन साधनेऽपि पृथिव्यामनिवेशं वदता नीलरूपाऽतिरिक्तगुणानङ्गीकारादाद्यक्षणे तदभावेन तस्यैवाऽसिद्ध्या द्रव्यत्वस्य दूरनिरस्तत्वात् । अतो भट्टानुसरणं हृदादियाचितमंडनवदाडम्बरमात्रमेव ।

यत्तु नीलरूपत्वात्पृथिव्यामन्तर्भावः कैश्चिदुच्यते? । तदप्यसङ्गतम् । सामान्यलक्षणाऽनाक्रान्तत्वेन । न पृथिवी, निर्गन्धत्वादिति प्रतिपक्षेण तद्बाधात् । नाप्यदर्शनेन । अनुद्भूतगन्धस्याऽशक्यवचनत्वात्पाकाप्रसिद्ध्या पाकजानुष्णाशीतस्पर्शस्याऽपि तथात्वादिति । यत्तु कंदलीकारः 'नीलं रूपमेव तम' इत्याह । तदपि न । तदाऽपि पृथिवीगुणत्वस्यैव वाच्यत्वेऽञ्जनादिनैल्यवत्तेजःसमवधानेऽपि तच्चाक्षुषाऽऽपत्तेः । अन्यथाऽनाधारत्वेन गुणत्वव्याघातात्तद्व्याप्यरूपत्वस्याऽशक्यवचनत्वाच्च ।

एवमभावत्वमप्यसंगतमेव । कोशे'ष्वन्धकारोऽस्त्रियां ध्वांतं तमिस्रं तिमिरं तमः । ध्वांते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः । विष्वक्सन्तमसमि'त्यादौ तन्नाम्नां, तदवांतरभेदनाम्नां, च पाठात् । 'अविद्याऽहंमतिः स्त्रियामि'तिवत्तेजोऽभावोऽतेजोऽप्रभे-

त्याद्यपाठाच्च । तेजोऽभावत्वेऽवान्तरनामपाठवदेतन्नामपाठप्रसंगात्त-देव भेदान्तराऽकथनप्रसंगाच्च । किं च प्रतियोगितदभावयोः सर्वत्र भावाऽभावविरोध एव नाऽन्यः । तेजस्तमसोस्तु वध्यघात-विरोधः । 'तेजसा नष्टं तम' इति प्रतीतेः । **'यथाहि भानोरुदयो नृचक्षुषं तमो विहन्यान्न तु तद्विधत्ते' 'यद्धाधसे गुहाध्वान्तं प्रदीपः प्रभया यथेति** । सृष्टौ **मूल तेजसाऽपिबत्तीव्रमात्मप्रस्वापनं तमः'** । प्रलयेऽपि **'हृतरूपं तु तमसा वायौ ज्योतिः प्रलीयत'** इत्यादि पुराणप्रयोगाच्च । **'अह्नाय तावदरुणेन तमो निरस्तमि'**ति वाक्येपि प्रयोगाच्च । **'लोकालोकं तथाऽतीत्य विवेश सुमहत्तम'** इत्यादौ प्रवेशपरिमाणयोः कथनाच्च ।

किं च छायायास्तमोभेदत्वकथनं जरतामत्यसङ्गतम् । **'दीपमंचकयोश्छाया बोधिच्छाया तथा निशि । तथा नीचजनच्छाया हंति पुण्यं पुराकृतं'**मित्यादिषु प्रतियोग्यन्तरकथनाच्चाण्डालादिच्छायास्पर्शे प्रायश्चित्तकथनाच्च । न च **'छायाघनातपे कांतावि'**ति कोशादातपाऽभाव एव च्छायेति वाच्यम् । अनेकार्थत्वात्तथोक्तेः । अन्यथैतद्विरोधप्रसंगात् । **'छायाप्रत्याह्वयाभासा असन्तोऽप्यर्थकारिण'** इत्यत्राऽसत्त्वकथनविरोधाच्च । छायाभागं.............च्चेति-दिक् । अतो द्वितीयस्कंधे भगवता **'ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथा भासो यथा तम'** इति कथनान्मायापरिणामविशेषरूपं भावातिरिक्तं पदार्थान्तरमेव तमः । तच्च[2] तेजोऽभावे मायया मनुष्यादीन्प्रत्येव जन्यते । न सर्वान्प्रति । अत एवोलूकबिडालादयस्तेजोभावमेव गृह्णन्ति । न तमः ।

---

१ शीघ्रमित्यर्थः । २ तत्तिमिरम् ।

अत एव वैशेषिकदर्शनस्योलूकरूपिणा कणादेन कृतत्वात्तस्य तमश्चाक्षुषाभावेन तत्सूत्रे 'भावाभावस्तम' इत्युक्तिरपि युज्यते। तथाऽस्मदादिदृष्टीनां तमोवृतत्वात्तमस एव ग्रहो न तु विषयान्तर-ग्रहः। तथा तद्दृष्टेः कोमलत्वाद्बलवत्तेजसा प्रतिघातस्तदभावे च सुखेन तेषां विषयग्रहः। न चाऽस्माकमपि तच्चाक्षुषाय कार्यका-रणभावान्तरापेक्षा?। चाक्षुषत्वावच्छिन्नं प्रति दूरत्वव्यवधानादीनां प्रतिबन्धकतायाः क्लृप्तत्वेन सर्वसम्मतत्वेन च कल्पनाऽभावात्। तमस आवरकत्वस्य च 'तमसा चावृता दिश' इत्यादि पुराणप्र-सिद्धत्वात्। व्यवधानाभावविशिष्टविषयचक्षुःसंयोगत्वेन चाक्षुषत्वे-न यः कार्यकारणभावश्चाक्षुषत्वावच्छिन्नं प्रत्यनावृतत्वेन वा या घटादौ विषयता तत एव सर्वनिर्वाहात्। एवं च विषयालोकसंयो-गतदभावयोः कारणकोटावप्रवेशेन प्रत्युत लाघवं ज्ञेयम्। न चैवं सति गृहादौ त्रसरेणुचाक्षुषाऽऽपत्तिरिति वाच्यम्। तुल्यत्वात्। न च तत्र विलक्षणाऽऽलोकसंयोगाऽभावान्न तथेति वाच्यम्?। गृहादौ च्छायारूपाऽल्पतमसा त्रसरेण्वावरणस्य संभवदुक्तिकत्वात्। न चैवं सति गाढतेजसि तच्चाक्षुषाऽऽपत्तिः?। तौल्यात्। तेजसैवाऽऽवर-णस्य शक्यवचनत्वाच्च। न च तेजोऽभावस्यैव व्यवधायकत्वं लाघ-वादङ्गीकार्यमिति वाच्यम्?। नीलप्रतीतिबाधाऽऽपत्तेः।

नच स भ्रम इति वाच्यम्?। तथापि.............................विषय-सापेक्षत्वात्तदाकांक्षायां च भावाऽभावान्यतरस्य तत्त्वेन वक्तुमशक्य-त्वात्। तादृशभ्रमविषयत्वेन विषयताख्यपदार्थान्तररूपस्य तमसः सिद्धेरप्रत्यूहत्वात्। ननु भ्रमस्य विशिष्टबोधरूपत्वेन विशेषणज्ञा-नजन्यत्वात्प्रकृतेऽपि भ्रमो विशेषणज्ञानविशेष्यभानसामग्रीविशे-

षणविशेष्यासंसर्गाग्रहरूपैर्नीलज्ञानचक्षुःसंयुक्तविशेषणतानीलतेजोऽभावासंसर्गाग्रहैरेव सेत्स्यतीति न नीलतमोरूपविषयताऽभ्युपगम आवश्यक इति चेत् । मैवम् । विशेषणीभूतनीलज्ञानस्य चाक्षुषरूपत्वे पूर्वोक्तयुक्त्या तद्विषयस्य तमस आवरकत्वात् । स्मरणरूपत्वेऽपि तस्य संस्कारजन्यत्वात्तेजोऽभावे तद्वति सुधाधवलितगृहादौ च संस्कारोद्बोधकस्यानुभूतनीलसदृशस्य विषयतारूपनीलतरस्य नीलसादृश्यस्य चाऽभावे संस्कारानुद्बोधे स्मरणस्याप्यशक्योदयात् । तदुदयार्थमपि संस्कारोद्बोधकस्य तस्य तत्राऽऽवश्यकत्वात् । अदृष्टस्योद्बोधकत्वेऽपि दृष्टसामग्रीं विना तस्याऽकिञ्चित्करत्वात् । दृष्टसामग्रीघटकत्वेनाऽपि तस्योपेक्षणात् । उपनीतभानरूपत्वेऽप्युपनायकस्य स्मरणस्योदयार्थं पूर्वोक्तयुक्त्या तस्याऽपेक्षितत्वात् । एतेनैव स्मर्यमाणाऽऽरोपस्याऽपि प्रत्युक्तत्वात् । चाक्षुषोपनीतभानस्य अनुभूयमानाऽऽरोपस्य च पूर्वोक्तयुक्तिभिरेव दत्तोत्तरत्वात् ।

यत्तु प्राभाकराः—तेजोज्ञानाऽभाव एव तमः । सत्यपि तेजसि तदज्ञाने तमःप्रत्ययादित्याहुः । तत्फल्गु । ज्ञानाभावज्ञानस्य मानसत्वा'न्नीलं तम'इतिचाक्षुषव्याघातात् । 'तेजोऽभावमुपलभामहे' इत्यनुव्यवसायानुपपत्तेश्च । तस्मान्मूलशक्तेर्मायायाः कार्यभूतमावरणात्मकमर्थान्तरमेव तम इति निश्चयः ॥

इति श्रीवल्लभाचार्यचरणाम्बुजचेतसा ।
सुबोधिन्युक्तमार्गेण तमस्तत्त्वं समर्थितम् ॥ १ ॥

इति श्रीवल्लभाचार्यमतवर्त्तिश्रीमद्वल्लभनंदनचरणनलिनपरागप्राप्तसकलसिद्धेः पीतांबरतनुजपुरुषोत्तमस्य कृतावतारवादावल्यां नवमोऽन्धकारवादः समाप्तिमगात् ॥ श्रीरस्तु ॥

॥ श्रीः ॥

श्रीकृष्णाय नमः



# पुष्टिमार्गसिद्धान्तवाङ्मालायां

## गोस्वामिश्रीमद्गोपेश्वररचित

# आत्मवादः ।



## एकादशो मणिः ।

प्रत्यक्षादिप्रमाणैर्यदगम्यं श्रुतिवाक्यतः ।
स्वतः प्रमाणभूताद्यद्गम्यं ब्रह्म समाश्रये ॥ १ ॥

नन्विदमसाम्प्रतम् । ईश्वरस्याऽनुमानगम्यत्वात् । तथाहि— न तत्र चाक्षुषं प्रत्यक्षम् । रूपाऽऽभावात् । नाऽपि मानसम् । परात्मनः परेण मनसा प्रत्यक्षवारणायाऽऽत्मप्रत्यक्षं प्रति परात्मन्यावृत्तविजातीयमनःसंयोगत्वेन हेतुत्वस्यावश्यकतया ईश्वरे तस्याऽभावात् । नाऽपि श्रुतिः । तत्प्रामाण्यस्येश्वरसिद्ध्यधीनत्वं, तत्सिद्धेस्तत्प्रामाण्याधीनत्वमित्यन्योन्याश्रयात् । नाप्युपमानम् । तत्सदृशाऽभावात् । तथा च परिशेषादनुमानगम्यमिति । तदुक्तम्—

कार्यायोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः ।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः ॥ इति ।

अनुमानानि तु । क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद्घटवत् । अन्ये तु जन्यत्वादित्यपि प्रयुञ्जते । सर्गाद्यकालीनद्व्यणुकप्रयोजकं

कर्म प्रयत्नजन्यम् । कर्मत्वात् । अस्मदादिशरीरजन्यक्रियावत् । गुरुत्ववतां ब्रह्माण्डादीनां पतनाऽभावः पतनप्रतिबन्धकप्रयत्नप्रयुक्तः । धृतित्वात् । वियति विहंगमधृतिवत् । ब्रह्माण्डादि, प्रयत्नवद्विनाश्यम् । नाशित्वात् । पाट्यमानपटवत् । घटादिव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः । व्यवहारत्वात् । आधुनिककल्पितलिप्यादिव्यवहारवत् । वेदजन्यप्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या । शाब्दप्रमात्वात् । धर्मादिरूपं पूर्वोक्तं ज्ञानं करणगुणजन्यम् । प्रमात्वात् । प्रत्यक्षादिप्रमावत् । वेदोऽसंसारिपुरुषप्रणीतः । वेदत्वात् । वेदः पौरुषेयः । वाक्यत्वात् । द्व्यणुकपरिमाणजनिका संख्या [1]अपेक्षाबुद्धिजन्या । एकत्वाऽन्यसंख्यात्वात् । द्व्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयाऽऽजन्यत्वे सति जन्यपरिमाणत्वात् । तुल्यपरिमाणकपालद्वयारब्धघटपरिमाणवदिति बोध्यानि । तस्मादनुमानमेव प्रमाणमिति प्राप्ते । उच्यते ।

श्रुतिवृन्दैः सदा जुष्टं श्रुतिवृन्दैः सदाऽद्भुतम् ।
श्रुतिवृन्दे सदा सन्तं श्रौतं श्रीकृष्णमाश्रये ॥ २ ॥

नहि तत्राऽनुमानस्य प्रमाणता वक्तुं शक्या । त्वदभिमतस्याऽप्यसिद्धेः । कार्यत्वलिंगकानुमानेन ईश्व[2]रसिद्धौ ज्ञानादिमत्त्वस्येव शरीरित्वस्याप्यन्वयव्यतिरेकसिद्धत्वात् । तथाहि—यत्र कुलादिषु कर्तृत्वं तत्र शरीरित्वम् । यत्र च मुक्तात्मस्वशरीरित्वं न तत्र कर्तृत्वम् । अत ईश्वरः शरीरी । कर्तृत्वात् । अस्मदादिवत् । [3]यन्नैवं तन्नैवम् । मुक्तात्मवदित्यनुमानेनेश्वरस्यापि कर्तृत्वाच्छरीरित्वमवश्यमङ्गीकर्त-

---

१ अपेक्ष्येति खपाठः । २ आईश्वरसिधीनादिमत्वेत्यादि खपाठः । ३ यन्नैवं तन्नैवमिति खपाठः ।

व्यम् । अन्यथेच्छादिकमपि न सिद्ध्येत् । अविशेषात् । ननु चेष्टां विनापि प्रयत्नमात्रेण[1] कार्यकरणसमर्थत्वादीश्वरस्य न चेष्टाधिकेरण-[2] तदपेक्षेति चेत् । न । ज्ञानमात्रेणैव सर्वकरणसमर्थस्येच्छादिमत्त्वस्याप्यसिद्धेः । ननु शरीरं परिच्छिन्नम् । शरीरत्वात् । अस्मदादिशरीरवत् । शरीरमनित्यम् । कार्यत्वात् । पटवदित्यनुमानाभ्यां शरीरस्य परिच्छिन्नत्वेनाऽनित्यत्वेन च युगपत्सकलदेशगतकार्याऽनुत्पत्तिप्रसंगः । ब्रह्मधर्मतानुपपत्तिश्चेति चेत् । न । अन्यथानुपपत्तिबलात्सिद्ध्यच्छरीरस्य यावताऽनुपपत्तिपरिहारस्तावत एव सिद्धेः । तथा ईश्वरशरीरं नित्यम् । सर्गाद्यकालीनद्व्यणुकारम्भपूर्वकालीनद्रव्यत्वात् । परमाण्वादिवत् । यन्नैवं, तन्नैवम् । अस्मदादिशरीरवदिति प्रत्यनुमानेन पूर्वोक्तानुमानस्य सत्प्रतिपक्षत्वात् । अनुकूलतर्कश्च, यदि शरीरित्वं न स्यात्कर्तृत्वमेवं[3] न स्यादित्याकारको बोध्यः । न च पूर्वोक्तेनाऽस्य सत्प्रतिपक्षत्वं शङ्क्यम् । अप्रयोजकत्वात्पूर्वोक्तानुमानस्य । अन्यथेश्वरज्ञानादीनामप्यनित्यतापत्तेः ।

ननु शरीरस्य महत्त्वेनोद्भूतरूपत्वेन च ईश्वरशरीरं चाक्षुषम् । महत्वे सत्युद्भूतरूपत्वादित्यनुमानेन प्रत्यक्षं स्यादिति चेत् । ईश्वरशरीरमचाक्षुषम्[4] । लौकिकप्रत्यक्षाऽविषयत्वात् । इन्द्रादिशरीरवदिति प्रत्यनुमानात्पूर्वोक्तानुमानस्य लौकिकप्रत्यक्षविषयत्वरूपोपाधिग्रस्तत्वात् । स्यादेतत् । ईश्वरे यच्छरीरं साध्यते तच्छरीरं किमीश्वराद्भिन्नमभिन्नं वा । नान्त्यः । आत्माभिन्नस्याऽपि तस्याऽसिद्धत्वात् । अतो भिन्नं नित्यं नित्यसम्बन्धं चाङ्गीकार्यम् । तथा सति, यथा

---

१ प्रळयेति खपाठः । २ धिकरणत्वादिति खपाठः । ३ सिद्ध्येति खपाठः । ४ एवेति खपुस्तके नास्ति ।

कार्यत्वेन कर्तृपूर्वकत्वसाधनं कुर्वतश्चेतनकार्यत्वे शरीरिजन्यत्वसाहचर्यस्य भूयो दर्शनेन शरीरजन्यत्वविशिष्टकार्यत्वस्य व्याप्यत्वात्साध्यतावच्छेदकशरीरनिविष्टकर्तरि? ईश्वरे तादृशशरीराऽसिद्धिः। तदसिद्धौ च कर्तृत्वासिद्धिः। एवं वायुरनित्यः। कार्यत्वात्। घटवदित्यनुमानेऽपि रूपसाहचर्यं लिंगस्य दृष्टमिति रूपविशिष्टस्य तस्य व्याप्यत्वेन रूपाऽभाववति वायौ कार्यत्वासिद्धि[स्तत्कार्यत्वाऽसिद्धौ]तत्सिद्धौ च रूपस्यापि सिद्धिः स्यात्। नत्वेवम्। प्रत्यक्षबाधात्। तस्मात्साहचर्यमात्रमप्रयोजकम्। व्याप्तिरेव प्रयोजिका। सा च कार्यत्वाऽनित्यत्वयोरेवेति वायौ तत्सिद्धी रूपासिद्धिश्च। एवं कृतेऽपि कर्तृत्वप्रयोजकं ज्ञानेच्छाप्रयत्नवत्त्वमेवेति शरीरित्वस्य तत्साहचर्यत्वेऽपि न तत्प्रयोजकत्वमतो नेश्वरे तत्सिद्धिः। अन्यथा दृष्टान्तीयाऽशेषधर्मापत्तिः पक्षे स्यात्।

तथा च घटदृष्टान्तेन जले नित्यत्वसाधने पृथिवीत्वादिकमपि सिध्येदिति। मैवम्[1]। किमिदं साहचर्यमात्रेत्यत्र मात्रपदं यावत्तत्परमुत भूयोदृष्टतत्परम्? । अन्त्ये त्वोमिति ब्रूमः। लोहलेख्या पृथिवीत्वादित्यादौ भूयः साहचर्यस्याप्यप्रयोजकत्वदर्शनात्पूर्वोक्तदोषापत्तेश्च। आद्ये तु व्याप्तेरप्यप्रयोजकत्वाऽऽपत्त्याऽनुमानस्यैवोच्छेदादिच्छादेप्यसिद्धेस्त्वन्मतस्याऽप्यसिद्धेः। तस्माच्छंकानामन्यथाऽनुपपत्तिबलात्सिध्यत्सर्वानुपपत्तिपरिहारपूर्वकं सच्चिदानन्दात्मकमीश्वराभिन्नमेव सिद्धमिति सिद्धिव्याहतत्वान्नोदयः। एतेनैव कार्यस्य शरीरादिमत्कर्तृपूर्वकत्वनियमः प्रत्यग्रजायमानाङ्कुरादावेव शरीरिणः कर्तुरनुपलम्भान्निरस्त इति मीमांसकमतमपि निरस्तम्। किञ्च।

---

१ इत आरभ्य, मैवमित्यन्तो ग्रन्थः कपुस्तके नास्ति।

जीवसाधने प्राणधारणप्रबलवत्त्वेन प्राणसिद्धिवदत्राऽपि तादृशप्राणसाधकत्वेनाप्यप्रयोजकत्वमस्य । कथं जीवस्य प्राणत्वमिति चेत् । इत्थम् । तथाहि निरात्मवादिनां बाह्यानां मते तेनाषां[1] मदशक्तिवत्पुञ्जधर्मत्वं यथा केवलैः खदिरचूर्णताम्बूलपर्णपूगैर्वमरैः[2] सुगदिवैस्तुपरः तथा न केवलपरमाणूनाषवेतनत्वं विविधपरमाणुपुञ्जमपेतनत्यनिनिः तत्रान्यं व इति । केनपुञ्जन्मेतनाधर्म उतांतरः । तत्रान्वयव्यतिरेकाभ्यां प्राणधारणप्रयत्नवत्त्वमेव जीवलक्षणत्वेन सिद्धः । तत्राऽबाह्यपुञ्जः आत्मा । प्राणधारकत्वाद्यन्नैवं तन्नैवम् । घटवदित्यनुमानं न शरीरावच्छिन्नबाह्यजस्य प्राणधारणप्रयत्नवतसाधनेन तद्धारकः बाह्यमततृतरावदिति प्रत्यनुमानेन हेतोः सत्प्रतिपक्षत्वात् । न वान्तरः पुंजस्तथा आन्तरपुंजो न तद्धारकः । आन्तरत्वात् । मृतपश्चान्तरपिंडवदित्यनुमानेन हेतोः साधारणत्वात् । नापि च सुरामाप्राणधारकत्वात् । आत्मनप्रबलाधारत्वाद्वा परेवन्तरे । न श्रोत्रादि नदित्यंतं प्रत्येकमिन्द्रियेषु आत्मत्वसाधनं युक्तम् । विनिगमनाविरहात् । अन्धादिष्वपि प्राणधारणप्रयत्नदर्शनेनैकस्मिन्व्यतिरेकव्यतिचाराच्च हेतोः स्वरूपासिद्धत्वात् । अतस्तत्समुदीयस्यात् । बलसाधनेऽपि यत्र सकलगोलकहीनदताइरो पिंडहे रनट्रकार्पइर्राना तद्धारेकलमंतःकरणम्पर्यवस्यति । न तु समुदायेन । गोलकनाशे तन्नाशप्रसंगात् ।

---

१ चेतनानामिति स्यात् । २ इतःपरं 'मनो मूर्तं क्रियावत्त्वा' दित्यन्तः पंचदशपङ्क्यात्मको ग्रंथः पुस्तकद्वितये नास्ति । पुस्तकत्रितये चास्ति । किन्तु पारसीकभाषांऽऽग्लभाषा मागधीभाषा स्वर्गीया वा वागिति न निश्चेतुं शक्यते ततश्च पुस्तकत्रितयप्रामाण्यात्तथैवाक्षरशो धृतः । यदि लग्नस्तर्हि सुख्यन्तु विद्वांसः । यथाबुद्धि च मध्ये मध्ये शोधितोऽपि भगवद्बुद्धिशोधनीय इत्यन्यत्र परित्यक्तः ।

नापि त्वगिन्द्रियैः । आशतस्तस्यपि न्मरगदिति अन्तःकरणे पुनसेनानुगानेन तथात्वसाधनेपि ताल्हिमणुनिमतिनाडीमनः- संतुषक्षयोगकर्मजन्यः यावत्प्रतियोगिसत्त्वेऽपि कादाचित्कत्वात् । स्थाणुपुरुषसंयोगवत् । यन्नैवं तन्नैवम् । स्थाण्वाकाशसंयोगवत् । [1]मनो मूर्तं क्रियावत्त्वाद्वायुवदित्यनुमानेनाऽगुणत्वेन, सुखसाक्षात्कारः सकरणकः जन्यसाक्षात्कारत्वाच्चाक्षुषसाक्षात्कारवदित्यादिना करणत्वेन च, सिद्धस्य मनसो भावादिकं नाणुगुणः । प्रत्यक्षत्वात् । घटरूपादिवत् । यन्नैवं तन्नैवम् । परमाणुरूपादिवदित्यनुमानेन ज्ञानादेस्तथात्वनिश्चयेन, ज्ञानाद्यनाधारत्वे सिद्धे तेनाऽनात्मत्व- सिद्धिः । ततः प्राणोऽवशिष्यते । तस्याऽऽत्मभिन्नत्वसाधनं दुर्घटम् । प्राणसत्त्वे जीवत्वस्य, तदसत्त्वे तदभावस्य च दर्शनात् । [2]ज्ञानप्रयत्नाधारत्वस्य तत्रैव पर्यवसानात् ।

न च सुषुप्तौ ज्ञानाऽभावे तस्मिञ्ज्ञानाद्यनाधारत्वे निश्चिते, प्राण आत्मभिन्नः । ज्ञानाद्यनाधारत्वात् । देहादिवदित्यनुमानेनाऽऽत्मभे- दसिद्धिरिति शंक्यम् । श्वासोच्छ्वासक्रियादर्शनेन तदानीमपि तस्य प्रयत्नवत्तानिश्चयात् । ज्ञानाऽभावस्य मनःसंयोगाऽभावजन्यत्वेन ज्ञानाधारत्वयोग्यताविघटनाभावात् । अतो ज्ञानाद्याधारत्वेनाऽऽ- त्मत्वसाधने तदभावस्य दर्शनात्प्राणस्यैवात्मत्वेन सिद्धिर्न तु ततो- ऽप्यतिरिक्तस्याऽऽत्मनः । देहप्राणवियोगस्यैव मृत्युत्वेन जीवद्देहे तस्याऽऽवश्यकत्वात् । अतिरिक्तात्माऽनभ्युपगमेन पदार्थलाघवाच्च । यदि च योगिनां श्वासनिरोधेऽपि जीवनज्ञानदर्शनात्तदतिरिक्त

---

१ पुस्तकचतुष्टयेऽशुद्धतमाः पाठा उपलभ्यन्ते किन्त्वस्माभिर्व्यथाऽऽडम्बर- भिया परित्यक्ताः । पञ्चमेऽपि कुत्र चित्तथैव । तदधिष्ठानेति खगघ पाठः ।

एवात्मेति विभाव्यते । तदाऽपि निरुद्धवृत्तिप्राणस्य तद्देहे सत्त्वान्न तदतिरिक्ताऽऽत्मसिद्धिः । यदि च निरोधजनकस्य प्राणाऽतिरिक्तत्वं विभाव्यते । तदापि चेतनाधर्मकस्य तस्यैव लाघवात्सिद्धिरिति, न कथमपि प्राणभिन्नाऽऽत्मसिद्धिरिति । एवं क्षित्यादिकर्तृत्वाद्याश्रयत्वेन व्यापकप्राणसिद्धेर्नाऽनुमानस्येश्वरसाधकत्वम् । एतेनाऽहंवित्तेरप्यप्रयोजकत्वमुक्तप्रायमिति श्रुतिरनुसरणीयैव ।

अत्र सांख्यास्तु प्रकृतेः कर्तृत्वमङ्गीकृत्येश्वरं न मन्यन्ते । तथाहि—प्रत्यक्षेणाऽनवगम्यमानस्येश्वरस्य कार्यत्वादिलिङ्गकानुमानेन कर्तृतया साधने तादृशप्रकृतिसिद्ध्याऽर्थान्तरत्वेन तदसिद्धिः । तस्य कर्तृतानिर्वाहकमादायैव सिद्ध्यङ्गीकारे तु तुल्ययोगक्षेमत्वाच्छरीरस्याऽपि सिद्धिः । सशरीरेश्वराङ्गीकारे तु शरीरवद्रागस्याऽप्यन्वयव्यतिरेकसिद्धत्वाद्रागिण ईश्वरस्य सिद्ध्या तस्य जीवतुल्यतापत्तिर्नित्यमुक्तत्वहानिश्च । न च प्रकृतेर्जडत्वेन कर्तृत्वाऽनुपपत्तौ तदधिष्ठातृत्वेन विवक्षितस्यैवेश्वरस्य सिद्धिरिति शङ्क्यम् । अधिष्ठातृत्वस्यैव विचार्यत्वम् । तथाहि—किन्नामाधिष्ठातृत्वम् ? । प्रकृतिनियामकत्वं वा ? । तत्सन्निहितत्वं वा ? । तस्यां प्रतिबिम्बितत्वं वा ? । नाद्यः । चेष्टां विना ज्ञानादिमात्रेण तथाङ्गीकारे जीवानामपि तथात्वाऽऽपत्तेः । तथा सत्यनेकेश्वरापत्तेः । न द्वितीयः । तदाऽप्युक्तदोषापत्तेः । तत्सन्निधानस्य सर्वेषु तौल्यात् । न तृतीयः । प्रतिबिम्बिते शरीरे मणौ च चलति शरीरमणिचलनप्रतीतिवत्प्रकृतिकर्तृत्वेनैव तस्य त[1]स्मिन्कर्तृत्वाभिमानात्स्वातन्त्र्याऽसिद्ध्या परिभाषिकत्वाऽऽपत्तौ विवक्षितरूपेश्वराऽसिद्धेः । किञ्च । ज्ञानादिमात्रेणाऽऽत्मनो जडनि-

१ स्वस्मिन्निति कख पाठः ।

यामकत्वाङ्गीकारे मृतशरीरेप्याहारादिक्रियाऽऽपत्तिः । तदभावात्तस्याः प्राणबुद्ध्यादिकार्यत्वेन, मृतशरीरे च तेषाममावाज्जीवच्छरीरेऽपि तेषामेव नियामकत्वसिद्ध्याऽऽत्मनि तदभावात् । अतः पुरुषच्छायापातेन चेतनत्वाऽऽपन्नस्य बुद्ध्यादेरन्तःकरणस्यैवाधिष्ठातृत्वं न तु तटस्थस्याऽऽत्मनः । अग्निसम्बन्धेन लोहस्य दाहकत्ववत् । अतो नैवमपीश्वरसिद्धिः ।

किंच । तस्य स्वातन्त्र्येण कर्तृत्वेऽकृताभ्यागमादिप्रसक्तिः । कर्मसहकारित्वेऽनीश्वरत्वाऽऽपत्तिः । तथा स्वार्थजगत्करणेऽनाप्तकामत्वाऽऽपत्तिः । परार्थकरणे वैषम्यनैर्घृण्यादिप्रसक्तिः । अतः प्रकृतिरेव कर्त्री । '**प्रधानाज्जगज्जायत**' इति श्रुतेः । न च '**स हि सर्ववित्सर्वकर्ते**'ति श्रुतेरीश्वरस्य कर्तृत्वं शंक्यम् ? । एतस्य मुक्तात्मोपासासिद्धात्माऽन्यतरप्रशंसापरत्वादित्याहुः ।

रामानुजाचार्यश्च क्षित्यादिषु सावयवत्वेन कार्यत्वमपि नानुमातुं शक्यम् । अकार्यम् । अशक्यत्वात् । अशक्योपादानविज्ञानत्वात् । महाभूतशब्दवाच्यत्वाच्च । आकाशवदिति भट्टभास्करोक्तैः प्रत्यनुमानैस्तस्य सत्प्रतिपक्षत्वात् । यदि चाकाशे निरवयवत्वस्यानुकूलतर्कस्य सत्त्वेन क्षित्यादिवायुपर्यन्तेषु तदभावेनोक्तहेतूनामप्रयोजकत्वं विभाव्यते ? । तदापि कार्यत्वेन हेतुना बुद्धिमत्कर्तृपूर्वकत्वमात्रसिद्ध्या तादृशक्षेत्रज्ञानामेव कर्तृत्वेन सिद्धिरिति हेतोरर्थान्तरसाधकत्वान्न तेनेश्वरसिद्धिः । न च क्षित्यादिवायुपर्यन्तस्य पक्षीकरणेन तदुपादानगोचराऽपरोक्षज्ञानादिमत्त्वस्य क्षेत्रज्ञेष्वशक्यवचनतया पक्षधर्मताबलात्तत्सिद्धिः ? । विवादाध्यासितं क्षित्यादिकं स्वोपादानगोचराऽपरोक्षज्ञानादिमदनेककर्तृपूर्वकम् । कार्यत्वात् । विचित्रसन्निवेश-

सार्वभौमसदनवदितिदृष्टान्तेनाऽनेककर्तृसिद्ध्या पक्षधर्मताया दुर्बलत्वात् । महीमहार्णवादीनां कार्याणामनेकत्वात्तेषां सर्वेषामेकदैकेन निर्मितत्वे प्रमाणभूतस्य हेतोरभावात्पृथग्भूतेषु कार्येषु कालभेदकर्तृभेदयोः प्रत्यक्षसिद्धत्वेन प्रत्युत बाधात् । न च जीवानां तादृशनिर्माणशक्त्यदर्शनेन तन्निवृत्तौ कार्यत्वबलेनैव तत्सिद्धिरिति वाच्यम् । पूर्वमशक्तानामपि पश्चात्पुण्यविशेषोपचयेन शक्तिदर्शनात् । पुण्यविशेषोपचयेनाऽतिशयिताऽदृष्टसम्भावनया च तादृशविलक्षणकार्यकर्तृत्वस्याऽपि सम्भवात् । इदमेवोक्तं कपिलाचार्यैः । **'मुक्तात्मनः प्रशंसावाक्यमुपासासिद्धस्य वेति'** सूत्रे । इदं योगिनोप्युपलक्षकम् ।

किं च युगपत्सर्वोत्पत्तिस्थिती न प्रमाणपदवीं व्रजतः । लोके क्रमेणैव तयोर्दर्शनाद्युगपत्कल्पकस्य हेतोरशक्यवचनत्वात्क्रमेण तत्कल्पने विरोधाभावाच्च । अतः क्षित्यादिकं बुद्धिमदेककर्तृकं कार्यत्वाद्घटवदित्यत्र, तन्नैककर्तृकं कार्यत्वाद्घटपटस्तम्भादिसमूहवदितिदृष्टान्तेन हेतोः साधारणत्वम् । तथा भूभूधरादिनिष्ठं कार्यत्वं न बुद्धिमदेककर्तृकत्वसाधकम् । समूहनिष्ठत्वात् । घटपटस्तम्भादिसमूहनिष्ठकार्यत्ववदित्यनुमानान्तरादपि तथा । किञ्चेदं दिक्क्षित्यादिगतं कार्यत्वं युगपदुत्पद्यमानसर्वगतं वा? क्रमिकोत्पद्यमानसर्वगतं वा? । आद्ये आश्रयासिद्धत्वम् । द्वितीये तु विरुद्धत्वम् । तस्मान्न कार्यत्वलिङ्गिकाऽनुमानेनेश्वरसिद्धिः । नापि जगदेकचेतना-

---

१ चतुर्ष्वपि पुस्तकेषु प्रायः प्रतिपङ्क्त्यशुद्धयो भूयस्यः । किन्तु व्यर्थप्रपञ्चभयादखिलेऽपि ग्रन्थे तद्दर्शनं परित्यक्तमस्माभिः । पञ्चमं प्रायः शुद्धम् ।

धीनम् । अचेतनाऽऽरब्धत्वात् । नीरोगस्वशरीरवदित्यनुमानात्सिद्धिः ।

तथाहि—किमिदमेकचेतनाधीनत्वम्? । एकचेतनाऽऽयत्तोत्पत्तिस्थितिकत्वमिति चेन्न । नीरोगस्याऽपि शरीरस्य पितृपुत्राद्यनेकचेतनादृष्टजन्यत्वेन तदुत्पत्तिस्थित्योस्तदधीनत्वेनैकचेतनाधीनत्वाऽभावात् । दृष्टान्ते साध्यवैकल्येन हेतोरसाधारणत्वापत्तेः । किञ्च । शरीरस्थितिरपि किं स्वावयवसमवेतता? उत प्राणनम्? । आद्येऽवयवाधीनत्वान्न चेतनाऽधीनत्वम् । घटादिवत् । द्वितीये क्षित्यादीनां शरीरत्वाभावेन पक्षेऽसम्भव इति पक्षसपक्षानुगतस्थित्यनुपलम्भः । नाप्येकचेतनाधीनप्रवृत्तिकत्वम् । पक्षान्तर्भूतेषु गुरुतररथशिलामहीमहीरुहादिष्वनेकचेतनाधीनप्रवृत्तिकत्वदर्शनेन व्यभिचारात् । नाऽपि चेतनमात्राधीनत्वम् । सिद्धसाधनत्वादर्थान्तरापत्तेश्च ।

किञ्चेश्वरः कर्ता न भवति । प्रयोजनशून्यत्वात् । अशरीरत्वाच्च । मुक्तात्मवदिति बाधकानुमानादपि नेश्वरे कर्तृत्वसिद्धिः । किंचाऽत्यन्ताऽपरिदृष्टेश्वराख्यपुरुषस्य, तस्मिन्सामर्थ्यविशेषस्य च कल्पनेऽत्यन्तगौरवात्क्लृप्तानां जीवानामेव तपोयोगयागादिलब्धसामर्थ्यानामेवं कर्तृत्वेन कल्पनं लघीय इत्यचेतनारब्धत्वलिङ्गकानुमानेनापि नेश्वरसिद्धिरित्याहुः ।

---

१ एवकारेणोपादानगोचरापरोक्षज्ञानच्चिकीर्षाकृतिमत्त्वं व्यतिक्रिष्यते गौरवात् । कारणताक्षित्यंकुरादेर्बोध्यार्थं कारणाभावात् । अमुया तत्र च स्वके अन्यथेच्छावान्यत्नवत्त्वात् । ज्ञानवानिच्छावत्त्वादित्यत्र घटादिविषयकज्ञानादिमत्त्वे साध्ये पटादिकमारभ्य पक्षकुलादौ हेतोः साधारण्यं स्यात् । कर्तृत्वादिसाधकानुमानेकचरापरोक्षज्ञानच्चिकीर्षाकृतिमान्यस्यादृष्टद्वारकर्जज्ञस्य सम्ब्रन्धात् । स्वकर्तृत्वमादिना कर्तृजन्यत्वम् । क्वचित्पुस्तक एवमशुद्धबहुलोघिकः पाठो लब्धः ।

यत्तु 'कार्यायोजनेत्या'दि कारिकाव्युत्पादने भवदेवमिश्रैरत्र प्रथमे प्रयोगे कर्तृजन्यत्वं तु स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमददृष्टाद्वारकजन्यत्वम्[१]। अत्राऽदृष्टाद्वारकेति विशेषणान्न जीवात्मनिरूपिताऽदृष्टाद्वारकजन्यत्वेन सिद्धसाधनमर्थान्तरं वा। जीवानां क्षित्याद्युपादानीभूतपरमाण्वादिगोचराऽपरोक्षज्ञानाऽभावेन तज्जन्यत्वे बाधान्न तदपि तथा। न च क्षितिघटादिसाधारणस्यैकस्य साध्यस्याऽभावेन स्वपदार्थाऽननुगमात्कथं व्याप्तिग्रह इति वाच्यम्[१]। स्वपदार्थाऽननुगमस्याऽदोषत्वात्। अन्यथेच्छादिना ज्ञानाद्यनुमानं न स्यात्। स्वविशेष्यकस्वत्वप्रकारकज्ञानत्वादिनैव तत्र कार्यकारणभावात्। अत्र च स्वकर्तृकत्वादि [१]साध्यकानुमाने कर्तृत्वेनैव कारणता। ज्ञानजन्यादिसाध्यके च ज्ञानत्वादिना। एवं कार्यताऽपि कार्यत्वेन जन्यत्वेन च। न च शरीरगौरवेणाऽप्रयोजकत्वं शङ्क्यम्[१]। अवच्छेदककोटौ घटात्वादीनां प्रवेशे आनन्त्यगौरवात्। ध्वंसस्य जन्यत्वेन, तस्य च जन्याभावत्वेनाऽवच्छेदकतया प्रवेशे शरीरगौरवाच्च। एवं तु विवक्षितविवेके जन्याऽभावत्वैकदेशस्य जन्यत्वस्यैव प्रवेश इति शरीरलाघवात्सामान्यलाघवादे-

---

१ न चांकुरादौ हेतोर्विपक्षित्यंकुरादिकलानवज्जन्यं चिकीर्षावज्जन्यं कीर्यत्वात्। घटवदित्येवं ज्ञानाजन्यार्थादसाध्यके चेत्यर्थः। अत्र ज्ञानादिकारणतावच्छेदकेन कारणतेत्यर्थः। ज्ञानजन्यादिसाध्यके च ज्ञानत्वादिनेतिपाठे ज्ञानजन्यं चिकीर्षाजन्यं कृतिमज्जन्यं कीर्यत्वादित्यनुमीनोति। कारणानि ज्ञानेच्छाप्रयत्नानि लाघवाद्यज्ञानाद्याक्षिप्तकर्तारस्तेन ज्ञानवत्त्वेच्छावत्त्वयत्नवत्त्वानि कारणतावच्छेदकानि गौरवात्। किन्तु ज्ञानेच्छाप्रयत्नानि कारणानि कारणतावच्छेकत्वं च ज्ञानत्वादिनेत्यर्थः। असाध्यसन्देहस्यानदूरत्वाद्याहितत्वेनन्याहितत्वेन तस्य पक्षसमत्वात्। न च शरीरजन्यत्वस्यो क्षित्यंकुरादिपक्षकेऽनुमाने। अयमपि क्वचित्पुस्तकेऽशुद्धिबहुलः पाठः।

कत्वलाघवात्कल्पनालाघवादुपस्थितिलाघवाच्च जन्यत्वेनैव कार्यता, न घटत्वादिना । कार्यत्वं च स्वसमवायिजन्यताख्येन परम्परासम्बन्धेन कृतित्वमेवेति न तत्रापि गौरवम् । नच विशिष्याऽन्वयव्यतिरेकाभ्यां घटत्वकुलालत्वादिना विशिष्यकार्यकारणभावस्यावश्यकत्वात्सर्वमेव तद्विरुद्धमिति वाच्यम्? । कार्यमात्रवृत्तिजातीनां कार्यतावच्छेदकत्वमिति सिद्धांतसमुद्घोषात् । न च शरीरजन्यत्वस्योपाधेर्विद्यमानस्वाच्छरीराजन्यत्वस्य प्रतिसाधनस्य सत्त्वाच्च साध्यसन्देहस्याऽन्याहितत्वेनाऽनैकान्तिकत्वं सिद्धमिति शक्यम्? । कर्त्रादिजन्यतायामपि गुरुभूतस्य शरीरजन्यत्वस्याऽनवच्छेदकत्वाल्लघुभूतस्य जन्यत्वमात्रस्यैवाऽवच्छेदकत्वेन तस्य च साधनव्यापकत्वेनाऽनुपाधित्वे हेतोरदुष्टत्वात् । नचाऽङ्कुरादौ हेतोर्विपक्षगामित्वेनैकान्तिकत्वं शक्यम्? । तत्र साध्यसन्देहस्याऽनन्याहितत्वेन तस्य पक्षसमत्वात् ।

एवं च कर्त्रादिजन्यतायामिव शरीरजन्यतायामपि जन्यत्वस्यैवाऽवच्छेदकत्वादीश्वरे नित्यज्ञानादिकमिव नित्यशरीरवत्त्वस्याऽप्यङ्गीकारेण प्रतिसाधनदोषस्याऽप्यभावात् । अनुमानं च क्षित्यादिकं शरीरजन्यम् । जन्यत्वात् । घटवत् । ईश्वरः शरीरी । कर्तृत्वात् । कुलालवदिति । अनुकूलतर्कश्चाऽत्र कर्तृत्वजन्यत्वाभ्यामिव शरीरित्वजन्यत्वाभ्यामपि पूर्वोक्तयुक्तितुल्ययुक्तिक एव । कार्यकारणभावश्च । श्रुतिश्च । '**यतो वा इमानि भूतानि जायन्त**' इत्यादि । '**सहस्रशीर्षापुरुष**' इत्यादि । '**आकाशशरीरं ब्रह्मेत्या**'दि चोक्तम् (?) ।

यदपि श्रुतीनां चानुकूलतर्कविधया स्वतन्त्रतया च ब्रह्मणि प्रामाण्यमिति नवीनमतम् । **साम्प्रदायिकमते** शरीरस्य कुलालश-

रीरत्वादिनैव कारणत्वं, नतु शरीरत्वेनेतीश्वरस्य नित्यशरीरं लोकानुग्रहेण व्यवहारप्रवर्तनार्थम् । अतोऽस्मदाद्यदृष्टजनिते रामकृष्णादिनामके शरीरे भूतावेशन्यायेनाऽऽवेशः । कार्यकरणानन्तरं च त्याग इति । **अभिनवमते** तु महेश्वरस्य विश्वमेव शरीरम् । तच्च नित्यपुंजघटितमित्यनित्यांशविरामेऽपि नित्यांशमादाय नित्यमेव । आकाशात्मकं च नित्यमेव । रामकृष्णादिनामकं त्वाविर्भावतिरोभावशालि भक्तानुग्रहेण कदाचित्कचिदाविर्भवति तिरोभवति च । अत एव तत्त्ववादिभिर्मूर्तमपि तन्नित्यं विभु चेत्यङ्गीक्रियते । सर्वत्र सर्वदा तथाभूतभक्तभावनया भक्तैः साक्षात्क्रियमाणत्वात् । तादृशसाक्षात्कारस्य प्रमात्वे सम्भवति, भ्रमत्वकल्पनस्याऽन्याय्यत्वात् । तदुक्त'**मौत्सर्गधियां प्रमात्वमि**'ति । विश्वात्मकन्तु योगिप्रत्यक्षगम्यमपि विश्वरूपदर्शनादौ श्रूयत एव सहस्रशः ।

एवं श्रुत्यादिभिः शरीरेऽङ्गीकृते तदनुसारिकर्तृकत्वाऽनुमानं निर्दुष्टमेव । एवमेकेनेश्वरेण सकलक्षित्यादिकार्यसम्भवे सति प्रमाणाभावाद्गौरवाच्च नानेकेश्वरसिद्धिः । किं चाऽनेकेश्वराङ्गीकारे तेषामैकमत्यं वैमत्यं वा स्यात् ? । तत्राऽऽद्ये स्वातन्त्र्याऽभावेनैश्वर्यहानिः । द्वितीये तु कार्यासिद्धिरिति कार्यदर्शना'**देकमेवाऽद्वितीयं ब्रह्मेत्या**'दि श्रुतिभ्यस्तादृशैः पुराणैश्चैकेश्वरसिद्धिरिति न पूर्वोक्तं किमपि दूषणम् । एवमेकेश्वरसिद्धौ कर्मत्वादिलिङ्गकानुमानान्यपि तमेव साधयन्तीति न कोऽपि क्वापि दोष इति ।

तत्सर्वमप्यविचारचारु । रामानुजाचार्योक्तसार्वभौमसदनदृष्टान्तस्य महीमहार्णवेत्यादिपूर्वोक्तदोषाणामनुद्धारेण सिद्धसाधनादिदोषाणां हेतोराभासतायाश्चाऽनिवृत्तेः । एवं शरीरित्वसाधकाऽनुमा-

नेऽपि कपिलोक्तानां रागादीनां दोषाणामनपगमाज्जीवतुल्यत्वाऽऽपत्त्यनुद्धार एव। एवमेव जन्यत्वलिङ्गकज्ञानजन्यत्वादिसाधकानुमानेऽपि द्रष्टव्यम्। **अतः श्रुतिसाहाय्यं विना कथमपि न निर्वाहः।** एवं कर्मत्वलिंगकानुमानमप्याश्रयासिद्धम्। अतः **'सद्येततक्षुरि'**त्यादि श्रुतिषु **'तन्मायाफलरूपेण केवलं निर्विकल्पितं। वाङ्मनोगोचराऽतीतं द्विधा समभवद्बृहदित्यादि'** भगवद्वाक्येऽन्यत्रापि विभागादेव सृष्टिकथनेन पक्षतावच्छेदकस्य पक्षेऽभावात्। एवं धृतिपक्षकानुमानेऽपि धृतेर्ब्रह्मांडादिपतनात्यन्ताऽभावरूपत्वं वा तत्प्रागभावरूपत्वं वा वक्तव्यम्? तयोरुभयोरप्यनादित्वेन चेतनप्रयत्नपूर्वकत्वाऽभावाद्बाधितत्वम्। अतो धृतिशब्दार्थो विष्टम्भात्मकसंयोगविशेषो वक्तव्यः। तदापि चेतनप्रयत्नपूर्वकत्वे साध्ये तादृशाऽनेकजीवप्रयत्नेन सिद्धसाधनमर्थान्तरं वा। एकचेतनप्रयत्नपूर्वकत्वसाध्ये तु गुरुतररथशिलादिदृष्टान्तेन हेतोः साधारणत्वं दुरपोहम्। एवं ब्रह्माण्डादिपक्षकानुमानेऽपि सिद्धसाधनादिकम्। एकप्रयत्नवद्विनाश्यत्वसाधने तु खन्यमानमहाभवनदृष्टान्तेन हेतोः साधारणत्वं द्रष्टव्यम्।

एवं व्यवहारपक्षकेऽनुमानेऽपि लिप्यादिव्यवहारसांकेतिकप्रयोगदृष्टान्तेनोक्तदोषादिकं द्रष्टव्यम्। तथा धर्मादिज्ञानपक्षकानुमानेऽपि वेदापौरुषेयवादिनं प्रति सिद्धसाद्धनादिदोषदुष्टत्वम्। एवं वेदत्वलिंगकानुमाने हेतोः धारणत्वम्। तथा वाक्यत्वलिंगकानुमानेऽप्याकाशवाणीदृष्टान्तेन हेतोरसाधारणत्वम्। एवं द्व्यणुकपक्षकानुमानेऽपि तादृशसंख्याज्ञानस्य योगिनामपि सम्भवात्तैरर्थान्तरमिति सर्वाण्येवाभासरूपाणि।

एवं नवीनमते यदीश्वरस्य शरीरमङ्गीकृतं तदपि युक्तिमूलत्वे रागादिमत्त्वप्रयोजनवत्त्वाद्यापत्त्यपरिहाराद्दुष्टमेव । श्रुतिमूलत्वे तु श्रुतिषु सच्चिदानन्दात्मकतदभिन्नशरीराङ्गीकारात्कर्तृत्वस्याऽपि तस्योक्तत्वात् । आसां श्रुतित्वेनैव प्रामाण्यं न तदनुगत्वेनेति । यदप्यभिनवमते ईश्वरस्य विश्वात्मकं शरीरमङ्गीकृतम् । यच्च नित्यानित्यपुञ्जघटितत्वेऽपि नित्यांशमादाय नित्यमाकाशादिरूपं च नित्यमेवेत्युक्तम् । तदपि फल्गु । कर्तृत्वनिर्वाहकत्वेनाङ्गीक्रियमाणस्य तस्य विश्वपूर्वभावित्वस्याऽवश्यकत्वेन विश्वात्मकत्वाऽनुपपत्तेः । नित्यांशमादाय तस्य पूर्वभावित्वाङ्गीकारे तस्य परमाण्वादिरूपत्वेन कर्तृतानिर्वाहकत्वविरहप्रसङ्गात् ।

नच नित्यानित्यपुञ्जात्मकमेव तदित्यपि युक्तम् । यस्य पृथिवीशरीरमित्यादिश्रुतिगतप्रत्येकपर्यायैकत्वविरोधप्रसङ्गात् । **'सर्वतः पाणिपादं तत्सर्वतोक्षीत्या'**दि श्रुतिविरोधापत्तेश्च । **तस्माच्छास्त्रैकसमधिगम्यं ब्रह्मेति** सिद्धम् । तदुक्तं बृहदारण्यके शाकल्यब्राह्मणे याज्ञवल्क्येन **'स एष नेतिनेत्यात्मा' 'अगृह्यो नहि गृह्यते अशीर्यो नहि शीर्यतेऽसंगो न सज्जते न व्यथते इत्येतान्यष्टावापतनान्यष्टौ पुरुषाः स यस्तान्पुरुषान्व्युदुह्य प्रत्युह्याक्रामीत्तं त्वौपनिषदं पुरुषं पृच्छामी'**ति वाक्ये मूर्तामूर्तब्राह्मणवदेव निषेधपूर्वकं करणाद्यग्राह्यो नित्योऽसंगो निर्दुःखः शारीरादीनष्टपुरुषान्पृथिव्याद्यायतनेषु तत्तल्लोकेषु च विशेषेणोच्चैःस्थापयित्वा, तत उपसंहृत्य योऽतिक्रान्तवानेतादृश उपनिषद्वेद्यः पुरुषः पृष्टः । तत्र यद्यनुमानवेद्यत्वं भवेत्तदाऽग्राह्यपदेन न सामान्यतो निषिध्येत । औपनिषदमिति वाऽऽनुमानिकमिति प्रतिप्रसूयेत ।

तस्मादुपनिषदतिरिक्तप्रमाणाऽगोचरत्वमेव श्रुत्यभिप्रेतमिति ज्ञायते। नचाऽग्राह्यपदेनेन्द्रियाऽग्राह्यत्वमुच्यत इति शङ्क्यम्। तथा सत्यनुमानादिनाऽपि वेद्यत्वसिद्धावौपनिषत्पदस्याऽनतिप्रयोजनत्वाऽपत्तेः। अतोऽग्राह्यपदेन यावत्प्रमाणाऽगोचरत्वमावेदयदौपनिषदपदमुपनिषत्प्रतिप्रसवं साधयत्केवलोपनिषद्वेद्यत्वमावेदयति।

स्यादेतत्। **'सर्वे वेदा यत्पदमामनन्ति'** इति श्रुत्युक्तमधिकवेद्यत्वं **'मनसैवाऽनुद्रष्टव्यमि'**ति श्रुत्युक्तमनोवेद्यत्वम्[1]। तथा योगिप्रत्यक्षगम्यत्वम्। **'अनागतमतीतं च वर्तमानमतीन्द्रियम्। विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिन'** इति वाक्यात्। तथा विश्वरूपदर्शनम्। किं **'चोपपत्तेश्चे'**त्यादि सूत्रे युक्त्युपन्यासः। **'आचारदर्शनादि'**ति सूत्रं च विरुध्येतेति चेत्। मैवम्। **'सर्वे वेदा'** इत्यस्यौपनिषदत्वेन सर्ववेदवेद्यत्वस्याऽप्युपनिषन्मात्रवेद्यत्वात्। एवं मनसोऽप्यौपनिषदत्वेनाऽदोषात्। तथा योगिप्रत्यक्षविषयत्वमपि न। **'विदूरकाष्ठाय मुहुः कुयोगिना'**मितिवाक्यात्। **'यमेवैष वृणुते' 'धातुः प्रसादादि'**ति श्रुतेश्च। एवं चा'ऽनागत'मित्यत्र ब्रह्मभिन्नमिति वाच्यम्। एवं विश्वरूपदर्शनमपि **'मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगादि'**त्यौपनिषदप्रसादादेव। **'उपपत्तेश्चे'**त्यत्र यदुपपत्त्युपन्यसनं तदपि न ब्रह्मस्वरूपज्ञापकतया किन्तु हेत्वाभासैः परान्तराऽऽशंकानिरासकतया। **'आचारदर्शनादि'**तिसूत्रस्य तु कर्मविषयः। न ब्रह्मविषय इति न किंचिदेतत्। ननु **'मन्तव्य'** इतिश्रुत्या युक्तिभिरनुचिन्तनरूपं मननं विहितम्। युक्तयश्चानुमानरूपा इति श्रुत्यनुकूलाऽनुमानस्य प्रामाण्यं

---

१ तथालमित्यधिकः पाठः खगयोः।

श्रुतिसूचितमिति कथमनुमानमप्रमाणमिति चेत् । न वयमनुमानस्याऽप्रामाण्यं वदामः, किन्तु करणत्वं निषेधाम इति मननादेः श्रवणाङ्गत्वेनाऽनुमानादेः सहकारित्वमनुमोदामहे । एतेना'ऽत्र **मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् । गृह्यमाणगुणैर्लिंगैरग्राह्यमनुमानत**' इति श्रीभागवतवाक्यगतमनुमानमपि व्याख्यातं बोध्यम् ।

**अतः श्रुतिमन्तरेण नाऽनुमानं ब्रह्मप्रमितिजननायाऽलमिति सुधीभिरवधेयम्** । न चाऽन्योन्याश्रयस्य बाधकत्वं वक्तव्यम् । अनधिगतार्थगन्तृत्वेनैव प्रामाण्यस्वीकारात् । नैयायिकमतादरस्तु नास्तिकादिदूषकत्वेन शिष्टानां भूषणधारणार्थं लाक्षाधारणवत् । इदमभिसन्धायोक्तमाचार्यैर्जन्मादिसूत्रभाष्य इतरमतमनूद्य **'तत्तु तन्त्वौपनिषदंपुरुषम्पृच्छामीति केवलोपनिषद्वेद्यत्वादुपेक्ष्य'मिति** । तदेतन्निबन्धे निष्कृष्टं **'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् । उत्तरं पूर्वसन्देहवारकं परिकीर्तितमि'**त्यनेन । अत एव **'न च वेदादृते किंचिच्छास्त्रं ब्रह्माभिधायकमि'**ति कौर्म्ये उक्तमिति सर्वं शुभम् ।

**सर्वसाधनहीनेन कृपामात्रावलम्बिना ।**
**कृतेनानेन प्रभवस्तुष्यन्तु मयि ते सदा ॥**

**इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितोऽयमात्मवादः समाप्तः ॥**

---

॥ श्रीः ॥

॥ श्रीकृष्णाय नमः ॥

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## गोस्वामिश्रीमत्पुरुषोत्तमविरचितो
# ब्राह्मणत्वादिदेवतावादः ।

### द्वादशो मणिः ।

**यच्छासनाऽनुसारेण ब्राह्मणत्वादिदेवताः ।**
**देहे तिष्ठन्ति लोकस्य तं हरिं सर्वदाऽऽश्रये ॥ १ ॥**

नन्विदमयुक्तम् । लोके ब्राह्मणत्वादीनां जातित्वेन प्रसिद्धेर्बाधकाऽभावेन च तेषां जातित्वोपगमस्य युक्ततया देवतात्वकल्पनस्याऽन्याय्यत्वात् । बाधकानि तु 'व्यक्तेरभेदस्तुल्यत्वं संकरोऽथाऽनवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रह' इति । तत्र व्यक्त्यभेद आकाशत्वादेर्जातिबाधकः । अनेकाऽननुगमात् । तत्र जातिकल्पने प्रयोजनाऽभावात् । तुल्यत्वं च घटत्वकलशत्वादेर्जात्यन्तरत्वबाधकम् । एकव्यंजकव्यंग्यत्वेन भेदग्रहाऽसम्भवात् । गौरवाच्च । संकरस्तु भूतमूर्त्तत्वादेर्जातित्वबाधकः परस्पराऽत्यन्ताऽभावसमानाधिकरणयोरेकत्र समावेशः । उभयोर्दुष्परीक्ष्यत्वात् । अनवस्थाऽपि तथा । अतएव सत्तायां सदितिप्रत्ययेऽपि न तत्र सत्ताऽन्तराऽभ्युपगमः । रूपहानिस्तु विशेषत्वादेर्जातित्वबाधिका । तत्र विशेषत्वाऽऽकारेणानुगमेऽपि न तत्र सामान्यवान् । गुणोगुण इति गुण-

लक्षणाऽऽक्रान्ततया गुणत्वापत्तौ विशेषाणां विशेषरूपताहानिप्रसङ्गात् । असम्बन्धश्चाऽभावत्वस्य जातित्वबाधकः । अभावे समवायाऽभावात् । प्रकृते च न किंचिदपि बाधकमतो ब्राह्मणत्वाऽदिकं जातिरेव ।

न च क्षत्रियत्वाऽभाववत्सु ब्राह्मणेषु ब्राह्मणत्वस्य सत्त्वाद्ब्राह्मणत्वाऽभाववत्सु क्षत्रियेषु क्षत्रियत्वस्य सत्त्वात्परस्पराऽत्यन्ताऽभावसमानाऽधिकरणयोस्तयोरेकस्मिन्विश्वामित्रशरीरे समावेशादस्त्येव साङ्कर्यम् । यद्वा ब्राह्मणत्वाऽभाववति क्षत्रियविश्वामित्रशरीर इति साङ्कर्यमत उभयथा दोषाद्ब्राह्मणत्वादेर्न जातित्वं युक्तमिति शङ्कनीयम् । ब्राह्मणत्वक्षत्रियत्वव्याप्यविश्वामित्रत्वस्य क्षत्रियदशायामभावेन विश्वामित्रत्वमादायाऽपि सांकर्याऽभावादिति । न च विश्वामित्रत्वव्याप्यविरुद्धभेदेन ब्राह्मणत्वद्वैविध्याङ्गीकारेऽपि साङ्कर्यनिवृत्तेर्विश्वामित्रद्वैविध्याङ्गीकारोऽनुचित इति शङ्क्यम् । न । अतिकल्पनाऽधिक्यप्रसङ्गात् । तथाहि—एकं ब्राह्मणत्वं विश्वामित्रव्याप्यमपरं च तद्विरुद्धम् ।

एवं तुल्ययुक्त्या क्षत्रियत्वमपि द्विविधम् । अन्यथा विश्वामित्रत्वमादाय साङ्कर्यापत्त्या क्षत्रियत्वस्याऽपि जातित्वाऽनुपपत्तेः । तथा च ब्राह्मणत्वद्वयं क्षत्रियत्वद्वयं विश्वामित्रत्वं चैकमित्येवं पञ्चजातयः । विश्वामित्रत्वद्वैविध्ये तु ब्राह्मणत्वं क्षत्रियत्वं तत्तद्व्याप्यं विश्वामित्रत्वद्वयं चेति चतस्र एव जातय इति लाघवात्तथा कल्पनमेव युक्तम् । दोषाऽभावात् । न च व्याप्यव्यापकभावे मानाऽभावः शङ्क्यः । तदनङ्गीकारे घटत्वपृथ्वीत्वादीनामपि मृद्घटादौ निवेशेन साङ्कर्यप्रसङ्गे जातेर्दत्ततिलाञ्जलित्वाऽऽपात इत्यन्यथाऽनु-

पपत्तेरेव मानत्वादिति । अन्ये तु संकरो न जातेर्बाधकः । श्रीनृसिंहकिंपुरुषादावुभयसत्वात् । पट्टकार्पाससूत्रैर्निर्मिते पटे तथाभूतजातिद्वयोपलम्भाच्चेत्याहुः । तस्माद्ब्राह्मणत्वादिकं जातिरेव ब्राह्मणत्वादीनां देवतात्वकल्पनमन्याय्यमेवेति प्राप्ते—उच्यते ।

न जातिर्ब्राह्मणत्वादि व्यक्तित्वव्यज्यनिर्गमात् ।
अन्यागमाच्च सम्बन्धस्याऽशक्यवचनत्वतः ॥
नियतव्यंजकाऽभावाद्वाक्यानां च विरोधनात् ।
ततः स्फुटं देवतात्वं प्रमाणानां समन्वयात् ॥

तथाहि—ब्राह्मणत्वादिकं यदि जातिः स्यात् व्यक्तिमपहाय नापेयात् । पूर्वं सिद्धायां व्यक्तौ पश्चात्किञ्चित्कालानन्तरं नाऽऽगच्छेच्च । एवं निश्चिते गमाऽऽगमे तत्सम्बन्धस्याऽयुतसिद्धत्वाऽभावात्तत्र समवायलक्षणाऽभावेनाऽसम्बन्धदोषाच्च । ब्राह्मणत्वादौ जातित्वस्य वक्तुमशक्यत्वात् । न च गमागमयोर्मानाऽभावः शङ्क्यः । विश्वामित्रस्थले साङ्कर्यवारणाय जातिचतुष्टयादिकं स्वीकुर्वता भवतैव क्षत्रियत्वतद्व्याप्यविश्वामित्रत्वयोर्गमनस्य ब्राह्मणत्वतद्व्याप्यविश्वामित्रत्वयोः पश्चादागमनस्याऽङ्गीकारात् ।

न च क्षत्रियत्वनिवृत्तौ सा व्यक्तिरपि निवर्त्तते, ततो ब्राह्मणत्वे व्यक्त्यन्तरमेवोत्पद्यतेऽतो न गमनाऽऽगमनदोष इति वाच्यम् । पूर्वव्यक्त्यारम्भकाऽवयवविघटनं विना तद्व्यक्तिनाशस्याऽवयवाऽन्तरागमनं विना व्यक्त्यन्तरोत्पत्तेश्च प्रमाणशून्यत्वात् । न च तपोबलेनैव विघटनाऽऽगमनयोः सम्भव इति वक्तुं युक्तम् । तथा सति

---

१ रेशम इति भाषा ।

ब्राह्ममैत्रावरुणवाशिष्ठमिश्वामित्रे गोत्रान्तरस्यापातात् । नच न तद्वक्तुं शक्यम्, **'यो रातो देवयजने देवैर्गाधिषु तापसः । देवरात इति ख्यातः शुनःशेफस्तु भार्गव'** इति ब्राह्मणविश्वामित्रपुत्राणां गाधिगोत्रत्वकथनस्य, **'एवं कौशिकगोत्रं तद्वैश्वामित्रैः पृथक् कृतम् । प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितमिती'**ति कौशिकगोत्रत्वकथनस्य विरोधापत्तेः । ब्राह्मणविश्वामित्रस्य गाधिगोत्रत्वादिकं विना तत्पुत्रेषु तद्गोत्रत्वस्य वक्तुमशक्यत्वात् । अतः पूर्वव्यक्तिनिवृत्त्यादेरप्रामाणिकत्वात्क्षत्रियत्वब्राह्मणत्वयोरेव गमाऽऽगमाववश्यं वक्तव्यौ । **'ये मधुच्छन्दसो ज्येष्ठाः कुशलं मेनिरे न तत् । अशपत्तान् मुनिः क्रुद्धो म्लेच्छा भवत दुर्जना'** इति पञ्चाशतानां ज्यायसां, शापेन म्लेच्छत्वकथनाच्च । तस्मादसंगतैवैषा कल्पना ।

ननु कालकृतस्य नित्यप्रलयस्य पुराणेऽप्यङ्गीकारेण प्रतिक्षणं व्यक्त्यन्तरस्य प्रमाणसिद्धत्वादत्राऽपि व्यक्त्यन्तराऽङ्गीकारे को दोष इति वाच्यम् । तत्राऽवस्थाभेदेन व्यक्त्यन्तरत्वेऽप्यवयवसन्तानकस्यैकजातीयत्वेन सोऽयमित्यादि प्रत्यभिज्ञाया एकत्वज्ञानस्य चोपपत्त्या दोषाऽभावात् । प्रकृते च क्षत्रियत्वविरुद्धब्राह्मणत्वाङ्गीकारेणाऽवयवसन्तानस्याऽपि वैजात्ये प्रत्यभिज्ञाऽभावैकत्वज्ञानाऽभावयोरापत्तेरेव दोषत्वात् । यदि चात्रापि मनुष्यत्वादिना केनचिद्धर्मेणाऽवयवसन्तानसाजात्यमङ्गीकृत्य प्रत्यभिज्ञादिकमुपपाद्यते । तदा तु नित्यप्रलयघट्टाल्याद्यवस्थामात्रं भेद्यते नत्वन्यदिति सांकर्याऽभावो दुरुपपाद एवेति सूक्ष्मेक्षिकया विभावनीयम् ।

ननु तर्हि मास्तां गमाऽऽगमौ । तथा सति सांकर्यस्याऽबाधकत्वा-

त्सुसिद्धं तेषां जातित्वमिति चेत् । न । नवमस्कन्धे 'गाधेरभून्महातेजाः समिद्ध इव पावकः । तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसमि'त्यत्र तपसा क्षत्रियत्वोत्सर्गस्य ब्राह्मणत्वप्राप्तेश्चोक्तत्वेन तद्गमाऽऽगमयोः प्रामाणिकत्वात् । 'शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् । तस्यां तनयमुत्पाद्य ब्राह्मण्यादेव हीयत' इति वाक्येऽपि ब्राह्मण्यहानिकथनाच्च । न च तत्र गर्भाधाने वीर्यरूपान्तराहान्या रेतः सेक्तुर्व्यक्त्यन्तरत्वात्पूर्वव्यक्तिनाशेन तत्समानकालमेव ब्राह्मणत्वाऽपगमान्न व्यक्तिसद्भावे तदपगम इति तस्याऽपगमस्य जातित्वबाधकत्वमिति वाच्यम् । तथासति रेतःसेक्तुः प्रत्यहं भिन्नत्वात्प्रत्यहमुपनयनापत्तेः । घटघटत्वादिसम्बन्धवच्छरीरब्राह्मणत्वयोः सम्बन्धस्य स्वाभाविकत्वाऽभावात् । अन्यथा उपनयनस्य वैयर्थ्यापत्तेः । 'दशाऽस्यां पुत्रानाधेहि पतिमेकादशं कृधी'त्येकवि(?)श्रुतिविरोधने तादृशयोगस्याऽप्रयोजकत्वाच्च । न 'न्वितऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः । सावित्रीपतिता व्रात्या' इत्यादौ ब्राह्मणकर्मानधिकारस्यैव प्रत्ययात्प्रकृतेऽपि ब्राह्मणकर्माधिकाराद्धीयत इत्येवाऽर्थो न तु ब्राह्मण्यहानिरिति चेत् । न । लक्षणापत्तेः ।

ननु 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति सूत्रेण कर्मण्यपि ष्यञ्विधानान्नात्र लक्षणेति चेत् । सत्यम् । तथापि भावपक्षे रूढेरपि सत्वाद्वृत्तिद्वैगुण्येन बाधकाऽभावे भावार्थग्रहणस्यैवौचित्यात् । न च हानिकथनमेव बाधकमिति वाच्यम् । तस्य जातिबाधकत्वेन भावाऽबाधकत्वात् । न च जातिरेव भाव इति युक्तम् । आकाशत्वादौ व्यभिचारात् । अतोऽत्र तत्कर्माधिकारसम्पादको धर्म एव भावत्वेन ग्राह्यः । जातित्वबाधकानां पूर्वमुपपादितत्वादिति । किञ्च

नियतव्यंजकाऽभावादपि न ब्राह्मणत्वादीनां जातित्वम् । न च पद्मरागादिषु नियतव्यंजकाऽभावेपि पद्मरागत्वादेर्जातित्वस्वीकारान्नैवमिति वाच्यम् । प्रभाविशेषस्य व्यंजकस्य तत्रापि नियतत्वात् । न चाऽत्राऽप्यक्रोधतेजःप्रभृतीनां व्यंजकत्वमिति वाच्यम् । दुर्वासःप्रभृतिषु व्यभिचारात् ।

न च ब्राह्मणो जाताविति प्रत्युदाहरणलिंगाज्जातित्वं वक्तुं शक्यम् । '**मातुर्यदग्रे जायन्ते द्वितीयं मौंजिबन्धनादि**'ति स्मार्तजननमादाय जननं जातिरीति व्युत्पत्त्या देषतानिवेशेनाऽपि तत्संगतेः । ननु खण्डोपाधिरेवाऽस्तु । तथासति ब्राह्मण्यां ब्राह्मणाज्जन्यत्वं वा, सवर्णायामूढायां सवर्णजनितत्वं वा, विशुद्धमातृपितृकत्वं वा, स्वदृष्टाकृष्टभूताभेदसमारब्धत्वं वा, तल्लक्षणं भविष्यति । उपाधिरेव ब्राह्मणत्वादिव्यंजको भविष्यतीति चेत् । नाद्यौ । चतुर्मुखे तत्पुत्रेषु मानसेषु चाऽव्याप्तेः । ऋषभपुत्रे'ष्वेकाशीतिर्ब्राह्मणा बभूवुरि'ति वाक्यात्तेष्वप्यव्याप्तेः । न तृतीयः । विशुद्धपदार्थस्याऽनिर्वाच्यत्वात् ।

तथाहि । न तावत्षट्कर्मनिरतत्वं ज्ञानित्वं योगित्वं वा तत् । तदितरेष्वव्याप्तेः । नाऽपि तदन्यतमत्वम् । जनकादिष्वतिव्याप्तेः । नापि चोदनागोचरषट्कर्माधिकारित्वं तत् । ब्राह्मणपत्नीष्वव्याप्तेः । न च तासु स्त्रीत्वरूपस्याधिकारप्रतिबन्धकस्य सत्वात्ता न लक्ष्या इति वाच्यम् । ब्राह्मणीपदप्रयोगबाधापत्तेः । न च तासु ब्राह्मणपुत्रीत्वमेव पदप्रवृत्तिनिमित्तमिति वाच्यम् । तज्जन्यास्वन्यास्वपि तत्प्रयोगाऽऽपत्तेः । नाऽपि तत्पत्नीत्वं तथा । असवर्णपत्नीष्वपि तत्प्रयोगाऽऽपत्तेः । यदि तत्रेष्टमापद्यते तदापि न तस्य स्त्रीपुंससाधारणत्वमिति न तेनेष्टसिद्धिः । अथ विभज्योभयं तदिति विभाव्यते

तदापि जात्ये तदभावान्न तावतेष्टसिद्धिः । न चोक्ताऽधिकारस्वरूप-योग्यत्वमेव तदिति युक्तम् । ब्राह्मणजन्यत्वादिकं विना तस्यैव दुर्ज्ञे-यत्वात् । तेषां च तज्ज्ञानसाधनतायाः प्रागेव निरस्तत्वात् । नाऽपि चतुर्थाश्रमाधिकार्यत्वं तत् । अविरक्ते ब्राह्मणेऽव्याप्तेः । तथैव पितृप-क्षेऽपि दूषणं ज्ञेयम् । पौण्ड्रसुह्मविदुरादिष्वतिव्याप्तेः । महापथप्र-वृत्तयुधिष्ठिरेऽतिव्याप्तेश्च । नचात्र प्रमाणाभावः । 'अथ वैकोऽह-मेकाहमेकैकस्मिन्वनस्पतौ । चरन् भैक्ष्यं मुनिर्मुण्डः क्षपयिष्ये कलेवरमि'त्यारभ्य 'देहं सन्न्यासयिष्यामि निर्भयं मार्गमा-स्थितः' इत्यन्तं राजधर्मे युधिष्ठिरेण स्वसंकल्पकथनात् । श्रीभाग-वते तथाकृतिकथनाच्च । एतेनैव विशुद्धमातृकत्वं ब्राह्मण्यां जातत्वं च निरस्तं वेद्यम् । चाण्डालादावतिव्याप्तेः । नचैवं सति तुरीयमेव लक्षणमादर्तव्यमिति वाच्यम् । व्रात्यादिष्वतिव्याप्तेः । एतेनैव तेषां व्यंजकताऽपि दूरनिरस्ता वेदितव्या । गोत्वादेः सास्नादिमत्त्वादि-वदसाधारणधर्मस्यैव व्यंजकत्वनियमात् ।

एवं चादृष्टविशेषजन्यतावच्छेदकं सर्वब्राह्मणसाधारणमेकं ब्राह्म-णत्वम् । अदृष्टविशेषजन्याद्यब्राह्मणव्यावृत्तं ब्राह्मणजन्यताऽवच्छेदकं, ब्राह्मणजन्यसर्वब्राह्मणाऽसाधारणं चापरमिति ब्राह्मणत्वद्वैविध्या-ङ्गीकारोऽपि फल्गुरेव । तत्तदसाधारणधर्मात्मकव्यंजकभेदाऽभावे ब्राह्मणत्वभेदस्य प्रमातुमशक्यत्वात् । नचाऽदृष्टविशेषवत्त्वस्य विशुद्धमातापितृजन्यत्वस्य च यथायथं व्यंजकत्वमिति युक्तम् । आद्येऽदृष्टविशेषवत्त्वज्ञानस्य ब्राह्मणत्वज्ञानाधीनत्वेन ब्राह्मणत्वज्ञा-नस्य च व्यंजकाऽदृष्टविशेषत्वज्ञानाधीनत्वेन ज्ञप्तावन्योन्याश्रयात् । द्वितीये च मात्रपराधस्य सम्भावितत्वेन विशुद्धत्वज्ञानदौर्घट्ये

व्यंजकज्ञानस्यैवाऽभावात् । अत एव जैमिनिनाऽपि सूत्रितम् । '**ह्यपराधात्कर्तुश्च पुत्रदर्शनमि**'ति । महाभारतेऽपि उपनीतस्य पित्राज्ञया ध्ययनार्थं गच्छतो मतंगस्य मध्ये देवगर्दभीवचनात्स्वमातरि व्यभिचारिणीत्वज्ञाने स्वस्य चाण्डालत्वज्ञानम् । ततो मातापितरौ त्यक्त्वा तपोऽर्थं गमनम् । बहुकालं तपःकरणेन प्रसन्नादिन्द्राद्ब्राह्मणत्वप्राप्तिरित्युक्तम् । तस्माद्व्यंजकाऽभावेन प्रसिद्धिमात्राज्जायमानं लौकिकं ब्राह्मण इति ज्ञानं प्रायशः प्रमाभास एव । क्वचिदेव तु प्रमेति निश्चयः । तथा ब्राह्मणत्वादिकं न जातिरित्यपि । विश्वामित्रत्वं तु गाधिना द्वादशेऽहनि नामकरणे तदुत्तरं सृज्यमानत्वादुपाधिरेव । अतो नियतव्यंजकाऽभावाद्ब्राह्मणत्वादिकं न जातिः । किन्तु देवतैव ।

यथाहुराचार्याः—'**ब्राह्मण्यं नाम काचिद्देवता सा यस्मिन्देहेऽभिव्यक्ता भवति ते ब्राह्मणा इत्युच्यन्त**' अतएव शापादिना शूद्रत्वं चाण्डालत्वमनुग्रहेण ब्रह्मत्वम् । सा चोपनयनेन देहे समायाति । तदा बहूनि वाक्यानि सङ्गच्छन्ते । एवं क्षात्रम् । अत एव परशुराम उभयनिवेश इति । तदुक्तमुद्योगपर्वणि भीष्मेण रामं प्रति '**ये ते वेदाः शरीरस्था ब्राह्मण्यं यच्च ते महत् । तपश्च सुमहत्तप्तं न तेभ्यः प्रहराम्यहम् । ब्राह्मणाः क्षत्रियत्वं हि यांति शस्त्रसमुद्यमादि**'ति । अत्र उपनयनेत्युपलक्षणम् । वाल्मीकिप्रभृतिष्वनुग्रहेण नामोच्चारणेन मतंगादिषु तपसा च तदुक्तेः । बहूनि वाक्यानि तु '**जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते । वेदाऽभ्यासाद्भवेद्विप्रो ब्रह्मणो ब्राह्मणः स्मृत**' इत्यादीनि ज्ञेयानि । ननु सगर्भदहने तद्वर्णजं वधपातकमिति गर्भेऽपि तत्तद्व-

र्णस्वस्मरणात्तदानीमुपनयनाद्यभावेन देवतासमागतेरशक्यवचनत्वा-त्तज्जातिरूपमेव मन्तव्यमिति चेन्न । 'अंगादंगात्संभवसी'ति श्रुत्या गर्भस्थपित्रंशत्वेन तद्वर्णस्य सिद्धत्वात् ।

न चोपनयनवैयर्थ्यापत्तिः । शूद्रत्वाऽऽख्यदेवताशाबल्यनिवार-कत्वेनाऽऽवश्यकत्वात् । **'सवर्णेभ्यः सवर्णासु जायन्ते हि सजा-तयः । अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः'** इति याज्ञ-वल्क्यादिभिरुक्तेष्वपि । **'ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् । एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजा'** इति देवलेन संस्कृतत्वविशेषणमुक्तम् । एवं चोपनयनस्य यथासम्भवं क्वचिच्छाबल्यनिवृत्तौ क्वचित्समागमे हेतुत्वमिति न काचिदनुप-पत्तिः । सा च देवता बृहदारण्यकीयपुरुषविधब्राह्मणे **'ब्रह्म वा इदमग्र आसी'**दित्यारभ्य **'वैश्येन वैश्यः शूद्रेण शूद्र'** इत्यन्त-ग्रन्थे । तैत्तरीयके च **'ब्रह्मणे ब्राह्मणमालभते क्षत्राय राजन्यं मरुद्भ्यो वैश्यं मरुतो वै देवानां विश'** इत्यादिषु स्फुटम् ।

एवञ्च ब्राह्मणीत्वमपि **'विवाहस्तु समन्त्रक'** इति वाक्याद्विवा-हाऽनन्तरमेव । पूर्वंतु ब्राह्मणकन्यात्वमेव । तत्राऽव्यभिचारादावपि पापप्रायश्चित्तयोस्तारतम्यं ज्ञेयम् । अतएव तादृक्करणे आशौचता-रतम्यमपि युज्येत इति सुष्टूक्तं बहूनि वाक्यानीति । क्षात्रमित्युप-लक्षणं शूद्रत्वादेरपि । **'वेदाऽक्षरविचारेण ब्राह्मणीगमनेन च । कपिलाक्षीरपानेन शूद्रश्चाण्डालतां व्रजेदि'**त्यादिलिङ्गेन निय-तव्यंजकाऽभावेन चाऽजातित्वात् । न च शूद्रापदे टाबभावापत्तिः, जननमेवाऽऽदाय तत्राऽपि निर्वाहात् । एवं यद्धनपर्वण्याजगरे **'ब्राह्मणः को भवेत् राजन्'** इति प्रश्ने सति **'सत्यं दानं क्षमा**

शीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृत' इति युधिष्ठिरेण लक्षितम्। ततश्चातुर्वर्ण्ये प्रमाणं च 'सत्यं च ब्रह्म चैव हि। शूद्रेष्वपि च सत्यं चे'त्यादिना सर्पेण लक्षणेऽतिव्याप्तावव्याप्तौ च दर्शितायां, 'शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः। यत्रैतल्लक्ष्यते सर्प स ब्राह्मण इति स्मृतः। यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेदि'त्यनेन तेषां लक्ष्यकुक्षिनिक्षेपलक्ष्यबहिश्चाराभ्यामव्याप्तावतिव्याप्तौ च निवारितायां प्रमाणसमर्थनेन च लक्षणादौ वर्तते। 'यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः। वृथाजातिस्तदायुष्मन् कृतिर्यावन्न विद्यत' इत्यनेन नियतव्यंग्यायां जातौ स्वीकृतायां, 'जातिरत्र महासर्प मनुष्यत्वे महामते। संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः। सर्वे सर्वास्वपत्यानि जनयन्ति सदा नरा' इत्यनेन सांकर्यं दूषणं जातावुक्त्वा दुष्परीक्ष्येत्यनेनाऽनियतव्यंग्या न जातिः, किन्तु नियतव्यंग्यैव जातिरिति सूचयित्वा, 'इदमार्षं प्रमाणं चे'त्यारभ्य 'यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते। तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तमे'त्यनेन संस्कारवृत्ताभ्यां ब्राह्मण्यमुक्तम्।

तेनाऽपि तस्य देवतात्वमेव स्फुटीक्रियत इति। यत्रोभयं तत्र पूर्णो निवेशो यत्राऽन्यतरत्तत्र न्यून इति सिध्यतीति तदप्येतदविरोधीति ज्ञेयम्। किमेवं किन्नरकिम्पुरुषादिष्वपि तादृशाकृतिव्यंग्यं जात्यन्तरमेव। नतु संकरः। श्रीनृसिंहत्वं तु न जातिः। व्यक्त्यभेदात्। स्वेच्छया तदा तदा तस्यैवाऽऽविर्भावात्। अन्यथा उपासकदर्शनगोचरस्याऽप्यन्यत्वाऽऽपत्तेः। कादाचित्कत्वस्य तुल्यत्वात्।

पट्टकार्पाससूत्रनिर्मितपटे पटत्वमेव जातिर्नतु पाट्टत्वादिकम् । पाट्टादिनिर्मितत्वस्य तत्रोपाधित्वात् । तस्मात्संकरस्याऽपि बाधकत्वेन ब्राह्मणत्वादिकं न जातिः । न चाऽनुगताऽऽकारप्रतीतिबाधः । संस्कारवृत्ताद्युपाधिना तत्सिद्धेः । तदभावेऽपि या प्रतीतिः सा तु सादृश्यनिबन्धना भ्रान्तिरेवेति निश्चयः । तस्माद्ब्राह्मणत्वादिकं देवतैवेति दिक् ।

पुरुषोत्तमदासेन श्रीपीताम्बरसूनुना ।
सुबोधिन्युक्तरीत्यैवं ब्राह्मणत्वं विचारितम् ॥ १ ॥

इति श्रीवल्लभाचार्यमतवर्तिश्रीमद्वल्लभनन्दनचरणदास-
दासेन पुरुषोत्तमेन कृतो ब्राह्मणत्वादिदेवतावा-
दो दशमः सम्पूर्णतामगात् ॥

---

॥ श्रीः ॥

श्रीकृष्णाय नमः

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## श्रीमत्पुरुषोत्तमकृतो
# जीवप्रतिबिम्बत्वखण्डनवादः ।

एकादशो मणिः ।

यच्चिदंशेषु जीवेषु प्रतिबिंबादिरूपताम् ।
वदन्ति मतभेदैस्तं श्रीकृष्णं सर्वदाऽऽश्रये ॥ १ ॥

ननु जीवानामंशत्वकथनमयुक्तम् । श्रुत्यादिविरोधात् । तथाहि— 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचंद्रवदि'ति ब्रह्मबिंदूपनिषदि जलचन्द्रदृष्टांतेनैकस्य भूतात्मनो बहुधा दर्शनकथनात् । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मे'ति स्मृतौ चोपाधिना भेदरूपकथनात्[1] । व्यासपादैरप्य'त एव चोपमा सूर्यकादिवदि'ति सूत्रेण तदर्थबोधनाच्च ब्रह्मप्रतिबिंबत्वस्यैव निश्चयात् । न च 'ममैवांशो जीवलोके जीवभूतः सनातन' इति गीतावाक्यादंशो नानाव्यपदेशादि'ति सूत्राच्चांशत्वं संभावनीयम्? । गौण्याऽप्यु-

---

१ रूपकरण खगपाठः ।

पपत्तेः । अन्यथा जीवस्वरूपविचारे भगवान्बादरायण **'आभास एव च'** इति न सूत्रयेत् । तस्मात्प्रतिबिंब आभासो वा जीवः ।

न च भूतानां क्षेत्राणां चास्वच्छत्वादुपाधेरनिर्वाच्यत्वेनाऽसांप्रतत्वं शंकनीयम्? । मायादीनामेवोपाधित्वात् । तथाहि— अत्र षट्पक्षाः । तत्राऽनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसंबन्धिनी माया । तस्यां चित्प्रतिबिंब ईश्वरः । तस्या एव मायायाः परिच्छिन्नाऽनन्तप्रदेशेष्वावरणविक्षेपशक्तिमदविद्याऽभिधानेषु चित्प्रतिबिंबो जीव इत्येकः पक्षः । त्रिगुणात्मिकाया मूलप्रकृते**'र्माया चाविद्या च स्वयमेव भवती'**ति श्रुतिसिद्धं रूपद्वयम् । तत्र रजस्तमोऽनभिभूतशुद्धसत्वप्रधाना माया । तस्यां चित्प्रतिबिंब ईश्वरः । तदभिभूतमलिनसत्वप्रधानाऽविद्या । तस्यां चित्प्रतिबिंबो जीव इत्यपरः । विक्षेपशक्तिप्राधान्येन मायाशब्दितायां तस्यामेव चित्प्रतिबिंबो जीव इति तृतीयः । अविद्यायां चित्प्रतिबिंब ईश्वरः । अंतःकरणे चित्प्रतिबिंबो जीव इति तुरीयः । घटाकाशजलाकाशमहाकाशमेघाकाशवत् कूटस्थजीवब्रह्मेश्वरभेदेन चैतन्यचातुर्विध्यवादिनां मते ब्रह्माश्रितमायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिंबितं चैतन्यमीश्वरः । स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यस्थिते मायाकल्पितेंऽतःकरणे प्रतिबिंबितं चैतन्यं जीव इति च पञ्चमः । एवं प्रतिबिंबेश्वरवादिनां पञ्च पक्षाः । बिम्बेश्वरवादिमते तु जीवोपाधिनाऽन्तःकरणादिनाऽवच्छिन्नं चैतन्यमीश्वरो बिम्बभूतः । अज्ञाने तत्प्रतिबिंबो जीवस्तत्राऽप्यज्ञानपरिणामभूतमंतःकरणं जीवस्य विशेषाऽभिव्यक्तिस्थानमिति षष्ठः । एवं नानापक्षैरुपाधेर्निरुक्तत्वादीश्वररूपेणैकधा जीवरूपेण च बहुधा दर्शनोपपत्तेः प्रतिबिंबपक्ष एव

साधीयान् । अथवा, घटसंवृत आकाशे नीयमाने घटे यथा । घटो नीयेत नाऽऽकाशं तद्वज्जीवो नभोपम' इति श्रुतावविच्छिन्नवादस्याऽऽप्युक्तत्वादविद्यावच्छिन्नं ब्रह्मैव वा जीवोस्तु । न त्वंश इति प्राप्ते । उच्यते ।

युक्तिबाध्या न युक्तेयं प्रतिबिंबादिरूपता ।
श्रुतेः सम्यग्विचारे च तस्या अपि विरोधतः ॥ १ ॥

तथाहि, येऽत्राऽऽयुष्मता षट्पक्षा उक्तास्तेषु येनाऽऽवरणविक्षेपशक्तिरहितायामीश्वराख्यः प्रतिबिंबः स्वीकृतस्तन्मते ईश्वरांऽसिद्धिः[1] । अतिस्वच्छायां प्रतिबिम्बाऽसंभवात् । स्फटिकादौ तथा निश्चयात् । न च किंचिद्दूरतो मलिनशक्तिसंबंधेन वक्रितोपनेत्रादाविवोपपद्यत इति वाच्यम् । सृष्टेः पूर्वमाकाशादेरनुत्पन्नत्वात्कारणेऽप्यंतःसत्वेन बहिरवकाशाऽसत्वाद्दूरभावस्याऽशक्यवचनत्वेन दोषतादवस्थ्यात् । न च बहिरप्यवकाशोभ्युपगम्यत इति वाच्यम् । ईश्वरस्य चितश्च प्रादेशिकत्वाऽऽपत्तेर्व्यापकत्वहानेराकाशसंभवश्रुतिविरोधाच्च तदङ्गीकारस्य जघन्यत्वात् । योऽप्यावरणादिशक्तिमत्सु तत्प्रदेशेषु[2] जीवाख्यः प्रतिबिंबः, सोऽपि दुरुपपादः । तस्मिन्मत आवरणशक्तिरान्तरालिकत्वेन व्यवधानात् । अनान्तरालिकत्वे च तदसंसर्गे जीवस्याऽज्ञत्वाऽनुभवो दुरुपपादोऽवकाशाभावादिदूषणग्रासश्च । अतो न भूतप्रकृतेस्तत्प्रदेशानां वोपाधित्वं साधीयः । अत एव न द्वितीयपक्षीयमायाऽविद्ययोरपि ।

किञ्च उभयोर्मायाविद्ययोर्व्यापकत्वे रजस्तमोऽनभिभूतत्वाभिभूतत्वयोः सार्वत्रिकत्वेन मायाविद्याऽविवेकाऽसंभवात्प्रतिबिंबयोरप्य-

---

१ सिद्धेरिति कगपाठः । २ कगयोरेका पङ्क्तिर्नास्ति ।

विवेकेन जीवेश्वरविभागस्य दुरुपपादत्वम् । अव्यापकत्वे जीवेश्वरयोर्व्यापकताहानिप्रसंगश्च । अथ मायाया व्यापकत्वं बहिः सर्वतः स्वच्छत्वमविद्यायाश्च तदंतःस्थाया मलिनस्वच्छत्वमुपगम्यते तदापि व्यापके प्रतिबिंबाऽदर्शनादीश्वरो दुरुपपादः । मायायास्त्रिगुणत्वाद्बहिष्ठायाश्चितो मायांशरजस्तमोभ्यामविद्याव्यवधाने तत्प्रतिबिंबाऽसंभावाज्जीवोपि तथा । निकटचितस्तु नैकट्यादेव तदसंभव इति तथा । किंचिद्दूरत्वाऽवकाशादिकल्पने तु पूर्वोक्तदूषणाऽऽपत्तिः । तस्माद्द्वितीयोपि न साधीयान् । तथैव तृतीयोपि । पूर्वोक्तानामेव दोषाणामत्राऽपि संचारात् । पञ्चमे पक्ष आकाशदृष्टान्तेन यद्यपि चैतन्यस्य द्विगुणीकृत्य वृत्तिरुक्ता, तथापि दृष्टान्ताऽनुरोधादुपाध्यसंसृष्टस्यैव प्रतिबिंबोऽङ्गीकार्यः । तथा सत्यान्तरालिकमायातमसो घनावयवादिमत्त्वेन धीवासनाव्यवधायकत्वादीश्वराऽसंभवः । विरलावयवादिरूपताङ्गीकारे च हेतोरनिर्वाच्यत्वम् । तादृक्स्वभावताङ्गीकारे च स्वभाववादाऽऽपत्तिः । प्रतिबिंबसिद्धौ तादृक्स्वभावसिद्धिस्तत्सिद्धौ च प्रतिबिंबसिद्धिरित्यन्योऽन्याश्रयश्च । एवमन्तःकरणस्याऽपि मायाव्यतिरेकेणाऽस्थितेः पूर्वोक्ता एव दोषाः ।

ये च मायायां चित्प्रतिबिंबमीश्वरं परिकल्प्याऽविद्यायां मलिनसत्वायां तादृशेऽन्तःकरणे वा ईश्वरप्रतिबिम्बं जीवं कल्पयन्ति, तेषामपि मते मायाया व्यवधायकत्वादीश्वरद्वारकः प्रतिबिंबो दुरुपपादः । पूर्वोक्तदोषप्रसंगात् । यदि च मायाया बहिः सर्वतः स्वच्छत्वं, तदाप्यस्वच्छांशस्य तदंतःस्थत्वादंतःकरणाऽविद्ययोश्च तद्व्याप्यत्वात्स एव दोषः । यदि च मायाशुद्धसत्वान्तरशुद्धसत्वमविद्याद्यङ्गीकृत्य रजस्तमश्च तदंतरङ्गीक्रियते, तदा त्वतिस्वच्छायामि-

त्यादिनोक्ताः पूर्वोक्ता एव दोषाः । एवं षष्ठे बिंबेश्वरवादेऽपि जीवोपाध्यवच्छिन्नस्येश्वरस्योपाधिसंसृष्टत्वादन्तरालाऽभावेनैव प्रतिबिंबाऽसंभवः । ईश्वरस्य बिम्बत्वाऽसंभवश्च । अन्तरालकल्पने च व्यापकत्वहानिरित्ययमपि तथा । अथ तुरीयोऽवशिष्यते । सोऽपि पूर्वोक्तयुक्तिभिरेव निरस्तो भवतीति न युक्तिक्षमः । किञ्च । बिंबस्वरूपविचारेणाऽप्येते पक्षा न संगताः । सर्वत्र चक्षुर्योग्यस्यैव बिंबत्वदर्शनात् । चितश्च चक्षुरयोग्यत्वेन बिंबत्वाऽसंभवात् ।

ननु सर्वदा चक्षुरयोग्यस्य शब्दस्य कूपादौ प्रतिध्वनिदर्शनात्तस्य च शब्दप्रतिरूपत्वान्न सार्वत्रिकश्चक्षुरयोग्यस्य प्रतिबिंबाऽभावनियमोऽतो न दोष इति चेत् । अत्र केचित् । प्रतिध्वनिर्न पूर्वशब्दप्रतिबिंबः । पञ्चीकरणप्रक्रियया पटहादिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाऽऽकाशीयशब्दतया तस्याऽन्यशब्दप्रतिबिंबत्वाऽयोगात् । नाऽपि वर्णरूपः प्रतिशब्दस्तथा । वर्णाभिव्यंजकध्वनिनिमित्तकप्रतिध्वनेः प्रथमध्वनिवदेव वर्णाभिव्यंजकत्वोपपत्तेः । पूर्ववर्णप्रतिबिंबत्वकल्पनाऽयोगादित्याहुः । वस्तुतस्तु प्रतिध्वनेः शब्दप्रतिबिंबत्वं मानाऽभावग्रस्तमेव । न च साजात्यानुभव एव मानमिति वाच्यम्[१] । तस्य शब्दाऽन्तरेपि तुल्यत्वात् । बिंबस्थित्यधीनस्थितिकत्वस्य प्रतिबिंबताविनिगमकस्याऽत्राऽसत्वात् । न च बिंबरूपपूर्वशब्दस्थितिः शक्यवचना । शब्दस्य त्रिक्षणावस्थायित्वेन तदानीं नाशात् । आभासताया अप्यत एवाऽशक्यवचनत्वात् ।

---

१ स्थितेरिति क ग पाठः । एवं सर्वत्र प्रतिपङ्क्तिभूयानशुद्धभूयिष्ठः पाठो लभ्यते । अस्माभिस्तु साधीयांसमाश्रित्याऽपरे टिप्पण्यामपि न धृताः । व्यथाऽऽडम्बर इति । शोद्धा ।

चिरकालस्थायित्वपक्षाभ्युपगमेनेष्टसाधने कूपस्थवायुना प्रतिध्वनिवद्ध्वन्यानयनस्याऽपि संभवदुक्तिकत्वाद्ध्वनिद्वयश्रवणाऽऽपत्तेः। ध्वन्यनानयने नियामकाऽभावात्। अनानीते च ध्वनौ प्रतिबिंबतानिश्चयस्याऽशक्यत्वात्। न च **'छाया प्रत्याव्हयाभासा असंतोप्यर्थकारिण'** इति भगवद्वाक्ये प्रतिध्वनेरसत्वस्योक्तत्वात्साद्दश्यस्य चोपलभ्यमानत्वात्प्रतिबिंबत्वं कल्प्यत इति वाच्यम्?। नटकल्पितपारावतादिरुतवदुक्तहेतुभ्यां मायाजन्यशब्दान्तरत्वस्याऽपि शक्यवचनत्वात्। नाऽपि वर्णरूपप्रतिशब्दस्य पूर्ववर्णप्रतिबिंबत्वम्?। व्यंजनाक्षराऽश्रवणात्।

न च स्वराक्षरस्यैव प्रतिबिंब इति वाच्यम्?। नियामकस्याऽशक्यवचनात्। युगपदुभयस्वरग्रहणाऽभावेन पूर्वध्वनिवद्द्वितीयस्य प्रतिध्वनेरपि पूर्ववर्णव्यंजनकतायाः शक्यवचनत्वेन संदेहाऽनपायात्। नाऽपि ध्वनेर्वर्णप्रतिबिंबत्वं। मानाभावात्। व्यंजकतया सन्निधिमात्रेण स्वधर्माणामुदात्तादीनां वर्णेष्वारोपस्य शक्यत्वादैक्यवदेव ग्रहणाच्च।

यत्तु—आकाशस्य शब्दसमवायिनः कूपादौ सत्वेनाऽस्मदादिजन्यशब्दपरंपराजनितस्तथ्यः शब्दविशेष एव प्रतिध्वनिरिति केचिदाहुः। तन्न। अश्रवणाऽऽपत्तेः। वीचीतरंगादिन्यायेन तत्रोत्पन्नस्यध्वनेः पुनर्वैपरीत्येन तत उत्पादकस्याऽशक्यवचनत्वात्। कूपादिप्रतिबद्धस्य वायोस्तथात्वकल्पनेपि तत्तथ्यतागमकस्याऽभावात्। समाचारोपलंभयोर्व्यभिचारित्वात्।

**अतो मायिकमेव प्रतिबिंबातिरिक्तं शब्दांतरं तदिति निश्चयः। नाऽप्याकाशदृष्टांतेन सिद्धिः। तत्प्रतिबिंबे मानाभावात्।**

न च विभक्तांगुलिद्वयमाध्यमिकावकाशप्रतिबिंबदर्शनान्नैवमिति वाच्यम्? । तत्र तद्व्याप्तस्य प्रभामंडलस्यैव प्रतिबिंबात् । तद्बाहुल्या-देवावकाशबाहुल्यप्रतीतेरपि निर्वाहात् । अन्यथा वायोरपि प्रति-बिंबाऽऽपत्तेः । न च तत्राऽदृष्टं प्रतिबंधकमिति वाच्यम्? । तस्याऽपि दृष्टसामग्रीसापेक्षतया तत्त्वेनाप्ययोग्यत्वस्यावश्यकत्वात्ते-नैव सिद्धावदृष्टकल्पनस्य गुरुत्वादप्रामाणिकत्वाच्च । न चाऽऽका-शनीलिम्न आदर्शे दर्शनादयोग्योऽपि प्रतिबिंबत इति वाच्यम्? । नैल्यप्रतीतिवत्तत्प्रतीतेरपि भ्रमत्वात् । प्रमात्वपक्षे च योग्यताया एवेष्टत्वेन भवदभिमताऽसिद्धेः ।

किञ्च । वृत्तेः स्वरूपविचारेऽप्येते पक्षा न संगताः । तथाहि— यो यत्र व्याप्य वर्त्तते स तत्र न प्रतिबिंबते । तथा च चितः सर्व-गतत्वेन मायाया अविद्यायाश्च सर्वगतत्वेन कथं बिंबः स्यात् । तथा चेश्वराऽऽसिद्धिः । तदसिद्धौ च चित्प्रतिबिंबरूपजीवस्याप्यसिद्धिः । धीवासनासु प्रतिबिंबपक्षेऽनेकेश्वरापत्तिश्च । आश्रयनानात्वस्य प्रति-बिंबनानात्वनियामकत्वात् । किंच प्रतिबिंबस्वरूपविचारेपि तथा । प्रतिबिंबस्य बिंबवैयधिकरण्यनियमात् । बिंबस्थितिसजातीयस्थि-तिकत्वनियमाच्च? । बिंबसामानाधिकरण्यं बिंबस्थितिविजातीय-स्थितिकत्वं च बाधितम् । तदुभयं 'द्वासुपर्णा' इत्यत्र, 'ऋतं पिबन्तावि'त्यत्र च श्राव्यत इति तदनुरोधादपि तथा । अन्यथा तद्विरोधाऽऽपत्तेः । तस्मात्प्रतिबिंबपक्षो न युक्तिक्षमः ।

न चोक्तपक्षाऽनभ्युपगमे जलचंद्रादिदृष्टांतबोधकश्रुत्यादिवि-रोधः शङ्कनीयः? तत्रैकस्य ब्रह्मणो नानात्व एव दृष्टांतपर्यव-सानात् । तथाहि—अत्र पूर्वं **'मनो हि द्विविधं प्रोक्तमि'**त्युप-

क्रम्य शुद्धमनसः स्वरूपं, शुद्धे मनसि ब्रह्मसंपत्तिरूपं फलं चोक्त्वा तादृशमनःसिद्ध्यर्थं स्वस्य ब्रह्मात्मभावनारूपं साधनमुपदिशन्ती श्रुतिः '**स्वरेण संधयेद्योगमि**'त्यादिमन्त्रत्रयेण ज्ञेयब्रह्मस्वरूपमुक्त्वा तद्विरुद्धधर्मवतो ज्ञातुः कथमुक्तरूपब्रह्मणा सहाऽभेदो भावयितुं शक्य इत्याकाङ्क्षायां '**न निरोधो न चोत्पत्तिरि**'ति मन्त्रेण ज्ञातुर्विरुद्धधर्माध्यासं निवार्यत्वायोक्त्वा '**एक एवात्मा मन्तव्य**' इति मन्त्रेण ज्ञातुः स्वरूपं जन्माद्यभावायोक्त्वाऽविरुद्धधर्माभावेऽस्तु साजात्यं नत्वभेद इत्यभेदभावना न युक्तेति शङ्कायां जीवस्य तदभिन्नत्वाय ब्रह्मस्वरूपं वदति—

'**एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवदि**'ति। अर्थस्तु—एक एव हि भूतात्मा परमेश्वरो भूतेभूते प्रतिशरीरं व्यवस्थितः। विशेषाकारेणांऽशेनावस्थितः सन्। एकधा बहुधा चैव दृश्यते। एकस्याऽनेकधाऽवस्थाने दर्शने च दृष्टान्तमाह—'**जलचन्द्रवदि**'ति। यथा जले चन्द्रमा अंशुरूपेणांऽशेन स्थित एकधा चन्द्ररूपेण, बहुधाऽनेकसंख्यः कंपादिविशिष्टरूपेण, च दृश्यते तथेति। तथाच नानात्वदर्शनेप्यंशांशिनोरभेदात्साजात्याच्च ब्रह्माऽभेदभावना जीवस्य युक्तेत्यर्थः। एवं सत्यत्रैकस्य नानात्वमेव दृष्टान्तार्थः सिध्यति। किञ्चैतन्मन्त्रोत्तरमन्त्रे जीवस्य नभोपमत्वमुक्तम्। तदपि प्रतिबिम्बरूपतायां न संगच्छेत। तस्याऽलीकत्वात्। न चाऽवच्छिन्नवादस्य तन्मन्त्रे सिद्धेरंशत्वकथनमप्यसंगतमिति वाच्यम्?। तस्मिन्मन्त्रे जीवस्य स्थानत्रयातीततायां ब्रह्मभावापन्नतामात्रपरामर्शात्। पूर्वमन्त्रेण तथा निश्चयात्। अन्यथा विरोधाऽऽपातात्। प्रदेशत्वाऽऽदरणे श्रुत्यन्तर-

विरोधात् । 'प्रदेशादिति चेन्नाऽन्तर्भावादि'ति सूत्रकारेणैव प्रदेशपक्षाऽनङ्गीकरणात् । कृतहान्यादिदूषणग्रासाच्च । उत्क्रान्त्यादिसूत्रोक्तदूषणापत्तेश्च । जीव इति नामान्तरनिर्देशाच्च । प्रतिबिंबपक्षेऽपीदं दूषणं ज्ञेयम् । अवच्छेद्यस्य प्रतिबिंबस्य च क्वाऽपि नामान्तराऽदर्शनात् । अतोऽत्र ब्रह्मण एकस्य नानात्वमेव दृष्टान्तार्थ इति निश्चयः । एवमग्रेपि द्रष्टव्यम् । नन्वस्त्वंशप्रवेशस्तथापि तत्र मण्डलकलङ्कादेरप्रवेशात्प्रातीतिकानां तेषां त्वलीकतैवेति सैव दृष्टान्ताऽर्थोऽस्त्विति चेत् । सुबुद्धिरसि । तावताऽपीदानीमायुष्मता युक्त्या व्यवस्थाप्यमानानां व्यापकत्वादीनां केषांचिद्धर्माणामेव तथात्वं सेत्स्यति । न तु[1] जीवस्वरूपस्याऽपीत्यनुसंधत्स्वेति दिक् ।

एतेनैव **'यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोनुगच्छन्नि'**ति स्मृति**'रत एव चोपमा सूर्यकादिवदि'**ति सूत्रं च व्याख्यातं ज्ञेयम् । नन्विदमसङ्गतम् । श्रीभागवते **'नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्री'**रिति मुखदृष्टान्तस्याऽप्युक्तत्वात् । पुराणस्य श्रुत्यर्थनिर्णायकत्वेन तदनुसृत्यैव श्रुतितात्पर्यकथनस्यौचित्यादिति चेत् । न । अत्रापि मुखश्रियः प्रतिमुखश्रीप्रयोजकत्वमात्रमुच्यत इति, न जीवस्य प्रतिबिंबत्वमत्राऽप्यर्थः । पूर्वपादत्रयेण तथार्थनिश्चयात् । **'आभास एव चे'**ति सूत्रं तु यथा ब्राह्मणब्रुवे ब्राह्मणाऽऽभासप्रयोगो निखिलतद्धर्माभावतस्तथाऽखिलब्रह्मधर्माऽभावाच्चित्त्वेन साजात्याच्च

---

[1] नत्वित्त्यादित्स्वेत्यन्ता पङ्क्तिः खगपुस्तकयोर्नास्ति ।

ब्रह्माभास इतिपरम् । अतः श्रुत्यर्थविचारेऽपि प्रतिबिंबपक्षोऽवच्छिन्नपक्षश्चेति द्वावप्यसङ्गतौ ।

तर्ह्यस्तु कौन्तेयस्य राधेयत्ववदविकृतस्य ब्रह्मण एव स्वाऽविद्यया जीवभावः । तथा च स्वाऽविद्यया भ्रान्तं संसरद्ब्रह्मैव जीवः । इदं च सूत्रकारस्याऽपि संमतम् । 'अवस्थितेरिति काशकृत्स्न' इति सूत्रे तथानिर्णीतत्वात् । एवं सति 'तत्त्वमसि' 'अयमात्मा ब्रह्म विज्ञानमय' इत्यादि वाक्यान्यपि संगमिष्यन्तीति चेत्—

असङ्गतमेतदपि । अविद्याया अनादित्वोपगमाद्ब्रह्मणः सर्वस्याऽविकृतस्य जीवभावे ब्रह्माऽपलापाऽऽपत्तेः । अतोऽवस्थान्तरमङ्गीकुर्वाणेनाऽपि प्रदेशभेदेनैवाङ्गीकार्यम् । तथा सति पूर्वोक्तदूषणापत्तेः । अथाऽवास्तवत्वाज्जीवभावस्योपदेशेन तन्निवृत्तौ न ब्रह्माऽपलाप इति चेत् । न । उपदेशेन जीवभावनिवृत्तेरेव दुर्लभत्वात् । स्वाऽविद्यया जीवभावमापन्नस्यैव सर्वप्रपञ्चकल्पकत्वेनोपदेशवाक्यस्याऽपि तत्कल्पितत्वे तेन तदज्ञाननिवृत्तिदौर्लभ्यात् । स्वाऽज्ञानकल्पितरजतादेः स्ववाक्येन निवृत्त्यदर्शनात् । तदनिवृत्तौ च जीवभावाऽनिवृत्तेः । वाक्यस्योक्तरूपत्वात्तदुक्तब्रह्मस्वरूपेऽप्यनाश्वासप्रसङ्गेन सर्वविप्लवापत्तेश्च—

नन्वंशत्ववादोऽप्यसाधुः । अंशपदार्थस्य विचारे तेनाऽप्यनिर्वाहात् । अंशो नाम कारणमवयवो वा भागो वा कार्यं वा ? । नाद्यः । पटांशस्य तन्तोः पटकारणत्ववज्जीवस्यापि ब्रह्मकारणतापत्तेः । न द्वितीयः । शरीरवद्ब्रह्मणः सावयवत्वाऽऽपत्तेः । न तृतीयः । परिशेष्याद्द्रव्यैकदेशस्यैवाऽत्र भागरूपत्वे ब्रह्मणोऽपि नश्वरत्वाऽऽपत्तेः । न तुरीयः । जीवस्याऽनित्यत्वाऽऽपत्तेः । अतो मुख्यार्थग्रहणस्याऽस-

क्यत्वा'न्ममैवांशो जीवलोके जीवभूतः सनातन' इत्यादावौपचारिक एवांशपदार्थो ग्राह्यः। तथा सति घट्टकुट्यामेव प्रभास्यतीति चेत्। न प्रभास्यति। अवयवरूपार्थस्य ग्रहणात्। 'पादोस्य विश्वा भूतानीति' श्रुतावयवयववाचिपादपदोपादानेन तथानिर्णयात्। न च निष्कलादिश्रुतिव्याकोपः। विरुद्धधर्माश्रयत्वेन निरवयवत्वसावयवत्वयोस्तत्राऽविरोधात्। ब्रह्मणः श्रुत्येकसमधिगम्यत्वात्। तत्र 'निष्कलं निष्क्रियमि'ति 'यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणा' इत्याद्युपक्रम्य 'सर्व एवाऽऽत्मानो व्युच्चरंती'त्युभयथाऽपि निरूपणात्। एकतराग्रहे वाक्यान्तरे लक्षणाप्रसङ्गात्। संभवत्यामेवं तात्पर्योपपत्तौ तदनुपपत्तिमुद्भाव्य लक्षणामाश्रयतो निष्प्रमाणकानुपपत्तिकल्पनमुख्यार्थबाधयोरापत्तेश्च। न चात्यन्ताऽभेदबोधकश्रुतिविरोधः। 'बहुस्यामि'तीच्छयैव भेदात्।

यत्तु जीवस्य व्यापकत्वमङ्गीकृत्य भेदाऽभेदश्रुत्युपपादनायाऽभेदश्रुतिष्वविभागलक्षणाभेदं व्युच्चरणश्रुतौ च विभागेनाऽभिव्यक्त्या जीवब्रह्मणोः पितापुत्रवत्कार्यकारणभावं स्वपारं रूढत्वं चाभिव्यक्तिपदार्थं केचिदाहुः। तदपि पूर्वोक्तरीत्या शुद्धाऽभेदे ततो बहुस्यामितीच्छया सृष्टौ व्युच्चरणेन भेदे, मुक्तौ च 'ब्रह्म वेद ब्रह्मैव भवती'ति सावधारणश्रुत्या चाऽभेदे संभवति सत्यन्याय्यमेव। पितापुत्रन्यायोपि तथा। श्रुतौ विस्फुलिङ्गदृष्टान्तेन क्षुद्रा इति विशेषणेन गत्यर्थधातुप्रयोगेण च दार्ष्टान्तिकेषु प्राणाद्यात्मपर्यन्तेष्वणुत्वस्य पृथग्देशवर्त्तित्वव्यञ्ज्यविभागस्य गतेश्च विवक्षितत्वा-

ऽवगमात् । अन्यथा प्राणादिषूत्पत्तेरात्मसु च स्वव्यापाराऽविष्टत्व-रूपाभिव्यक्तेरङ्गीकारे कल्पनावैरूप्यापत्तेः । युगपद्वृत्तिद्वयाङ्गीकारापत्तेश्च । किञ्च पितापुत्रस्थलेऽपि न चेतनयोरंशांशिभावोऽपि तु शरीरयोरेव । '**अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमि**'ति मंत्रेण तथा निश्चयात् । इतरे तु जीवस्य ब्रह्मांशत्वमेकदेशरूपमिच्छन्ति । एकवस्त्वेकदेशत्वं ह्यंशत्वमिति । तच्चैवं व्याकुर्वतो यथा भाभास्वतोर्गोत्वगवोर्देहदेहिनोर्भागोत्वदेहा भास्वद्गोदेहिनां विशेषणत्वेनांशाः '**विशेषणांशो विशेष्यांश**' इति विवेचकव्यवहारसिद्धास्तथा जीवोपि '**यस्यात्मा शरीरमि**'ति श्रुतेर्ब्रह्मविशेषणत्वेन ब्रह्मांशः । एवं च विशेषणत्वविशेष्यत्वकृतं स्वभाववैलक्षण्यमाश्रित्य भेदनिर्देशाः पृथक्स्थित्यनर्हविशेषणानां विशेष्यपर्यन्तत्वमाश्रित्य चाऽभेदनिर्देशाश्च मुख्यत्वेनैवोपपद्यन्त इति । तदपि पूर्वोक्तरीत्या ब्रह्मणि परिच्छेदत्रयातीतत्वस्य जीवे चांशत्वस्य सिद्धौ सर्वश्रुतीनां मुख्यवृत्त्यैव बोधकत्वसिद्धेर्नासभ्यं रोचते ।

अन्ये तु '**चन्द्रमण्डलाच्छतांशो गुरुमण्डलः**' '**सूर्यांशः कर्ण**' इत्यादौ तद्भिन्नत्वे सति तत्सदृशत्वं, तत उत्पन्नत्वं वाऽऽदाय यथांशत्वव्यवहारस्तथा जीवेपि ब्रह्मांशव्यवहारं समर्थयन्ते । तत्तु अभेदश्रुतिं जीवनित्यत्वश्रुतिं चोपचारितां करोतीत्युपेक्ष्यम् । तस्मादुभयविधश्रुतिबलाद्ब्रह्मावयवरूपत्वेनैव जीवो ब्रह्मांशः । न च जीवदुःखादिना ब्रह्मणो दुःखित्वाद्यापत्तिः । ब्रह्मणः सर्वात्मकत्वेनाभिमानाऽभावात् । किंबहुना '**एतꣳहवाव न तपति किमहं**

---

१ ह्यव्यापारानि, इति खगपाठः ।

साधु नाकरवं किमहं पापमकरवमिति' 'स य एवं विद्वानेतेनात्मान ँस्पृणुत' इति श्रुतेर्विदुषो जीवस्याऽपि यत्र दुःखाद्यभावस्तत्र ब्रह्मणः का शङ्का । नाग्नेर्हि तापो न हिमस्य तत्स्यादिति न्यायाच्चेति सर्वमनवद्यम् ॥

इति श्रीवल्लभाचार्यवाचामाशयगोचरम् ।
प्रतिबिंबादिरूपत्वखंडनं विशदीकृतम् ॥ १ ॥

इति श्रीवल्लभाचार्यमतवर्तिश्रीमद्वल्लभनन्दनचरणपद्मपराग-पूरितहृदयश्रीपीताम्बरतनुजपुरुषोत्तमकृतावतारवादावल्यां द्वादशः प्रतिबिंबत्वखंडनवादः समाप्तः ॥

---

॥ श्रीः ॥

॥ श्रीकृष्णाय नमः ॥

## पुष्टिमार्गसिद्धान्तवाङ्मालायां
### गोस्वामिश्रीमत्पुरुषोत्तमविरचित
## आविर्भावतिरोभाववादः ।

यदाविर्भाव आनन्द आविर्भवति सर्वतः ।
तिरोभवन्ति सन्तापास्तं श्रये गोकुलेश्वरम् ॥ १ ॥

नन्विदमनुपपन्नम् । कार्योत्पत्तिनाशावनुपगच्छतां कार्याऽऽविर्भावतिरोभावयोरपि दुर्निरूपत्वात् । तयोरनुभवयोग्यतातदयोग्यतात्मकत्वात् । उत्पत्तिमन्तरेण कार्यवर्त्तमानतायाश्चाशक्यवचनत्वात् । अन्यथा प्रागभावदशायामपि तत्प्रत्यक्षप्रसङ्गात् । न च प्रागभाव

एव प्रतिबन्धक इति वाच्यम् । तस्य कारणत्वात् । न च नियताऽवधिकत्वेन कार्यस्य कारणे सत्ताऽनुमातुं शक्येति वाच्यम् । तत्प्रागभावसत्तयैव नियताऽवधिकत्वसिद्धेः ।

किञ्च, कारणे कार्यसत्तायां तत्पश्चाद्भावित्वेनाऽभिमतस्याऽपि कार्यस्य कारणात्पूर्वं सत्वेन सिद्धत्वाद्दर्शनयोग्यत्वमात्रं वाच्यं, न तु तज्जननम् । तथा सति शक्तस्य शक्यकरणाऽभावादशक्तिप्रसक्तेः । ततश्च कार्योऽनुत्पादस्याऽऽकस्मिकवादस्य वा प्रसङ्गः । एवं सहजशक्त्यसिद्धौ कार्यकारणभावस्याऽप्यसिद्धेः कारणादिपदेषु तत्तदभिधायिकायाः पदशक्तेरप्यपायः । ततश्च लौकिकवैदिकव्यवहारोच्छेदापत्तौ प्रयोजनस्याऽप्यभावे प्रसक्ते आधेयशक्तेरपि वैयर्थ्यापत्तिश्च । न च कारणाद्बहिर्भाव उत्पत्तिरभ्युपेयत एवेति न दोष इति वाच्यम् । यत्रैकस्मिन् फले बहूनि बीजानि तेभ्यश्चाऽनन्तानि फलानि, तेभ्यश्च तथैव बीजानीत्येवं परम्परा, तत्रैकस्मिन् मूलभूते फले वा बीजे वा तावतां सत्वाद्युगपद्बहिर्भावापत्तेः । क्रमाऽसङ्गत्यापत्तेश्च । न च निमित्तान्तरसमवधानाऽभावान्न तदा कार्यकारणप्रवाहः । नाऽपि विमतः प्रवाहोऽनादिः प्रवाहत्वाद्बीजाङ्कुरवदित्यनुमानेनाऽनादित्वमुपगम्य क्रमोपपत्तिरिति वाच्यम् । हेतोः साध्यसमत्वात् । अस्यैव प्रवाहरूपताया विचार्यत्वात् । यत्र गोधूमादिबीजनाशे वेणुगोधूमैर्गोधूमानां लुलायशृङ्गात्कदल्याः काशादिक्षोश्चाङ्कुरोत्पत्तिस्ततस्तेभ्यो गोधूमादिभ्यो वेण्वाद्यनुत्पत्तिस्तत्रादौ पश्चाच्च व्यभिचारात् । विमतः प्रवाहः सादिः प्रवाहत्वात् वैणवगोधूमप्रवाहवदिति हेतोः साधारणत्वाच्च । न च व्यतिरेकदृष्टान्तेन निर्वाहः । क्षुद्रनदीप्रवाहादावनादित्वाऽभावेऽपि प्रवाहत्वदर्शनेन

व्यतिरेकव्यभिचारात् । न च महत्त्वेन हेतौ विशेषिते न कोऽपि दोष इति वाच्यम् । गङ्गादृष्टान्तेन तत्र व्यभिचारात् । पुराणादौ गङ्गोत्पत्तिस्मरणात् । शब्दस्य प्रमाणत्वात् । तस्मान्न क्रमसङ्गतिः ।

अथोत्पत्तिर्न बहिर्भावः । किन्तु मृदवस्था गता पिण्डाऽवस्था जाता, सा गता घटावस्था जातेत्यादिप्रतीतेस्तन्त्ववस्थाऽनुपमर्देन पटावस्थादर्शनाच्चावस्थाविशेष एव सेति विभाव्यते । तदाप्यवस्थाविशेषस्य कादाचित्कत्वाज्जन्यत्वं वाच्यमेव । तत्सुतरामेव दुर्वचम् । उत्पत्तेरनिरुक्तत्वात् । अवस्थान्तरं कार्यमित्यप्यसङ्गतम् । तथा सति पुत्रोऽपि पित्रवस्थान्तरं स्यात् । तथा च पिण्डावस्थावत्पितुर्नाशः स्यात् । तन्तुवदनाशाङ्गीकारेऽपि सर्वो व्याप्रियेत । अतोंऽश एव पुत्रः । एवमङ्कुरादिरपि बीजांश एव । नत्ववस्थान्तरम् । समानन्यायात् । तथा च विभागेन बहिर्भावद्वारा हेतुत्वमात्रं बीजादौ सेत्स्यति । तावताऽपि नाऽभिमतसिद्धिः । बहिर्भावरूपाया उत्पत्तेः पूर्वमेव दूषितत्वात् । अतो वैशेषिकप्रतिपन्न उत्पत्तिवाद एव साधीयान् ।

अथाऽस्तु या काचिदुत्पत्तिस्तथापि भवद्रीत्या तावाविर्भावतिरोभावौ दुर्वचौ । तथाहि—तौ नित्यावनित्यौ वा ? । नाद्यः । घटादिवस्तूपलम्भाऽनुपलम्भयोः सातत्यप्रसङ्गात् । न चेष्टापत्तिः । तयोर्विरुद्धत्वेन सहावस्थानाऽयोगात् । ग्रहिलतया तथाङ्गीकारे वस्त्वनिर्वाच्यत्वप्रसङ्गात् । घटाद्याविर्भावनाय तिरोभावनाय च साधने प्रवृत्तिदर्शनेन प्रत्यक्षविरोधात् । तादृग्विरुद्धधर्माश्रयभूतस्य धर्मिणोऽसिद्धौ तयोरप्यशक्यत्वेन शून्यवादापत्तेश्च । न च घटाद्युपलम्भाऽनुपलम्भयोः कादाचित्कत्वं तत्तत्कारणस्तोमपरम्परा-

कादाचित्कत्वेन समर्थनीयमिति वाच्यम् । अन्तत ईश्वरेच्छापर्यन्तं धावने तस्या अपि नित्यत्वेन तद्दोषतादवस्थ्यात् । एकतरपक्षपात इतरोच्छेदप्रसङ्गाच्च । तयोर्घटादिवस्तुधर्मत्वेन धर्मिणां कादाचित्कत्वे धर्मभूतयोस्तयोर्नित्यत्वस्य गन्धादिवदशक्यवचनत्वाच्च । न च जातिवददोष इति वाच्यम् । तद्वदेव सामान्यधर्मत्वप्रसङ्गात् । न चेष्टापत्तिः । सर्वस्य युगपद्दृश्यत्वाऽदृश्यत्वप्रसङ्गात् । न चेच्छया निर्वाहः । दत्तोत्तरत्वात् ।

न द्वितीयः । कार्यान्तरवत्तयोरपि स्वकारणाद्बहिर्भावस्य स्वकारणेऽन्तर्भावस्याऽवश्यवाच्यत्वेन पुनस्तदीययोरपि तयोस्तथात्वेनाऽनवस्थापातात् । नचाऽनादिरनवस्था न दोष इति वाच्यम् । तथाप्यनिर्वाहात् । तेषामनित्यत्वेन कार्यत्वादाद्यक्षणसम्बन्धस्याऽवश्यवाच्यत्वेन क्षणानां चोपाधिसम्बन्धाज्जायमानत्वेन तत्राप्युक्तविकल्पैस्तेषां क्षणघटकताया एव दुर्निरूपत्वात् । तेषां च स्वस्वकारणादेव बहिर्भावादेर्वाच्यत्वेन कारणानां चानुपलभ्यमानत्वेनाऽप्रामाणिकत्वाच्च । अनादित्वस्य 'बहु स्यामि'त्यादि श्रुतिविरुद्धत्वाच्च । अतः सत्कार्यवादमालम्ब्याऽऽविर्भावतिरोभावसमर्थनं न कथमपि सुघटमिति प्राप्ते—

**उच्यते, तौ हरेः शक्ती नियताविच्छया ततः ।**
**धर्माऽधर्मस्य संसिद्धेः कारणं च न दुर्वचम् ॥ २ ॥**

तथाहि—कारणगतौ शक्तिविशेषावेतौ । न चातिरिक्तशक्तिकल्पने मानाद्यभावः शङ्क्यः । तन्तुतुरीवेमादिभ्यः पटोत्पत्तिदर्शनान्मृद्दण्डचक्रादिभ्यश्च घटोत्पत्तिदर्शनात्तत्र तत्र तज्जननशक्तेर्निश्चयात् । सा च न स्वभावो, नाऽपि स्वरूपम् । तथा सति तस्य सार्वदिक-

त्वाच्छीर्णेभ्योऽपि तन्त्वादिभ्यो घटाद्युत्पत्तिप्रसङ्गात् । भर्जितबीजेभ्योऽप्यङ्कुरोत्पत्तिप्रसङ्गाच्च । मणिसमवधानेऽपि वन्हेस्तृणादिदाहप्रसङ्गाच्च । अतः कालेन, भर्जनेन, च नाश्या मणिसमवधानप्रतिबध्या च काचित्स्वभावात्स्वरूपाच्चातिरिक्तैव साऽङ्गीकार्या । ननु तन्त्वादीनामविशीर्णत्वेन बीजानां चाऽभर्जितत्वेन रूपेणैव कार्यजननदर्शनाद्रूपभेदमात्राऽऽङ्गीकारेण निर्वाहेऽतिरिक्तशक्तिकल्पनं गुरुभूतम् । एवं च वह्निस्थलेऽपि मणेः प्रतिबन्धकत्वेन तदभावस्य प्रतिबन्धकाऽभावरूपत्वात्तस्य सहकारित्वेन निर्वाहाच्च ज्ञेयम् । न च प्रतिबन्धकत्वं नाम कारणीभूताऽभावप्रतियोगित्वं तदभावस्य च करणत्वमिति कल्पनाद्वयेन गौरवमिति वाच्यम् । अतिरिक्तशक्तिवादेऽपि तन्नाशकतत्प्रतिबन्धकयोस्तवाऽप्यावश्यकत्वेन च तौल्यात् । वस्तुतस्तु न मण्यादीनां प्रतिबन्धकत्वं न वा तदभावस्य कारणत्वम् । किन्तूत्तेजकाऽभावविशिष्टमण्यभावविशिष्टवह्नित्वेन वह्नेरेव कारणत्वमित्येकेनैव कार्यकारणभावेन निर्वाहाल्लाघवमेवेत्यतिरिक्तशक्तिकल्पनाऽजागलस्तनप्रायैवेति चेत् । मैवम् । गुरुशरीरकारणतावच्छेदकप्रवेशेनाऽत्रापि गौरवाऽनपायात् । अवच्छेदकशरीरे मण्यभावस्य प्रतिबन्धकाऽभावत्वेन प्रवेशे प्रतिबन्धकस्य च पूर्वोक्तलक्षणकत्वेऽत्राऽपि कार्यकारणभावद्वयकल्पना, प्रतिबन्धकल्पना चेति कल्पनात्रयाऽऽपत्तेः । किं सामाग्रीहेतुत्वं प्रतिबन्धकत्वमिति लक्षणकत्वेऽपि कल्पनाद्वयेन पूर्वोक्ततौल्यात् । मण्यभावत्वेन प्रवेशे तु नानाकार्यकारणभावकल्पनापत्त्याऽत्यन्तमेव गौरवात् । मंत्रौषधादिभिरपि दाहाऽभावदर्शनात् । यत्किञ्चिन्मणेः सद्भावे दाहदर्शनेन व्यभिचाराऽऽपत्तेश्च । एवमुत्तेजकानामपि नानात्वेन

तत्तत्स्वरूपेण प्रवेशे पूर्ववदेव गौरवात् । यत्किञ्चित्त्वेन प्रवेशे यावत्तदभावविशिष्टमण्यभावविशिष्टवह्नेर्दाहं प्रत्यकारणत्वात्ततो दाहाभावप्रसक्तेः । यावत्त्वेन प्रवेशे च यत्किञ्चिदुत्तेजकविशिष्टमणिसत्त्वेऽपि दाहाभावापत्तेः । तादृशतद्विशिष्टवह्निना दाहदर्शनात्तथात्वेन वा, यावत्तदभावविशिष्टमण्यभावविशिष्टवह्नित्वेन वा कारणतेति सन्देहाऽनपायेन कार्यकारणभावशरीरस्य तावदुत्तेजकतदभावमणितदभावतत्तद्वैशिष्ट्यज्ञानाधीनतया तादृशतच्छरीरज्ञानस्य दौर्घट्येन कारणताग्रहस्यैव दुर्लभत्वाच्च । अतो दाहं प्रति वह्नित्वेनैव कारणता । लाघवात् सर्वजनीनत्वाच्च । अतो मणिप्रतिबध्या स्वभावादतिरिक्ता शक्तिः काचिदभ्युपेयैव । एवं बीजानामप्यभर्जितत्वेनैवं न कारणता । दावाग्निदग्धेभ्योऽपि वेत्रबीजेभ्यः कदलीकाण्डजननस्य भामतीनिबन्धे प्रदर्शितत्वात् । वराहशोणितमेदःसेचितकदल्या दाडिमफलजनकत्वस्य तरुचिकित्साग्रन्थे चित्रीकरणे प्रसिद्धत्वाच्च । अतस्तत्राऽपि भर्जनेन काचिन्नाश्यते काचिदाधीयत इत्यवश्यं मन्तव्यम् । वस्तुतस्तु कार्यकारणभावपक्षेऽपि प्रसिद्धरूपाऽतिरिक्तरूपान्तरस्योत्पत्त्यादिशालिनोऽवश्यकल्पनीयतया कार्यकारणभावशरीरस्य तावन्नामन्येव कलहः पर्यवस्यति, नतु स्वरूप इति मुधैवाऽयमाग्रह इति दिक् ।

अतो बीजादिपरिणामस्थलेऽपि सैव मन्तव्या । न चोक्तदूषणग्रासः । उक्तरीत्या सिद्धाया अपि तस्या भगवदिच्छया नियतत्वात् । न च तस्या अपि नित्यत्वात्तद्दोषतादवस्थ्यम् । इदमस्मिन् कालेऽस्मिन्देशे एवमस्माद्बहिर्भवत्विदं चास्मिन्नन्तर्भवत्विति तदाकारस्य फलबलेन कल्पनीयत्वात् ।

नन्वेवं सतीश्वरेच्छया वस्तूत्पत्तिरेवाऽङ्गीक्रियतामिति चेत्। मैवम्। असत्कार्यवाद उत्पत्तेरशक्यवचनत्वात्। तथाहि—उत्पत्तिर्नाम प्रागभावो वा धर्मान्तरं वा?। नाऽद्यः। तस्याजन्यस्य कार्यप्राक्कालवर्तित्वेनेदानीं घटोत्पत्तिर्भविष्यतीति प्रतीत्यभिलापयोर्बाधप्रसङ्गात्। नान्त्यः। तस्यैकनिष्ठत्वे कार्यानुत्पाददशायां कार्यस्याऽसत्वात्कारणादिनिष्ठत्वमेव तस्य वाच्यं, तथा सति तद्विषयिण्युत्पद्यत इति प्रतीतिः स्यात्। द्विनिष्ठत्वेऽपि संयुक्ताविमाविति वदुत्पद्येते इमाविति प्रतीतिः स्यात्। आद्यक्षणे घटादिरूपप्रतियोग्यभावेन संयोगाऽभावप्रतीतिवदुत्पद्यत इति प्रतीतिश्च न स्यात्। न च 'दशदिनान्यतीयुः, षड्भिः रहोभिर्गन्ते'त्यादौ भूतभव्यदिवसेष्वसत्स्वपि संख्यारूपो धर्मो यथोपेयते तथोत्पत्तिरप्यनुत्पन्नघटाद्याधाराऽभ्युपेयेति वाच्यम्। तेषां दिनानामपि कालचक्रे सूर्यपरिस्पन्दवशेन तत्तद्वत्सरर्तुगततया पुनः पुनः परिवर्तमानानां सतामेव संस्कारादिनोपनये तत्राऽपेक्षाबुध्या संख्याकल्पनस्य शक्यत्वेऽप्युत्पत्तेरकाल्पनिकत्वेनात्र तथा वक्तुमशक्यत्वात्।

अथाऽपेक्षाबुध्या तत्र संख्या जन्यत एव न कल्प्यत इति चेत्। न। समवायिनं विना केवलनिमित्तेन कार्यजननस्य क्काप्यसिद्धत्वेनात्र तथा वक्तुमशक्यत्वात्। न च चिन्तामण्यादौ निरुपादानकदधिवसनसुवर्णादिजननस्य दृष्टत्वान्न दोष इति वाच्यम्। अविक्रियमाणानां तेषामेवोपादानत्वात्। योगिवत्सामर्थ्यविशेषेण दध्यादिजनकभूतभेदाकर्षणस्य तत्र शक्यवचनत्वाच्च। अनुपादानकसृष्ट्यङ्गीकारे **'सर्वस्य समवाय्यसमवायिनिमित्तजन्यत्वमि'**ति वैशेषिकादिसिद्धान्तहानेश्च।

किञ्च संख्याया इवोत्पत्तेरपि जन्यत्वात्तस्या अप्युत्पत्तिः स्वीकार्या । तथा सति निष्प्रमाणिकाऽनवस्थापत्तिस्तत्तत्कारणादिकल्पनागौरवग्रासश्च । न चोत्पत्तिर्जातेत्यादि प्रत्ययाऽनुरोधादुत्पत्तेरुत्पत्तिमङ्गीकृत्य विशेषाणां स्वतो व्यावर्तकत्ववत्सा स्वत एवेति वाच्यम् । आत्माऽऽश्रयाऽऽपत्तेः । विशेषाणामप्युपगमाऽतिरिक्तप्रमाणरहितत्वेन दृष्टान्ताऽभावाच्च । न च वर्तमानप्रागभावप्रतियोगित्वमेव सेति वाच्यम् । तस्य पूर्ववाद एव दूषितत्वात् । कारणावस्थाविशेषेणैव निर्वाहात् । प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेन स्वरूपद्वयात्मकत्वाद्घटस्वरूपस्य तदानीमभावेन तस्याऽपि वक्तुमशक्यत्वात् । न च भाविनीं सत्तामादाय तत्र प्रतियोगित्वं शक्यवचनम् । धर्मिणोः सत्वेन भाविसत्ताया निश्चयाऽभावेन तथा वक्तुमशक्यत्वात् ।

नाऽप्याऽऽद्यक्षणसम्बन्धः सेति वाच्यम् । प्रतियोगिसत्तां विना क्षणसम्बन्धस्याऽशक्यवचनत्वात् । तस्याऽप्याद्यक्षणसम्बन्ध एवोत्पत्तिपदार्थ इतिज्ञप्तावात्माश्रयाच्च । न चेश्वरेच्छयाऽसदेवोत्पद्यत इति वाच्यम् । मानाऽभावात् । मायिकत्वाऽऽपाताच्च । घटो भवतीति प्रयोगाऽनुपपत्तेश्च । प्रथमान्तविशेष्यकशाब्दबोधस्य तदभिमतत्वात् । क्रियाश्रयत्वस्य च कर्तृत्वाद्भवनक्रियाश्रये घट एवाऽऽख्यानाऽभिहिते लडर्थस्य कालस्य समानपदोपात्तत्वेनान्वयात्तदानीं घटाऽनङ्गीकारे तस्याऽशक्यवचनत्वात् । न च व्यापारस्याऽपि समानपदोपात्तत्वेन कालाऽन्वयस्य तत्र शक्यवचनत्वान्न प्रयोगाऽनुपपत्तिरिति वाच्यम् । एवमप्याश्रयवर्तमानत्वमन्तरेण व्यापारवर्तमानताया अनुत्पाद्यमानत्वाद्घटादिसत्ताया अर्थादेव सिद्धेः । पदान्तरोपात्तफलान्वयपक्षेपि

सत्तारूपस्योत्पत्तिरूपस्य वा यस्य कस्याऽपि फलस्य धर्मत्वेन धर्मिणं विनाऽसिद्ध्या धर्मिणोऽपि सत्ताया अर्थादेव सिद्धेः । न च कालस्य कर्त्तर्यन्वये उत्पद्यमानोत्पत्त्यनन्तरमपि कालाऽन्वितस्य कर्तुर्घटस्य सत्वा'दुत्पद्यते घट' इति प्रयोगापत्तिरिति वाच्यम् । व्यापारादि-द्वारैवाऽन्वयाङ्गीकाराद्व्यापारादितिरोभावाद्द्वाराभावेन कालान्वयाऽभा-वात्तादृशप्रयोगाऽभावस्याऽनायासेन सिद्धेः ।

तस्मादसत उत्पत्तिर्न युक्तिमधिरोहति ।
अतो धर्मी पूर्वसिद्धः सर्वथैवाऽभ्युपेयताम् ॥ १ ॥
तथा नष्टो घट इति व्यवहारस्य सिद्धये ।
तदाप्युपेयस्तेनाऽयं धर्मी सिद्धः सनातनः ॥ २ ॥
एवं च धर्मिनित्यत्वे ब्रह्मतादात्म्यमस्य च ।
बोध्यं 'पुरुष एवेदं' 'स वै सर्वमिदं जगत्' ॥ ३ ॥
'इदं सर्वं यदयमात्मे'त्यादि श्रुतिदर्शनात् ।
तथा सति स भूतं स भव्यमेतच्छ्रुतेर्बलात् ॥ ४ ॥

तादृशव्यवहारेऽपि न क्षतिस्तस्य काचन ।
शक्तिस्तु सिद्धा प्राक् तेन शक्ताद्धेतोर्बहिः स्थितिः ॥५॥
आविर्भावस्तिरोभावस्तास्मिन्नेव स्थितिर्मता ।
अयं जनी प्रादुर्भावे नश चादर्शने इति ॥ ६ ॥
धात्वर्थदर्शनादर्थः पुष्टस्तेनाऽत्र कार्यता ।
कारणत्वं च सुघटं तत्प्रकारोऽधुनोच्यते ॥ ७ ॥

तथाहि—'परास्य शक्तिर्विविधैव श्रूयते' इति श्रुते'र्मयूरा-श्चित्रिता येन शुकाश्च हरितीकृताः । हंसाश्च श्वेतगरुतः स

मे विष्णुः प्रसीदत्वि'ति वाक्याच्च पूर्वोक्ता अपि शक्तयो भगवत एव । भगवतैव च विभज्य प्रजायेयेतीच्छया तत्र तत्र रूपे स्थापिताः ।

किञ्च आविर्भावतिरोभावावपि भगवतः शक्ती । **'आविर्भावतिरोभावौ शक्ती वै मुरवैरिण'** इतिवाक्यात् । आविर्भावतिरोभावशब्दौ च करणव्युत्पन्नौ, भावव्युत्पन्नौ च । तत्राऽऽद्ये पक्षे—आविः प्रकटं भावयति, उपादानान्तःस्थं कार्यं बहिः प्रकटं करोति या निमित्तगता उपादानगता च शक्तिः सा आविर्भावशब्दवाच्या । एवं तिरः अप्रकटं भावयति बहिष्ठं कार्यं उपादानान्तः स्थापयति या शक्तिर्नाशकगता सा तिरोभावशब्दवाच्या । द्वितीयपक्षे—आविर्भवनमाविर्भावस्तिरोभवनं तिरोभावः । तच्चाऽऽस्मिन् सृष्टिकालात्मके स्थूलोपाधौ तदवयवात्मकतत्तत्कालोपाधिनिमित्तके तस्य तस्य तथा तथा तत्तदुपलम्भो भवत्विति तदा तत्र तस्य तथा तन्मा भवत्वितीच्छाविषयत्वमिति फलति । तदपि त्रिविधम् ।

**अनित्ये जननं नित्ये परिच्छिन्ने समागमः ।**
**नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा ॥ १ ॥**

**'अनित्ये'** उत्पत्तिनाशरूपम् । तदुपपादितम्[1] । न चोत्पन्ने बहिर्भूतप्रतीत्यभावः शङ्क्यः । अङ्कुरादौ तथा प्रत्ययात् । न्यायसामान्येनान्यत्राऽपि शक्यवचनत्वाच्च । नित्ये परिच्छिन्ने जीवादौ गमाऽऽगमरूपम् । नित्याऽपरिच्छिन्ने भगवति प्राकट्यरूपम् । तेषां सर्वेषां स्वरूपभेदेऽप्यनया दिशा आविर्भावतिरोभावपदाभ्यां संग्रहः । एवं च यन्निष्ठाऽऽविर्भावशक्तिरूपाद्धर्माद्यस्याऽऽविर्भवनरूपधर्मिसिद्धिस्तस्य

---

१ 'अनित्येजनन'मित्यादि विद्वन्मण्डनकारिकाविवरणसमये उपपादितमित्यर्थः।

तत्कारणमित्युच्यते । यन्निष्ठतिरोभावशक्तिरूपधर्माद्यस्य तिरोभवनरूपधर्मसिद्धिस्तस्य तन्नाशकमित्युच्यते । एतेनैव कार्यं नाश्यं च व्याख्यातम् । तथैवोक्तरीतिकान्तर्भावबहिर्भावाख्यनाशोत्पत्तिशालित्वमेवाऽनित्यत्वमित्यपि । अनेनैव न्यायेनाऽऽविर्भावतिरोभावयोर्नित्यत्वं सदातनत्वं भगवद्रूपत्वं चावसेयम् । इच्छायाश्च नियामकत्वान्न तयोरुत्पत्त्याद्यर्थं कारणान्तरादेरपेक्षा । कालस्यापि तन्नियतत्वाद्यथायोग्यमेव विशेषणत्वमिति । यत्परिस्पन्दाऽवच्छिन्ने काल उत्पत्तिर्नाशश्च तस्य परिस्पन्द...... तिरोभावे तद्विशिष्टयोरुत्पत्तिनाशयोरपि तिरोभावादुत्पन्ने नष्टे च घटे नोत्पद्यते नश्यतीति प्रयोगोत्पत्तिः । एवं ब्रह्मवादे वृद्धिरपि कृशत्वतिरोभावसहितस्थूलत्वप्रादुर्भावः । अपक्षयस्तद्विपरीतः । विपरिणामोऽपि पूर्वरूपरसादितिरोभावसहकृतो रूपरसान्तरादिप्रादुर्भाव एव । सत्ता तु नैसर्गिक्येवेति । ब्रह्मोपादानकसृष्टिस्त्ववस्था । मुख्याया लीलासृष्टेस्तु नित्यत्वेनाऽभिन्नत्वात्प्राकृताऽप्राकृताभ्यां लीलासम्पत्तिः । तृतीयस्या ब्रह्मविवर्तभूतायाः प्राकृतत्वेन विकारित्वात्प्रथमसमयसंसर्गी भावविकार उत्पत्तिः । चरमसमयसंसर्गी भावविकारो नाशः । अस्त्यादयोऽपि तथा । तादृश्येव तत्रेच्छेति । चतुर्थ्यां तु ख्यातिरूपाः सर्वा इति न काचिदनुपपत्तिः ।

इति श्रीवल्लभाचार्यवाणीसूचितया दृशा ।
आविर्भावतिरोभावप्रपञ्चोऽयं विचारितः ॥ १ ॥

**इति श्रीवल्लभाचार्यचरणपरागप्रभावाऽधिगतसर्वसिद्धेः पीताम्बरसुतस्य पुरुषोत्तमस्य कृतावाविर्भावतिरोभाववादः सम्पूर्णः ॥**

---

॥ श्रीः ॥

श्रीकृष्णाय नमः



## पुष्टिमार्गसिद्धान्तवाङ्मालायां

### गोस्वामिश्रीमत्पुरुषोत्तमकृतः

# प्रतिबिम्बवादः ।



ज्योतिस्तमालनीलं करुणाशीलं मुदा स्तौमि ।
हरति तमोनिकुरम्बं यत्प्रतिबिम्बं स्वकीयानाम् ॥ १ ॥

नन्वेतदयुक्तम् । प्रतिबिम्बपदार्थस्यैवाऽभावात् । दर्पणादिसन्निधानदोषप्रतिहतपरावृत्तनायनकिरणस्य स्वमुखदर्शनमात्रेण दर्पणादौ प्रतिबिम्बाऽभिमानात् । न च प्राङ्मुखादेः प्रत्यङ्मुखादेः प्रत्यङ्मुखत्वादिदर्शनान्नैवमिति वाच्यम् । दर्पणोपाधिसन्निधानदोषजन्यस्येदृशज्ञानस्य भ्रमत्वात् । न च बिम्बभेदानुभवान्नैवमिति वाच्यम् । तस्यापि भ्रमत्वात् । दर्पणे मन्मुखं भातीति स्वमुखाऽभेदप्रत्यभिज्ञानेन तद्बाधात् । न च दर्पणे मन्मुखं नास्तीति ज्ञानादभेदज्ञानं भ्रम इति वाच्यम् । दर्पणे मुखसंसर्गमात्रबाधेऽपि तादृग्ज्ञानसंभवात् । न च दर्पणाद्युपाधिभिर्नयनकिरणप्रतिहतस्य तत्परावृत्तेश्च कल्पने गौरवमिति वाच्यम् । अतिरिक्तप्रतिबिम्बकल्पनाऽपेक्षयाऽस्य धर्मकल्पनस्य लघुत्वात् । न च दृष्टान्ताभावः । लतावदुपपत्तेः (?) । नचोपाधिप्रतिहतनयनकिरणानां परावृत्तप्रतिबिम्बग्राहकत्वनियमक-

त्पने प्रमाणाऽभाव इति वाच्यम् । प्रतिबिम्बवादिनापि नयनरश्मिपरावृत्तिमन्तरेण दर्पणे स्वमुखप्रत्यभिज्ञायाः समर्थयितुमशक्यत्वात् । पूर्वमनुभवाऽभावात् । न च नासादिदेशावच्छिन्नपूर्वानुभवादेव संस्कारोपपत्तिः । तावतापि नयनगोलकादिविषयकसंस्कारानुपपत्तेः । तटविटपिसमारूढादृष्टचरपुरुषप्रतिबिम्बभ्रमस्थले पूर्वानुभवस्याऽशक्योपादानत्वाच्च । एवं चोपाधिप्रतिहतनयनरश्मीनां परावृत्तप्रतिबिम्बग्राहकत्वेऽवश्यवक्तव्ये फलबलाद्दर्पणादिप्रतिहतानामेव परावृत्तप्रतिबिम्बग्राहकत्वं न शिलादिप्रतिहतानाम् । अनतिस्वच्छताम्रादिप्रतिहतानां च मलिनोपाधिसंबन्धदोषान्मुखसंस्थानविशेषाऽग्राहकत्वम् । साक्षात्सूर्यप्रेप्सूनामिवोपाधिसम्बन्धात्परावृत्तानां तेजसाल्पप्रतिघातः । प्रतिहतपरावृत्त्या सूर्यावलोकने च साक्षात्तदवलोकनइव नाशक्तिर्जलाद्युपाधिसंनिकर्षे केषांचिदवहतिः केषांचिच्चाप्रतिहत्या जलाघातस्य सिकतादिग्राहकत्वमिति कल्पनीयम् । कार्यलिङ्गकानुमानसिद्धत्वाच्च न प्रमाणाभाव इति सर्वथातिरिक्तप्रतिबिम्बकल्पनं न साधीय इति ।

अत्र केचित् चैत्रमुखाद्भेदेन तत्सदृशत्वेन पार्श्वस्थितैः स्पष्टं निरीक्ष्यमाणे दर्पणे तत्प्रतिबिम्बस्ततो भिन्न एव । स्वरूपतश्च मिथ्यैव । शुक्तिरजतवत् । न च दर्पणे स्वमुखप्रत्यभिज्ञाविरोधः । स्पष्टभेदद्धित्वप्रत्यङ्मुखत्वादिज्ञानविरोधेन प्रत्यभिज्ञायाः सजातीयविषयत्वात् । दर्पणे मम मुखमिति व्यपदेशादिभेदज्ञानस्याप्यर्थक्रियाकारित्वात्स्वच्छायमुखे स्वमुखव्यपदेशवद्गौणत्वात् । न च भेदज्ञानविरोधाद्भेदव्यपदेशस्यैव गौणत्वं शङ्कनीयम् । बालानां जिहासोपादित्सापर्यन्तस्य पुरुषान्तरप्रतिबिम्बविषयकभ्रमस्याऽपलपितुमशक्यत्वात् ।

नचार्थक्रियाकारित्वं न व्यपदेशमुख्यत्वनियामकं प्रेक्षावतामपि स्वमुखविशेषपरिज्ञानाय दर्पणाद्युपाधिदर्शनादभेदज्ञानस्याऽप्यर्थक्रियाकारित्वादिति वाच्यम् । भेदेपि प्रतिबिम्बस्य बिम्बसमानाकारत्वानियमपरिज्ञानादेवोपपत्तेः । यत्तु दर्पणे मुखं नास्तीत्यत्र संसर्गमात्रस्यैव बाधो न संसर्गिण इत्युक्तम् । तदसङ्गतम् । नेदं रजतमित्यत्रापि राजततादात्म्यमात्रस्यैव बाधापत्तेः । नचात्रेदमंशे रजतस्य तादात्म्येनाऽध्यस्तत्वान्नेदं रजतमित्यत्र तादात्म्येन रजतस्यैव बाधो न तादात्म्यमात्रस्य । इह तु मुखस्य सिद्धत्वाद्दर्पणे तत्संसर्गमात्रस्यैवाऽध्यासात्तन्मात्रस्यैव बाध इति वाच्यम् । इहापि दर्पणसंसर्गितया मुखाध्यासस्य शक्यवचनत्वान्नेदं मुखमित्यपि तत्संसर्गितया मुखबाधस्यापि तुल्यत्वात् । न च धर्म्यध्यासकल्पनागौरवदोषादसाम्प्रतत्वं संभाव्यम् । रजताभासकल्पनागौरववदस्यापि प्रामाणिकत्वात् । यश्च स्वनेत्रगोलकप्रतिबिम्बस्थले बिम्बापारोक्ष्योपायकल्पनाडम्बरः । सोपि गुरुर्दृष्टविरोधोऽप्रामाणिकश्च । जलादिसंसर्गे केषांचित्प्रतिहतिः केषांचिन्नेत्यत्र हेतोरनिर्वाच्यत्वात् । जलसम्बन्धेनापि प्रतिहन्यमानानामतिमृदूनां सकलनयनरश्मिप्रतिघातिकिरणसमूहजयपुरःसरं तन्मध्यगतस्यैव मण्डलदर्शनसामर्थ्यस्याऽपि दुर्वचत्वाच्च । जलसम्बन्धेनाऽपि प्रतिहन्यमानानां शिलासम्बन्धेनाप्रतिघाते प्रतिहत्य चापरावृत्तेः । परावृत्य च पृष्टस्यासंसर्गे । संसृज्य च तदसाक्षात्कारेपि हेतोस्तथात्वाच्च । न च दोषवशात्तदुपपत्तिः । दोषेणापि विशेषांशग्रहणमात्रप्रतिबन्धने संनिकृष्टधर्मिग्रहाप्रतिबन्धात् । शुक्तिरजतादौ तथा निश्चयात् । अन्यथा तत्रापि प्रतीत्यभावस्यैवाऽऽपातात् ।

किञ्च अवनतमौलिना सलिलं पश्यतः सलिलप्रतिहतनयनर-

रश्मीनां मुद्धमुतहम्य (?) साक्षादिव सूर्यबिम्बग्राहकत्वात् । तिर्यग्गतवलोकविलोकयतो ऋजुचक्षुषा दर्पणालोकने तत्प्रतिहतरश्मीनां चक्षुर्विक्षेपमन्तरेणापि पार्श्वस्थमुखग्राहकत्वं, तच्च वदनसाक्षीकरणाभावेऽप्युपाधिप्रतिहतानां प्रष्टाभाव्यवहित(?)ग्राहकत्वमपि दुर्वारम् । उपाधिप्रतिहतनयनरश्मीनां प्रतिकूलतया निवृत्तिनियमं विहाय यत्रैव बिम्बं तत्रैव गमनोपागमात् ।

तथा मलिनदर्पणे गौरस्यापि श्यामतया भानाद्विद्यमानस्यापि बिम्बगतगौररूपस्य वा चाक्षुषज्ञानानुपयोगितया पीतशङ्खभ्रमन्यायेनारोप्यरूपनैषिध्येनैव बिम्बमुखस्य चाक्षुषत्वनिर्वाह इति नीरूपस्यापि श्यामलवैशद्येन चाक्षुषप्रतिबिम्बभ्रमविषयत्वं दुर्वारम् । स्वतो नीरूपस्यापि नभसोऽध्यस्तनैल्यवैशद्येन चाक्षुषत्वसंप्रतिपत्तेः । तस्मात्स्वरूपतः प्रतिमुखाध्यास एव श्रेयानित्याहुः ।

अत्रोच्यते—

**तत्त्वं तु प्रतिबिम्बोऽस्ति शब्दात्प्रत्ययतस्तथा ।**
**विलक्षणत्वाद्भिन्नोयमन्येभ्यो मायिकत्वतः ॥ १ ॥**

**सकिन्नरान्किंपुरुषान्प्रत्यात्मेनासृजत् प्रभुः । मानयन्नात्मनात्मानमात्माभासं विलोकयन् । ते तु तज्जगृहु रूपं त्यक्तं यत्परमेष्ठिना । मिथुनीभूय गायन्तस्तमेवोषसि कर्मभिरिति** तृतीयस्कन्धे सृष्टिप्रकरणे प्रत्यात्मेन सृष्टिरुक्ता । प्रत्यात्मशब्दश्च प्रतेर्वीप्सायां सादृश्ये वा वर्तमानत्वे निष्पन्नः । वीप्सा चात्रात्माभासावलोकनादेव । आभासश्चात्र प्रतिबिम्ब एव । अङ्गुल्यादिसम्पर्केण चन्द्राद्याभासवदात्माभासावलोकनस्याऽशक्यवचनत्वात् । तथा सति मुखाद्य-

भानात् सादृश्यार्थकत्वेपि पदार्थान्तरमन्तरेण तस्याऽशक्यवचनत्वाच्च । अतः प्रत्यात्मपदेन प्रतिबिम्बसिद्धिः । उत्तरार्धे आत्माभासावलोककथनाच्च । अनतिरेक आभासपदवैयर्थ्यापत्तेः । आत्मानमवलोकयन्नित्यापत्तेश्च । अग्रिमश्लोके रूपत्यागकथनात्तत्प्रयुक्तमिथुनीभावस्य व्याख्यानाच्च । एवं **'यथा जलस्थ आभासः स्थलस्थेनावगृह्यते । स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थित**मित्यादावपि स्थलस्थत्वजलस्थत्वादिकथनात् । स्वाभासपदाच्च । **'प्रतिमुखस्य यथा मुखश्री'**रित्यादौ भेदनिर्देशाच्च । छायादानविधानाच्च । तस्मादतिरिक्त एव बिम्बात्प्रतिबिम्बः ।

**प्रतीतितस्तु तत्सिद्धिः परैरेवोपपादिता ।**
**सापि न्याय्या युक्तिमत्त्वान्नाधिकोऽतस्तदुद्यमः ॥ १ ॥**
**किञ्चाऽऽदर्शविशेषेपि चातुर्येण विनिर्मिते ।**
**प्रत्यस्त्रं स्वमुखं भाति तत्रोक्तोपयिकं तथा ॥ २ ॥**
**यतोऽस्त्रेभ्यः प्रतिहताः परावृत्य दृगंशवः ।**
**संसृष्टाः स्वमुखेनैकमीक्षेरन्नवदूनिते ॥ ३ ॥**

न च नेत्रगोलकानुभवाद्यनुपपत्तिः । आवरणशक्त्या तमस इव विक्षेपशक्त्या तादृग्गोलकादियुक्तमुखस्य मूलशक्त्या मायया तत्रोत्पादनात्स्वकीयत्वाभिमानसूष्णीषकुण्डलकेशादीनां स्वानुभूतानां साहचर्यदर्शनादेवोपपन्नः । किञ्चेतरेतरसंमुखयोर्मुकुरयोरन्तरं मुकुराऽनवस्था । सर्वान्तःस्थे च मुकुरे मुखादेः प्रतिबिम्बो दृश्यते । तत्र प्रतिहतिपरावृत्त्योर्मुखप्रतीतेश्चातिदुर्घटत्वाद्दर्पणद्वयातिरिक्तस्य प्रतिघातकस्याऽभावात् । एकतः प्रतिहत्य परावृत्य पुनरन्यतः प्रतिहत्य परावर्तनेऽपि तयोः पुनः पुनः प्रतिघातकत्वस्य दुर्वचत्वेन तदाद-

र्शद्वयातिरिक्तस्य प्रतिघातकस्य चाभावेन दर्पणद्वयातिरिक्तानां दर्पणानां तदन्तस्थमुखस्य यद्दर्शनं तस्य प्रतिबिम्बमन्तरेण सर्वथैव दुरुपपादत्वात् । किंचाऽदर्शोपरि केशादिस्थापने मुखं तावता विभक्तं दृश्यते । परावृत्तौ तत्सर्वथैवाऽनुपपन्नम् । मुखे व्यवधानाऽभावेन परावृत्तानामविभक्तग्रहस्याऽनिचायात् । न च केशादिप्रतिहतरश्मीनामग्राहकत्वानुपपत्तिरिति वाच्यम् । तथा सति हस्तादिना मुद्रितैकनयनस्यार्द्धमुखदर्शनप्रसङ्गात् । कतिपयरश्मीनामग्राहकत्वस्याऽपि तौल्यात् । तावतामेव पूर्णग्राहकत्वकल्पने चार्द्धस्य मुखस्य दर्पणसाम्मुख्ये पूर्णमुखदर्शनप्रसङ्गात् । शलाकाव्यवहिते स्थाल्युदके खण्डितमुखाऽवलोकनोत्तरं शलाकायास्तदुदकान्तःस्तलभागे प्रवेशने मुखमखण्डितमवलोक्यते । शलाकाचाऽन्तः सिकतादिवत् । तेनान्तर्जलमध्यदेशे प्रतिबिम्बोद्भव इति निश्चाय्यते । परावृत्यग्रहणे तु तन्न स्यात् । किं बहुना पराक्षिण स्वप्रतिबिम्बदर्शनात्स्वाक्षण्यपि तथैवेति निश्चयात् । प्रतिबिम्बोत्तरमेव सर्वस्य चक्षुर्गोचरीभाव इत्यपि सुधीभिरवधेयम् । नचाऽप्रतिबिम्बस्याऽङ्गीकारे तद्ज्ञानस्याऽध्यासत्वाऽनुपपत्तिः । तस्य भ्रमपर्यायत्वात् । लक्षणस्य त्वव्याप्तिग्रस्तत्वेनोपेक्षणीयत्वात् । न च लक्षणाऽभावे प्रतिबिम्बज्ञानस्य प्रमात्वापत्तिः । मायिकेतरविषयाऽजन्यत्वे संशयेऽतिव्याप्तिवारणाय पूर्वं सति मायिकविषयजन्यज्ञानत्वस्य भ्रमत्वात् । न च तमःस्थस्य बहिष्ठादर्शे प्रतिबिम्बाऽदर्शनाद्बहिष्ठपुरुषस्य तमःस्था-

---

१ अस्य ग्रन्थस्यैकमेव पुस्तकं मुम्बईस्थ गो. श्रीद्वारकेशमहाराजानामुपलब्धम् । ततश्च प्रतिपुस्तकाभावादशुद्धिबाहुल्यात्स्वबुद्ध्या शोधनाच्च भूयानशुद्धो भाग उर्वरितः ।

दर्शे प्रतिबिम्बदर्शनात्परावृत्तिरपि युक्तिसहेति वाच्यम् । तेजोऽभावे मायया तमोजननात्तेन बिम्बाऽवरणे प्रतिबिम्बाऽनुद्भवाद्दर्शनाभावसिद्धौ आलोकवति बिम्बस्यान्तरालिकतमसानावरणान्त उद्भवेऽज्ञानस्य विक्षेपानुकूलत्वात् । तमसोऽपि तदनुकूलत्वेन दर्शनस्य च सिद्धौ परावृत्तिर्युक्तेर्बाधितत्वात् । अतः प्रतीतितोप्युचितैव प्रतिबिम्बसिद्धिः । न चादर्शादिप्रतिहतसूर्यरश्मीनां परावृत्तिदर्शनाच्चक्षुरिन्द्रियस्याऽपि तैजसत्वेन तद्रश्मिपरावृत्तिरप्युचितैवेति वाच्यम् । इन्द्रियमात्रस्य राजसाहंकारकार्यत्वेन चक्षुषोऽतैजसत्वात् । तैजसत्वपक्षेऽपि प्रौढत्वाऽभावेन परावृत्त्यभावात् । अन्यथा तैजसत्रसरेण्वादिरश्मेरपि परावृत्तिकल्पनाप्रसङ्गात् । पूर्वोक्तदूषणापत्तेश्चेति दिक् ।

केचित्तु दर्पणादिषु प्रतिबिम्बं मुखच्छायाविशेषरूपत्वात्सत्यमेवेत्याहुः । तन्न । 'छायाप्रत्याह्वयाऽभासा असन्तोऽप्यर्थकारिणः' इत्येकादशस्कन्धे तस्याऽसत्यत्वकथनात् । न च घृते प्रतिबिम्बमवलोक्य दाने च्छायादानव्यपदेशात्प्रतिबिम्बोपि छायैवेतिशङ्क्यम् । कान्तिमादाय तथा व्यपदेशात् । अन्यथा पूर्वोक्तवाक्यस्य भेदनिर्देशविरोधात् । नचात्राङ्गुल्यादिसंपर्कजाऽऽभासो विवक्षित इति वाच्यम् । अर्थकारित्वलिङ्गविरोधात् । तेन कस्याप्यर्थस्याऽभावात् ।

इतरेतु प्रतिबिम्बस्य छायारूपत्वमयुक्तम् । शरीरावयवैः कियद्देशवर्तिन्यालोके निरुद्धे तत्र देशे छायात्मकस्य तमस एव छायात्वात्तस्य च नीलरूपत्वेन मौक्तिकमाणिक्यादिप्रतिबिम्बस्य सितलोहितरूप[वसुमोरूप]छायात्वस्याऽयुक्तत्वात् । तमोरूपछायारहितस्य तपनादिप्रतिबिम्बस्य तादृक्छायात्वाऽयोगाच्चेत्याहुः । तदप्य-

सङ्गतम् । छायापदस्य कान्तावपि रूढत्वात् । तां विहाय तमोरूपच्छायात्वस्य चक्षुष्मता वक्तुमशक्यत्वेन तमोरूपत्वमादाय दूषणस्याऽप्ययुक्तत्वात् । सत्यत्वदूषणं तु युक्तम् । इषीकाद्वयमात्रस्थूले निबिडावयव आदर्शादावेतावत्स्थूलस्थमुखादेर्निम्नोन्नतस्य स्थातुमशक्यत्वात् । यदा यत्रैकेन प्रतिबिम्बो दृश्यते तदैव तद्देशावच्छेदेनान्यैर्न दृश्यत इतोपि सत्यत्वस्याऽशक्यवचनत्वाच्च । द्रव्यत्वोद्भवनमपि छायायाः कान्तिरूपत्वादेव निरस्तम् । आरम्भकपरिणामिनस्तदुत्पत्तिनाशादेरपि निर्वक्तुमशक्यत्वाच्च । न च 'सकिन्नरानि'तिस्मृतौ प्रतिबिम्बेन सृष्टिकथनात्तस्य सत्यत्वं शङ्क्यम् । प्रतिबिम्बस्य व्यापारताया एव तत्र विवक्षितत्वात् । स्वस्योपादानत्वात् । प्रकरणेन तथा निश्चयात् । तार्तीयायाश्च हेतावप्यनुशासनाच्च । तेन रूपात्मकत्वं गुणसमुदायरूपत्वं च तथा । आदर्शादौ तादृग्रूपाभावाद्वत्यांतरं (?) केवलानां रूपादीनामशक्यवचनत्वाच्च । तस्मान्मायिक एव सः । सर्वविलक्षणत्वाच्च । तथाहि—स्वाधारस्वभावानुविधायित्वे सति सन्मुखस्थितार्थाऽनुविधायित्वेन प्रतीतियोग्यो हि प्रतिबिम्बः । न हीदृशत्वमन्यस्मिन्नस्ति । सत्यन्तरूपतायाः स्फटिकादौ, द्वितीयदलोक्तरूपतायाश्च छायादौ सत्वेऽपि समुदितरूपत्वस्य क्वाऽप्यभावात् । न च स्वपदमनर्थकम् । यत्किञ्चिदाधेयनिरूपिताऽऽधारतायाः सन्मुखस्थितार्थेऽपि सत्वेन तत्स्वभावानुविधायित्वस्य च छायायां सत्वेन पुनस्तत्राऽतिव्याप्तेः । नचाऽऽत्माश्रयः । प्रतिबिम्बस्य प्रत्यक्षतो गृह्यमाणत्वात् । नाप्याधारपदं तथा । असम्भवात् । स्वस्वभावानुविधानाङ्गीकारस्याऽनुभवविरुद्धत्वात् । स्वस्वभावमनुविदधातीति प्रयोगाऽदर्शनात् । ग्रहिल-

तयाऽङ्गीकारेऽपि छायायामतिव्याप्तेस्तादवस्थ्यात् । नचाधारत्वनियामकसम्बन्धे विवक्षिते पूर्वदलस्य नातिव्यापकत्वमिति शङ्क्यम् । तदाऽपि तन्त्वादिष्वतिव्याप्तेः । आदर्शादौ प्रतिबिम्बाधारत्वस्य विशेष्यतासम्बन्धनियतत्वात् । प्रतिबिम्बे तादृशाधारस्वभावानुविधायित्ववत्पटे तन्त्वन्तरादिप्रतीतेः । पटादावपि तन्त्वाद्याकारत्वस्य तथात्वेन तत्स्वभावस्य प्रावरकत्वादिरूपस्य तन्त्वादिभिरनुविधानेन तेष्वतिव्याप्तेः । नाऽपि योग्यपदं तथा । अप्रतीतप्रतिबिम्बेऽव्याप्तेः । अतः सर्वं सुष्ठु । केचित्तु तदधीनत्वे सति तत्सदृशत्वं प्रतिबिम्बत्वमित्याहुः । तन्न । छायायामतिव्याप्तेः । न च तदधीनप्रतीतिकत्वे सति तथात्वे विवक्षिते न दोष इति वाच्यम् । आभासेऽतिव्याप्तेः । तस्मात्पूर्वोक्तमेव लक्षणम् । अतः पदार्थान्तरमेव प्रतिबिम्बः । मायिकत्वं चास्य **'यथाभासो यथा तमः'** इति द्वितीयस्कन्धीयभगवद्वाक्यादेव सिद्धम् । तस्मान्न कोपि चोद्यावसरः ।

**इति विट्ठलेशकृपया तत्त्वदीपप्रकाशनम् ।**
**प्रतिबिम्बं निश्चितवांस्तद्दासः पुरुषोत्तमः ॥ ४ ॥**

**इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजपुरुषोत्तमकृतोऽष्टमः प्रतिबिम्बवादः ।**

---

॥ श्रीः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

## पुष्टिमार्गसिद्धान्तवाङ्मालायां
### गोस्वामिश्रीमत्पीताम्बरविरचितो
# भक्तिरसत्ववादः ।

श्रीमद्वल्लभनन्दनचरणरजःपुञ्जकृपयाऽऽप्तः ।
भक्तिरसस्य स्थायी स्नेहो मन्मानसे जयति ॥ १ ॥

नन्वपूर्वमिदं कुत उच्यते । कथम् ।

अश्रुतत्वादसिद्धत्वादनुभूतेरभावतः ।
अन्तर्भावाच्चाऽतिरिक्तो रसो भक्तिर्न कुत्रचित् ॥ २ ॥

तथाहि—न हि वेदपुराणकाव्येषु क्वचन भक्तिरसः श्रूयते । किञ्च । 'विभावादिभिरभिव्यज्यमानः स्थायीभावो रस' इति रसशास्त्रे प्रसिद्धम् । भक्तिस्त्वाराध्यत्वेन ज्ञानं वा निदिध्यासनरूपमुपासनं वा श्रवणादिनवकं वा तत्र तत्र स्थितम् । तत्राऽऽद्ययोः स्थायिभावो न क्वचित्सिद्धः । ज्ञानस्य त्रिक्षणावस्थायित्वात् । नान्त्यः[1] । अनेकेषामेकस्य स्थायिनो विरुद्धत्वात् । कीर्तनवन्दनादीनां वागादिधर्मत्वेन भावत्वाऽभावेन रसत्वस्याऽशक्यवचनत्वाच्च । नापि स्नेहो भक्तिः । तस्येच्छाविशेषरूपत्वेन तत्र भक्तित्वस्याऽप्र-

---

१ श्रवणादिनवकपक्षः ।

सिद्धेः। न चातिरिक्त एव स्नेह इति वाच्यम् । इष्यमाण एव स्निग्ध इति प्रयोगदर्शनेन तत्र तथात्वनिश्चयात्। अतो न स्नेहाऽतिशयो भक्तिरसः। नाप्यनुभूयते रसिकैः । न च परमप्रियायामनुभूयत एव स्नेह इति वाच्यम्। तस्य स्त्रीपुम्प्रतियोगित्वेन नायिकानायकाऽऽलम्बनकत्वेन शृङ्गार एवाऽन्तर्भावात्। पित्रादिस्नेहस्य तु तदभावेन तद्भक्ते रसत्वस्याऽशक्यवचनत्वाच्च। नापि भगवद्भक्तेस्तथात्वम्। उक्तबाधकस्य तत्रापि तौल्यात्। पुंसामपि तस्या दर्शनाच्च। **'गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो'** इति सप्तमस्कन्धीये नारदवाक्ये स्नेहभक्त्योर्भिन्नतया निर्देशाच्च। अतः कंसादिभयस्य भयानकस्थायिनीव गोपिकादिकामस्य शृङ्गारस्थायिनि रत्याख्येऽन्तर्भावात्। तदितरस्या रतेस्तु **'रतिर्देवादिविषया भाव इत्यभिधीयते'** इत्यभियुक्तोक्ते भावेऽन्तर्भावाद्भरतादिप्रणीते नाट्यशास्त्रे शृङ्गारादीनामष्टानां निरूपणादभियुक्तैः[1] शान्तस्यापि नवमस्याङ्गीकाराद्द्वादशरसवादिनो भोजस्यापि मते भक्तेरगणितत्वात्तावन्त एव रसा न त्वतिरिक्तो भक्तिरसोऽपीति प्राप्ते—अभिधीयते।

**श्रुतत्वाल्लोकसिद्धत्वादनुभूतेश्च भेदतः।**
**तेभ्योऽतिरिक्तो मन्तव्यः साङ्गो भक्तिरसो बुधैः ॥१॥**

तथाहि—भक्तिस्तावद्गोपालतापनीये श्रूयते। **भक्तिरस्य भजनं तदिहामुत्र फलभोगनैराश्येनास्मिन्मनःकल्पन'**मिति। तन्मनःकल्पनं किंस्वरूपमिति जिज्ञासायां नारदपञ्चरात्रे तन्निष्कृष्यते। **'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः। स्नेहो भक्तिरिति**

---

१ दिभिरिति खपाठः।

प्रोक्तस्तया मुक्तिर्न चान्यथे'ति । शाण्डिल्यसूत्रेऽपि । 'अथातो भक्तिजिज्ञासे'ति प्रतिज्ञाय 'सा परानुरक्तिरीश्वर' इति तस्या लक्षणं क्रियते । अनुरक्तिश्च स्नेह एव । स्निग्ध एवानुरक्त इति प्रयोगदर्शनात् । स्नेहश्च नेच्छाविशेषः । विशेषस्य निर्वक्तुमशक्यत्वात् ।

न च सुखविषयिणी सा स्नेह इति युक्तम् । स्वर्गकामनायामपि तथात्वप्रसङ्गात् । पुत्रादिविषयकस्नेहस्येच्छारूपत्वाऽभावेन तस्य स्नेहत्वाऽभावप्रसङ्गाच्च । ननूक्तमिष्यमाणविषयिणी सा स्नेह इति । तन्न । स्वर्गस्य शत्रुहननादेश्चेष्यमाणत्वात् । तद्विषयकेच्छायां स्नेहादिपदप्रयोगस्य क्वाप्यदर्शनात् । स्निह्यामि प्रीणाम्यनुरज्यामि नेच्छामीति विरुद्धानुव्यवसायाच्च । अत एव नाराध्यत्वेन ज्ञानं ज्ञानान्तरं वा सः । अत एव न यत्नोऽपि सः । अनुकूलबुद्धिवेद्यत्वाच्च न द्वेषादिरपि । सविषयकत्वान्न लौकिकसुखरूपोऽपि । प्रत्यक्षत्वाच्चादृष्टरूपोऽपि न ।

अतो मनोधर्मान्तरमेव स इति निश्चयः । सोऽपि न क्षणिकः कालान्तरे तत्कार्यस्य दर्शनात्तद्विषयकसंस्कारे मानाभावाच्च स्थाय्येव । अत एव काव्यादावप्युच्यते—'आविर्भावदिने न येन गणितो हेतुस्तनीयानपि क्षीयेताऽपि न चाऽपराधविधिना नत्या न यद्वर्धते । पीयूषप्रतिवादिनस्त्रिजगतीदुःखद्रुहः साम्प्रतं प्रेम्णस्तस्य गुरोः किमद्य करवै वाङ्निष्ठतालाघव'मित्यादौ ।

एवं स्थायित्वे तस्य सिद्धे मातुः पुत्रदर्शनादौ तदभिव्यक्तिरुत्कर्षश्च भवतीति रसत्वमपि तस्य सुघटमेव । अत एव तत्स्मरणादौ दुग्धस्रावो यथासम्भवं व्यभिचारिणश्च तत्र प्रसिद्धा एव । अत

एव श्रीमदुद्धवागमन उक्तं 'यशोदाऽऽकण्यं नामानि कृष्णस्याऽऽचरितानि च । शृण्वन्त्यश्रूणि चास्राक्षीत्स्नेहस्नुतपयोधरे'ति । एवमेव पितृभ्रातृमित्रादिष्वपि द्रष्टव्यम् । अत एव श्रीनन्दादीनां तादृशानि तत्र तत्र वचांसि । शौनकस्य च । 'तदश्मसारं हृदयं बतेदं यद्गृह्यमाणैर्हरिनामधेयैः । न विक्रियेताथ यदा विकारो नेत्रे जलं गात्ररुहेषु हर्ष'इति । भक्ते रसत्वं कण्ठतोऽप्युक्तम् । 'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् । पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुका' इति । अतो भागवते रसो भक्तिरस एव । 'अस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे । भक्तिरुत्पद्यते पुंसः शोकमोहतमोपहे'ति भक्त्यर्थमेव भागवतसंहिताप्रणयनकथनात्तत्र प्रतिपाद्यमानस्य भागवतरसस्य भक्तिरूपताया एव सिद्धेरिति । अत एव शृङ्गाराद्भिन्नतयानुभूयत एव रसिकैः । यत्तु शृङ्गारस्यैव द्वावप्यवस्थाभेदौ संयोगो विप्रलम्भश्चेति सर्वैरुच्यते । तत्त्वविचारितरमणीयम् । मात्रादिष्वप्यनिषिद्धसंयोगसुखविप्रलम्भयोरुपलब्धेः । अतः स्नेहस्यैव तौ भेदौ ।

वस्तुतस्तु रतिरपि स्नेहविशेष एव । एवं सति शृङ्गारस्यैव रसत्वं न केवलं स्नेहस्येत्यत्र विनिगमकाऽभावात्तदुभयोः पार्थक्येन रसत्वं स्वीकार्यम् । तथा च नायिकाया नायकस्य, तस्मिंस्तस्याश्च या रतिः सा शृङ्गारः । मात्रादीनां पुत्रादौ तेषां च तेषु या रतिः स केवलस्नेहरस इति सिद्धम् । भगवद्विषयकाया निरुपाधिकाया द्विविधाया अपि रतेरलौकिकत्वेन मुख्यरसरूपत्वम् । 'रसो वै स' इति श्रुतेर्भगवतो रसरूपत्वात् । लौकिकस्य तूपाधिजन्यत्वात्तदाऽऽ-

भासत्वमिति ज्ञेयम् । तेन भक्तिरसस्य तेभ्योऽतिरिक्तत्वं निष्प्रत्यूहम् । श्रवणादिनवके तु तज्जनकत्वात्तत्र योगो भाक्तः । अतो न शङ्कालेश इति दिक् ।

इति श्रीमल्लीलार्णवचरणकाश्मीरजरजो-
नुरागारक्तश्रीव्रजपतिरतिप्राप्तनिखिलः ।
पयोदःश्रीहारिद्युतिहरित्तडित्तुल्यवसना-
भिधावान्स्नेहस्य स्वभजनरसत्वं व्यरचयत् ॥ १ ॥

इति श्रीमद्यदुपतितनयश्रीपीताम्बरविरचितो भक्ति-
रसत्ववादः सम्पूर्णः ॥

---

॥ श्रीः ॥

श्रीगोपीजनवल्लभाय नमः ।



# पुष्टिमार्गसिद्धान्तवाङ्मालायां

## गोस्वामिश्रीमत्पुरुषोत्तमविरचितो

# भक्त्युत्कर्षवादः ।



**मुक्तैरप्यभिलषितामतिशयिताऽनुग्रहात्प्राप्याम् ।**
**आनन्दधर्मभूतां रसरूपां नौमि हरिभक्तिम् ॥ १ ॥**

ननु सर्वमिदमसङ्गतमिव प्रतीमः । तथा हि—**'यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत'** इति यावत्कामप्रलयेऽमृतत्वश्रावणेन मुक्तात्मनां [1]तदभावबोधनात् । सत्यभिलाषे मुक्तत्वस्यैवाऽसम्भवात् । किञ्चाऽनुग्रहो नाम प्रसादो वा दया वा? । तत्राऽद्ये **'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमि'**ति, **'मोक्षमिच्छेज्जनार्दनादि'**ति श्रुतिस्मृतिभ्यां दर्शनमुक्त्योरेव प्रसादलभ्यत्वकथनेन प्रसादातिशयस्य तत्रैव पर्यवसानात् । दयापक्षेऽपि [2]तस्या निरुपधिपरदुःखप्रहाणेच्छारूपत्वाद्यावद्दुःखनिवृत्तेस्तत्रैव सम्भवेन [3]तत्र पर्यवसानौचित्याच्च ।

---

१ तस्याऽभिलाषस्याऽभावः । २ दयायाः । ३ दर्शनमुक्त्योः ।

किञ्च भक्तिर्हि स्नेहरूपत्वेन भवतामभिमता । तस्य च मनोधर्मत्वमेव भावरूपत्वात्सिद्धमिति दूरनिरस्तमानन्दधर्मत्वम् । किञ्चाऽऽनन्दपदेन सुखं वा विवक्षितं, ब्रह्म वा? । उभयथापि स्थायिभावात्मकत्वाऽभावाद्रसरूपत्वहानिः । किञ्च ब्रह्मधर्मत्वेन नित्यत्वमवश्यं वाच्यम् । तद[1]पि न युज्यते । तत्[2]कादाचित्कत्वस्य प्रत्यक्षसिद्धत्वात् । **'पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेष्वि'**ति प्रार्थनावाक्याच्च । श्रुतिपुराणादिषु ब्रह्मधर्मत्वेनाऽनुक्तत्वाच्च । अतः कारिकोक्तं सर्वमेवाऽसङ्गतमिति प्राप्ते—अभिधीयते ।

**निरुपाधिप्रियत्वस्य निर्णीता ब्रह्मधर्मता ।**
**वाक्यान्वयाधिकरणेऽन्यच्छ्रीभागवते स्थितम् ॥**

तथाहि—मैत्रेयीब्राह्मणेऽपि । **'येनाऽहं नाऽमृता स्यां किमहं तेन कुर्यामि'**त्यादिनोपक्रमेऽमृतत्वार्थ**'मात्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य'** इत्याऽऽत्मदर्शनं, तत्साधनं, चोपदेष्टुं **'न वा अरे पत्युः कामाय पतिः प्रियो भवती'**त्यादिनाऽऽत्मनि निरुपाधिप्रीतिविषयत्वाभ्यासेन तत्तत्र परिचायितम् । उपसंहारे **'चैतावदरे खल्वमृतत्व'**मित्यनेन त[3]द्विषयकज्ञानस्यैवाऽमृतत्वमुच्यते । तत्र स्वप्रतीत्याऽपत्यादि सर्वापेक्षया प्रियत्वलिङ्गकः स्वात्मैव भवतीत्युपक्रमोपसंहाराभ्यासैरिदं वाक्यं जीव[4]बोधकम् । यत्पुनरत्राऽऽत्मज्ञानादीनां सर्ववेदनरूपफलसिद्ध्यर्थमात्मनः सर्वरूपत्वं श्राव्यते । यच्च समुद्रादिदृष्टान्तैः सर्वाधारत्वं,

---

१ नित्यत्वमपि । २ तस्य सुखस्य तद्रूपत्वाद्भक्तेर्वा । ३ आत्मविषयकज्ञानस्य । ४ पूर्वपक्षिणोऽनुवादः ।

या च श्रुत्यन्तरे तस्य ब्रह्मता, तत्सर्वं तस्योत्कर्षार्थम् । जीवाऽदृष्टस्यापि जगदुत्पत्तौ सहकारित्वात् । अतो जीव एवाऽत्राभिधीयत इति पूर्वपक्षे, तन्निरासाय **वाक्यान्वयादि**'ति हेतुर्व्यासपादैर्ब्रह्ममीमांसायामुक्तः ।

तत्राऽयमर्थः । [१]अत्रोपक्रमेऽमृतत्वायाऽऽत्मदर्शनं तत्साधनानि चोपदिश्यन्ते । अमृतत्वं च ब्रह्मज्ञानादेवेति निर्णीतम् । **'तमेव विदित्वाऽतिमृत्युमेति नाऽन्यः पन्था विद्यतेऽयनाय' 'तमेवं विद्वानमृत इह भवति नाऽन्यः पन्था अयनाय विद्यत'** इति सावधारणयाऽन्यमार्गनिषेधिकया श्रुत्या । तेनेहा[२]ऽपि [३]तमेवात्मत्वेन परामृश्य दर्शनादिवाक्यानामन्वयो वक्तव्यः । अन्यथा [४]तद्विरोधाऽऽपत्तेः । एवं चोपसंहारवाक्यमपि युज्यते । उपक्रमश्चाऽसञ्जातविरोधित्वात्प्रबलः । किञ्चैवं [५]ज्ञानफलादिवाक्यान्यन्वेष्यन्ति । [६]तस्यैव सर्वत्वात्सर्वाऽऽधारत्वाच्च । अ[७]न्यथा तु निःप्रयोजनकाऽसदुत्कर्षबोधनान्नान्वीयुः । न च प्रियत्ववाक्यानामनन्वयः शङ्क्यः । आनन्द आनन्दजनक एव च प्रियत्वप्रतीतेस्तदर्थमानन्दस्वरूप आनन्दजनके च विचार्यमाण **'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' 'यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ति'** इत्यादिश्रुतिर्ब्रह्मण आनन्दरूपत्वे भूतशब्दवाच्यानां सशरीरजीवानां [८]तत्कार्यत्वे, **'सर्व एवाऽऽत्मानो व्युच्चरन्ती'**ति श्रुत्या केवलानामंशत्वे च सिद्धे, यज्जीवस्य परमप्रियत्वं तद्ब्रह्मगतमेव, ब्रह्मणोऽविषयत्वे तदंशत्वात्सम्बन्धनैकट्याच्च जीवे भासते । जीवस्य

---

१ पूर्वोक्तश्रुत्यादौ । २ मैत्रेयीब्राह्मणादौ । ३ परमात्मानमेव । ४ मैत्रेयीब्राह्मणस्थवाक्यानाम् । ५ 'तमेव विदित्वे'त्यादिवाक्यानि । ६ ज्ञानरूपस्य ब्रह्मणः । ७ मैत्रेयीब्राह्मणस्थवाक्यानां जीवपरत्वे । ८ ब्रह्मकार्यत्वे ।

विषयत्वात् । तथा '**एष ह्येवानन्दयाती**'ति सावधारणश्रुत्या ब्रह्मण एवाऽऽनन्दजनकत्वाद्ब्रह्मैवानन्दजनकमिति योऽन्यत्र प्रियत्वाऽध्यासः सोऽपि [1]तत्संबन्धादेवेति प्रियत्ववाक्यानामपि [2]तत्रैवाऽन्वयः ।

एवं चाऽभ्यासोऽपि तस्यैवाऽनुगुण इति साक्षात्परम्परया च सर्वेषां वाक्यानां [3]तत्रैवाऽन्वयादिदं[4] ब्रह्मवाक्यमिति सिद्धान्तितं व्यासचरणैः । तेन निरुपधिप्रियत्वस्यानन्दधर्मत्वं तत्र सिद्धम् । प्रियत्वमेव च स्नेहः । '**प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम् । मुत्प्रीतिः प्रमदो हर्ष**' इति च । स्नेह एव च भगवति भक्तिः । '**माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचाऽन्यथे**'ति पञ्चरात्रात् । अत्र सुदृढ इति ब्रह्मधर्मत्वबोधकम् । सर्वतोऽधिक इति निरुपधित्वबोधकम् ।

तथा '**सा पराऽनुरक्तिरीश्वर**' इति शाण्डिल्यसूत्राच्च । अत्राऽपि परपदं निरुपधित्वबोधकम् । नन्वेवं भक्तेर्ब्रह्मधर्मत्वे नित्यत्वा'**त्पुनश्च भूयाद्भगवत्यनन्ते रति**'रित्यादिप्रार्थनावाक्यानां '**दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत**' इत्यादीनां सावधानवाक्यानां, '**भक्तिरस्य भजनं तदिहामुत्रफलभोगनैराश्येनाऽस्मिन्मनःकल्पनमि**'ति भक्तिलक्षणश्रुतेश्च विरोध इति चेत् । मैवम् । तस्याऽनित्यत्वेऽपि '**ज्ञानं परमगुह्यं मे यद्विज्ञानसमन्वितम् । सरहस्यं तदङ्गं च गृहाण गदितं मये**'त्यत्रोक्तभगवद्दत्तज्ञानव'**द्युक्तं भगैः स्वैरितरत्र चाऽध्रुवै**'रिति भगवद्दत्तैश्वर्यवच्च भगवद्विचारिताऽनुपूर्व्या मनसि तत्स-

---

१ ब्रह्मसम्बन्धादेव । २ ब्रह्मण्येव । ३ ब्रह्मण्येव । ४ 'आत्मा वा रे द्रष्टव्य' इत्यादि मैत्रेयीब्राह्मणवाक्यम् ।

मागमनेन तत्स्वरूपनित्यत्वस्याऽबाधात् । अत एव प्रार्थनावाक्ये पुनःपदमपि संगच्छते। विद्यमानस्यैकस्मिन्सम्बन्धे निवृत्ते कालान्तरे तस्य सम्बन्धान्तर एव पुनःपदप्रयोगात्। यथा पुनरागत इति। तेन पुनर्भवनप्रार्थनादिवाक्यानां कादाचित्काऽनुभवस्य च न विरोधः।

यथा च '**स मानसीन आत्मा जनाना**'मित्यत्र मनस्याविर्भावाद्भगवान्मानसीन इति श्राव्यते। तथा भगवत्सम्बन्धनैकट्यान्मनस्याविर्भवन्ती भक्तिरपि मनोधर्म इति व्यवह्रियते। यथा वह्निनैकट्यतारतम्येनोष्णस्पर्शानुभवतारतम्यं तथैव भगवन्नैकट्यतारतम्येन भक्त्यनुभवतारतम्यम् । तेन लक्षणश्रुतेरपि न विरोधः। किं च '**रसो वै स**' इति रसत्वेन श्रावितोऽपि भगवान्रसशास्त्रोक्तप्रणाड्या हृद्याविर्भूत एव रसतां स्वस्मिन्ननुभावयतीति भूप्रवालेत्यत्र स्थितम्। तथा भक्तिरपि तया प्रणाड्या हृदि स्थायित्वेनाऽविर्भवन्ती ततो हेत्वन्तैरुत्कृष्यमाणत्वेन चाऽनुभूयमाना रसरूपतामपि धत्त इति न तद्विरोधः । तदाविर्भावश्चाऽत्यनुग्रहादेव । '**भगवान्भजतां मुकुन्दो मुक्तिं ददाति कर्हिंचित्स न भक्तियोग**'मिति वाक्यात्। न चैवं सर्वथा तददानमिति शङ्क्यम् । '**कृषिरुत्कृष्टवचनो णश्च सद्भक्तिवाचकः । अश्चाऽपि दातृवचनस्तेन कृष्णं विदुर्बुधा**' इति वाक्ये दानस्याऽप्युक्तत्वात् । अतोऽत्यनुग्रह एव ददातीति निश्चयः।

अनुग्रहश्च न फलदित्सा। न वेच्छान्तरम्। '**यस्यानुग्रहमिच्छामी**'ति भगवद्वाक्य इच्छाविषयत्वेनोल्लेखात् । '**फलदित्सादेस्तथात्वाऽभावा**'दिति भक्तिहंसे स्थितम्। दयादिरप्येतस्यैव पर्यायः। '**भवन्तावनुगृह्णीतां याता वोऽनुग्रहाद्दिव**'मित्यादिषु दयाप्रार्थनावा-

क्येषु तथा प्रयोगेणैतन्निश्चयात् । अत एव 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' 'मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविप्लुत'मिति तादृशां मुक्त्यनङ्गीकारोऽपि सङ्गच्छते । इयं च मुक्तानामप्यभिलषितैव[1] । आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया । गृहीतचेता राजर्षे आख्यानं तदधीतवानि'त्यादिप्रथमद्वितीयस्कन्धादिवाक्यैस्तथा निश्चयात् ।

न च 'यदा सर्वे प्रलीयन्त' इति श्रुतिविरोधः । इतः पूर्वं कामयमानस्य पुनरागतिमुक्त्वा अथाऽकामयमान इतिवद्व्यवस्थाकथनं प्रतिज्ञाय 'योऽकामो निष्काम आप्तकाम आत्मकामो भवति न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त' 'ब्रह्मैव सन्ब्रह्माप्येती'त्युक्त्वा तत्संग्रहोऽस्मिन्मंत्र उच्यते । तत्र संग्राह्याऽर्थे ब्रह्मणे अकामस्याऽप्यात्मकामत्वश्रावणेन तदर्थसंग्राहकेऽस्मिन्मंत्रेऽपि तदतिरिक्तानां सर्वेषां कामानामेव सर्वपदे विवक्षिततयाऽऽत्मकामातिरिक्तकामानामेव लयस्य मुक्त्यधिकारत्वेन विवक्षितत्वात् । भक्तेश्चात्मधर्मत्वेन तत्प्रापकत्वेन च तदभिलाषस्याऽत्मकामाऽनतिरेकात् । अतः कारिकोक्तं सर्वमवदातमिति दिक् ।

श्रीमदाचार्यकृपया श्रीपीताम्बरसूनुना ।
सुबोधिन्युक्तया रीत्या भक्त्युत्कर्षः समर्थितः ॥ १ ॥

इति श्रीपीताम्बरतनुजगोस्वामिश्रीपुरुषोत्तमविरचितो भक्त्युत्कर्षवादः सम्पूर्णः ॥

---

१ मुक्तानामप्यभिलषितेति ।

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## गोस्वामिश्रीमत्पुरुषोत्तमकृतः
# खलालपनविध्वंसवादः ।

पादाङ्गुलीयमञ्जीरनासिकाभूषणाञ्जनैः ।
स्वलङ्कृतं हरिं वीक्ष्य शाक्ताः शङ्काकलङ्किताः ॥ १ ॥
मार्गन्तः शाक्तताभ्रान्तिं कृत्वा वल्गन्ति वैष्णवैः ।
तादृशां जारजातानां मुखध्वंसं विदध्महे ॥ २ ॥
'सहस्रशीर्षा पुरुष'स्तथैव 'पुरुषो ह वै ।
नारायण'इति श्रुत्योस्तादृशीष्वितरासु च ॥ ३ ॥
सिद्धः पुमान्हरिस्तद्वत् पुराणेष्वपि दृश्यते ।
श्रीभागवतवाराहपाद्मगारुडकादिषु ॥ ४ ॥
'स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ।
स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरःसरम् ॥ ५ ॥
स एव वासुदेवोयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात्स्वातन्त्र्याद्वैभवादपि' ॥ ६ ॥
इत्युक्तं नारसिंहेऽत्र स्वातन्त्र्याद्वारितः शिवः ।
जगत्कारणतापन्नः शिवया मुनिपुङ्गवाः ॥ ७ ॥

सा तस्याऽपि भवेच्छक्तिस्तया हीनो निरर्थकः ।
यत्सूतसंहितान्तःस्थैः पञ्चत्रिंशद्भिरीदृशैः ॥ ८ ॥
वाक्यैः सर्वास्ववस्थासु शक्त्यधीनः स्मृतः शिवः ।
**'अनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचित्'** ॥ ९ ॥
**'अनन्वितं ते भगवन्नि'**त्यादौ शक्त्युपेक्षणम् ।
**'हरिर्हि निर्गुण'**इति नैर्गुण्यं च हरेः स्फुटम् ॥ १० ॥
तत्साक्षात्पुरुषः कृष्णः परं ब्रह्म च स स्फुटम् ।
**परं ब्रह्म परं धाम पवित्रं परमं भवान् ।**
**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यास'** इति गीतासु दर्शनात् ॥ ११ ॥
तापनीयश्रुतिषु च तथात्वप्रतिपादनात् ।
तथा **'स वै नैव रेमे'** इति काण्वश्रुतावपि ॥ १२ ॥
स्वद्विधाकरणाज्जायापती स्वयमभूदिति ।
उक्तस्तस्य तथाभाव एवं माध्यन्दिनेऽपि च ॥ १३ ॥
पुराणे ब्रह्मवैवर्ते खण्डे श्रीकृष्णजन्मनः ।
गर्गेण नामकरण इदमेवोपबृंहितम् ॥ १४ ॥
**'वर्धते सा व्रजे राधा शुक्ले चन्द्रकला यथा ।**
**श्रीकृष्णतेजसोऽर्धेन सा च मूर्तिमती सती ॥ १५ ॥**
**एका मूर्तिर्द्विधा भूता भेदो वेदे निरूपितः ।**
**इयं स्त्री स पुमान् किं वा सा वा कान्ता पुमानयम्'** १६
**'पिताहमस्य जगतो माता धाते'**ति गीतया ।
पौराणैर्वचनैश्चान्यैरन्यत्राप्युपबृंहितम् ॥ १७ ॥
अतः कृष्णस्तथा तेनालङ्कृतिर्युज्यते द्विधा ।

किञ्च—

सत्कार्यवादिनां कार्यं तत्सर्वं कारणे स्थितम् ॥ १८ ॥

हेतुभिर्बहिरायातं भासते कच्छपाङ्गवत् ।

**'अहं सर्वस्य प्रभव'** इत्युक्तेः कारणं हरिः ॥ १९ ॥

तदन्तःस्थद्वयं तस्मात्तद्विदां रुचितो द्विधा ।

भूषणानि दधत्कृष्णस्तेनैवं राजते न च ॥ २० ॥

कृष्णे सर्वस्य सद्भावात् सर्वं शृङ्गशरादिकम्(?) ।

तत्र धार्यतया शङ्का स्वाध्यायस्येतिसूत्रतः ॥ २१ ॥

उपसंहारनियमाद्भक्तेच्छापूरणादपि ।

अभिसन्धानपूर्वत्वात्क्रियाया नाऽत्र संशयः ॥ २२ ॥

अतोऽलङ्कृतिरेतावत्येव युक्तेति बुध्यताम् ।

किञ्च—

**'वक्षस्यधिश्रितवधूः' 'श्रीर्वधूः साक'** मित्यतः ॥ २३ ॥

श्रीसाहित्यं सदा तस्मादर्धनारीश्वरो यथा ।

द्विविधाभरणैः पूज्यस्तद्वदत्रापि बुध्यताम् ॥ २४ ॥

**'किञ्चार्थकामधर्मेषु कृष्णेन श्रद्धितात्मना'** ।

इत्युक्तं नारदे वीक्ष्य योगमायोदयं गते ॥ २५ ॥

श्रीशुकैस्तत्र मन्तव्यं कामुकानुकृताविदम् ।

कामुका यत्र सज्जन्ते धृत्वा तन्मुद्रिकादिकम् ॥ २६ ॥

तिष्ठन्ति सर्वदा तद्वत्तदासक्तो हरिस्तथा ।

तद्भूषणं धारयति प्रभुत्वान्नैव शङ्कते ॥ २७ ॥

**'अपि चानुकृतेस्तस्य चे'**ति सूत्रे विचारितम् ।

सर्वस्यैवानुकारित्वं तथा तद्विषयश्रुतौ ॥ २८ ॥

तेन ये कामुकास्तेपि तत्कृतेरनुकारकाः ।
अतो न्यायविचारेऽपि तत्कृतिर्न विरुध्यते ॥ २९ ॥

तथा रसविचारेपि शृङ्गारो विष्णुदैवतः ।
रसश्च स्थायिभावात्माऽऽलम्बनद्वयसंस्थितः ॥ ३० ॥

'रसो वै स' इति श्रुत्या रसात्माऽप्युच्यते तथा ।
अभेदवादः श्रौतानां महतां स मतस्ततः ॥ ३१ ॥

तदालम्बनताभावे स्वरूपप्रच्युतो भवन् ।
रसत्वादेव हीयेत तस्मादुभयधारणम् ॥ ३२ ॥

विद्वद्भिर्बोधकं ज्ञेयं रसत्वाऽभेदवादयोः ।
आधिदैविकवादोपि द्वैरूप्यादेव युज्यते ॥ ३३ ॥

प्राक् सृष्टावितराभावात्तदुक्तं पूर्वमेव हि ।
तेनावस्थाविशेषे या नायिकाधीनता स्वतः ॥ ३४ ॥

विरुद्धधर्माधारत्वात्सा न स्वातन्त्र्यबाधिका ।
पञ्चाध्याय्युदितान्तर्धेर्मानत्वं तत्र बुध्यताम् ॥ ३५ ॥

अतः प्रकृत्यसम्बन्धादत्राऽऽशङ्का न कापि हि ।
किञ्च प्रभुः प्रगल्भोऽपि यशोदोत्सङ्गलालितः ॥ ३६ ॥

तासां स्तनन्धयो भाति तेनाऽप्येवं सुशोभनम् ।
बार्धक्यलब्ध एकोऽयं बालः कन्येव जीवतु ॥ ३७ ॥

इति भावेन करणमपि नाऽत्र विरुध्यते ।
अतोऽत्र लोकशास्त्राभ्यां ये विद्वांसो बुभुत्सवः ॥ ३८ ॥

ते विदित्वैवमितरान्बोधयन्तः सदुक्तिभिः ।
खलानां वक्रविध्वंसं कुर्वन्त्वेतत्पथद्विषाम् ॥ ३९ ॥

नन्वेवं यदि तर्हि श्रीस्वामिनीस्तोत्रमष्टकम्[1] ।
तासां कुतः कृतं श्रीमत्प्रभुभिर्विट्ठलेश्वरैः ॥ ४० ॥

अत आचार्यवाक्येषु तदभावात्तदुत्तरम् ।
तथात्वं तेन संपत्तेराधिक्यमपि युज्यते ॥ ४१ ॥

अलंकृतिर्भगवतस्तत आरभ्य तादृशी ।
पूर्वं तु गुञ्जामुकुटश्रीगोपीचन्दनैः श्रुता ॥ ४२ ॥

अतः पाश्चात्यशाक्तत्वं वारितुं नैव शक्यते ।
**'इति चेदुच्यते मूढ'** सम्पत्तिर्यदि शक्तितः ॥ ४३ ॥

तदा न ते भिक्षुकाः स्युः सदा ये तामुपासते ।
कदाचित्काचन श्रीः स्यात्तेषां तान्न त्यजेत्पुनः ॥ ४४ ॥

पूर्वं दीनास्ततश्चाढ्यास्ततश्चात्यन्तदुःखिताः ।
शाक्ताः सहस्रशो दृष्टा अधुनाऽपि त्वदादिभिः ॥ ४५ ॥

एकविंशतिपर्यायैस्तामुपास्याऽपि यत्नतः ।
न लेभे माधवाचार्यो भग्नामपि कपर्दिकाम् ॥ ४६ ॥

ततः प्रव्रजितो विद्यारण्यनामाथ पर्यटन् ।
तमसि स्खलितो दृष्ट्वा तां सुवर्णशिलां ततः ॥ ४७ ॥

क्रुद्धः शप्तुं समारेभे शक्तिं सा गोचरा दृशोः ।
भूत्वोचे त्वज्जन्ममध्ये सम्पन्नैव हि दित्सिता ॥ ४८ ॥

विधेरतोऽधुना दद्मीत्युक्तः कस्याऽप्यदापयत् ।
इति प्रसिद्धं तस्मात्सा भाग्यादेव न शक्तितः ॥ ४९ ॥

---

१ सर्वत्र पुस्तकेषु इतः परं स्वामिन्यष्टकविषयकशङ्कानिरासवाद इति भिन्नं नाम दृश्यते ।

अपत्यं द्रविणं दारा हारा हर्म्यं हया गजाः ।
सुखानि स्वर्गमोक्षौ च न दूरे हरिभक्तितः ॥ ५० ॥
ईदृशैर्हरिवंशादिवाक्यैर्गोपालमन्त्रतः ।
सर्वं वाञ्छितसंसिद्धेस्तत्तन्त्रे कथनादपि ॥ ५१ ॥
सम्पत्तिः सर्ववाञ्छाप्तिर्भक्त्या तद्वदुपासया ।
भवतीति स्थिते शक्या शाक्तता नैव शङ्कितुम् ॥ ५२ ॥
**'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।**
**योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥ ५३ ॥**
**सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।**
**स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ ५४ ॥**
**न किंचित्साधवो धीरा भक्त्या ह्येकान्तिनो मम ।**
**वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम्'** ॥ ५५ ॥
एवमेकादशे विंशेऽध्याये भगवतोदिता ।
स्वभक्तिः कल्पतरुवद्भक्ताश्चोक्ता अनिच्छवः ॥ ५६ ॥
**'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्'** ॥ ५७ ॥
**'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः'** ॥५८॥
इति गीतासु चाऽतोऽपि तादृशामच्युतात्मनाम् ।
भक्तिर्हरिश्च सम्पत्तिं ददाति तेन सा तथा ॥ ५९ ॥
किञ्च प्रभ्वाज्ञयाचार्यैर्गार्हस्थ्यं कृतमित्यपि ।
प्रसिद्धं सर्वलोकेषु ततस्तेनैव सा स्फुटा ॥ ६० ॥

अतः पूर्वं तथैवेच्छा पश्चादेवमलंक्रिया ।
ततः पूर्वं तथा पश्चादेवं तस्मान्न दुष्यति ॥ ६१ ॥
एवं निवृत्ते शाक्तत्वे स्तोत्रं च न ततो यतः ।
गुरुत्वमेतन्मार्गस्य तास्वेव प्रतिपादितम् ॥ ६२ ॥
**'कौण्डिन्यो गोपिकाः प्रोक्ता गुरवः साधनं च तत्'** ।
इति संन्यासनिर्णीतौ सुबोधिन्यामपि स्फुटम् ॥ ६३ ॥
**तच्च[1] मार्गप्रकटनान्न तु तस्योपदेशनात्** ।
[2]एवमेकादशस्कन्धद्वादशाध्यायवाक्यतः ॥ ६४ ॥
ज्ञेयं तत्र यतः सर्वसाधनानां निषेधनम् ।
कृत्वा ततश्च सत्सङ्गात्स्वाप्तिमुक्त्वा तदग्रिमे ॥ ६५ ॥
केवलेन हि भावेन सिद्धानां स्वाप्तिमञ्जसा ।
उक्त्वा भावस्य परमा काष्ठा तास्वेव दर्शिता ॥ ६६ ॥
ततस्तेनैव भावेन प्रपत्तिमुपदिष्टवान् ।
**अतः प्रणेत्र्यस्ता एव हरि[3]रेवोपदेशकः** ॥ ६७ ॥
एवमत्रापि बोध्यं तत्तत्स्वरूपविचारकैः ।
अतः परोक्षवादेन स्तोत्रं तत्स्वीयमित्यपि ॥ ६८ ॥
किञ्च—
पुराणे ब्रह्मवैवर्ते खण्डे श्रीकृष्णजन्मनः ।
रुक्मिण्युपयमे जाते पृष्टेन श्रीयशोदया ॥ ६९ ॥

---

१ ये केचिद्भ्रान्ता व्रजभक्तेषु गुरुत्वमुपदेशेन मत्त्वैतदर्द्धश्लोकं पुष्टाक्षरैर्मुद्रयित्वा संतुष्टास्तेषां मुखमर्दनं ग्रन्थकारेणैवाऽस्मिन् ग्रन्थे कृतमिति विस्फार्य लोचने तैर्द्रष्टव्यम् । २ एवमिति ख-पुस्तके नास्ति. ३ एतेन ग्रन्थस्वारस्येन शुद्धमार्गे हर्युपदिष्टे स्त्रीगुरुत्वमारोपयन्तो विष्णुस्वामिपरम्परामसहमाना नास्तिका उपमर्दिता वेद्याः ।

'भक्त्यात्मकं च यज्ज्ञानं तुभ्यं राधा प्रदास्यति ।
नन्दाय दत्तं यज्ज्ञानं तच्च तुभ्यं प्रदास्यति' ॥ ७० ॥
एवमुक्तं भगवता श्रीयशोदां प्रति स्वयम् ।
स्वामिन्या उपदेष्टृत्वं तदग्रे दृश्यतेपि च ॥ ७१ ॥
'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः' ॥ ७२ ॥
श्वेताश्वतरशाखायां मन्त्रोपनिषदि श्रुतिः ।
एषा प्रगीयते सर्वैरतः स्तोत्रं ततो मतम् ॥ ७३ ॥
किञ्च—
शक्तिसंसर्गमात्रेण न शाक्तत्वमिति स्फुटम् ।
पञ्चायतनपूजायां विभूतौ तन्निवेशनात् ॥ ७४ ॥
यदि सा देवता मुख्या इतरे च विभूतिषु ।
तदा तथात्वं तन्मात्र तस्मादपि न तत्तथा ॥ ७५ ॥
अतस्तासां गुरुत्वे वा शक्तित्वे वा न दूषणम् ।
मार्गस्येति बुधैर्ज्ञेयं श्रीमदाचार्यसंश्रितैः ॥ ७६ ॥
[1]नन्वेवं चेत्सरस्वत्याः स्थापनं किंनिबन्धनम् ।
तेनाऽन्याश्रयदोषश्च कथं नेत्यपि कथ्यताम् ॥ ७७ ॥
न च तस्या विभूतित्वान्न दोष इति साम्प्रतम् ।
गौर्यादावपि तत्तौल्यात्तत्पूजाप्यापतेत्तदा ॥ ७८ ॥
पातिव्रत्यव्रती किञ्च पाद्म उत्तरखण्डके ।
'गोविन्दं परमानन्दं माधवं मधुसूदनम् ॥ ७९ ॥

---

१ पूर्वपक्षः । अत्रापि पुस्तकेषु सरस्वतीस्थापनविषयकशङ्कानिरासवाद इति भिन्नं नाम दृश्यते ।

**हित्वा नाऽन्यं विजानीते पातिव्रत्यव्रतः स च'** ।
इत्युक्तलक्षणः सिद्धः स चेदन्यं कथंचन ॥ ८० ॥

भजेद् व्रतात्स्वाद्धीयेत नो चेद्वाक्यं वृथा भवेत् ।
न चैवं सति यज्ञादेर्निवृत्तिरिति शंक्यताम् ॥ ८१ ॥

**'यज्ञो वै विष्णु'**रित्येतच्छ्रुत्या तस्याच्युतात्मता ।
बोधिता तत्र ये देवास्ते चाङ्गत्वेन संस्मृताः ॥ ८२ ॥

**'अग्निर्मुखं त'**इत्यादि श्रीभागवतवाक्यतः ।
यजिश्च देवपूजायां स्मृतस्तेन तदिज्यया ॥ ८३ ॥

द्वारेण भगवानेव पूज्यतेऽतो न दूषणम् ।
तत्रान्तः स न दृष्टान्तो वक्तुमन्यत्र शक्यते ॥ ८४ ॥

किञ्च मुख्यतया पूज्या तेन नाऽत्र विभूतिता ।
अतोऽन्याश्रयदोषस्य दुर्वारत्वान्न साध्विदम् ॥ ८५ ॥

सा च रूपतः शक्तिरेव किंच दीपा नवैव हि ।
तस्या आरार्तिके पैष्टा नवरात्रेण ते समाः ॥ ८६ ॥

रुद्रयामलसम्प्रोक्तं तस्मिन्काले तदर्चनम् ।
**'मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्'** ॥ ८७ ॥

इति वाक्यादतस्तस्याः स्थापनं तन्निबन्धनम् ।

किञ्च—

**'सर्वे शाक्ता द्विजा जात्या न शैवा न च वैष्णवाः** ८८

**यस्मादुपासते नित्यं गायत्रीं वेदमातरम्'** ।
गायत्रीकल्प एवं हि विश्वामित्रो द्विजाज्जगौ ॥ ८९ ॥

गायत्र्युपासया शाक्ता ततोऽत्रापि तथैयताम् ।
**इति चेदुच्यते** वाक्यं[1] गायत्रीकल्पसम्भवम् ॥ ९० ॥

गायत्र्युपासने वक्ति शाक्तत्वं न तु वै तया ।
हरेरुपासने तत्त्वं तदर्थस्तु हरिःस्वयम् ॥ ९१ ॥

**'न भर्गो नापि सविते'**ति प्रहस्ते प्रपञ्चितम् ।
**उपदेशविचारे**पि वाक्यमेतद्विचारितम् ॥ ९२ ॥

मया तदेतदुभयं ताभ्यां बोध्यं बुभुत्सुभिः ।
अतो न तेन तन्त्रापि सरस्वत्याश्च पूजनात् ॥ ९३ ॥

तथाहि सा ब्राह्मणानामाजीव्या निधिभावतः ।
**'विद्या ह वै ब्राह्मणमाजगामे'**त्यत्र तच्छ्रुतेः ॥ ९४ ॥

**'आजीव्यैकतरं भावं यस्त्वन्यमुपधावति ।
न तस्माद्विन्दते क्षेमं जारान्नार्यसती यथा ॥ ९५ ॥

वर्तेत ब्रह्मणा विप्रो राजन्यो रक्षया भुवः'** ।
इत्यादिभिर्निजाऽऽजीव्यपूजा भगवतोदिता ॥ ९६ ॥

किञ्च **'प्रचोदिता येन पुरे'**ति शुकवाक्यतः ।
**'वेदो नारायणः साक्षात्स्वयंभू'**रित्यतोऽपि च ॥ ९७ ॥

भगवल्लक्षणा तस्मादभिन्नेत्यवगम्यते ।
एवं सति यथा यागोऽद्रेस्तथेदमपि स्फुटम् ॥ ९८ ॥

तद्दैवतं तदाज्ञप्तं तत्कालं तत्प्रियं च तत् ।
तत्कर्तृषु तदीयत्वदार्ढ्यायैवेति बुध्यताम् ॥ ९९ ॥

---

१ उत्तरपक्षः ।

किञ्च कात्यायनी यद्वद्भगवत्प्रापिका तथा ।
एषाऽपीति न दोषस्य लेशोऽप्यत्रेत्यलं गिरा ॥ १०० ॥

इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ।
शङ्काः शाक्तत्वविषया यास्ताः सर्वा निराकृताः ॥ १०१ ॥

इति श्रीवल्लभाचार्यचरणाम्बुजचिन्तया ।
खलालपनविध्वंसं कृतवान्पुरुषोत्तमः ॥ १०२ ॥

**इति श्रीपीताम्बरतनुजश्रीपुरुषोत्तमकृतः खलालपनविध्वंसवादः सम्पूर्णः ॥**

---

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां

## गोस्वामिश्रीमत्पुरुषोत्तमविरचितो

# नामवादः[1] ।

**यन्नामानि यथावज्ज्ञातान्येवार्पयन्ति मुख्यफलम् ।**
**नत्वन्यथा तमेव श्रीकृष्णं गृणत सर्वदा भक्त्या ॥ १ ॥**

ननु नामयति उच्चारयितुरग्रे स्वाभिधेयं वश्यतया स्थापयतीति नामपदस्यार्थो निरुच्यते । इदमेव **'नामभिर्दामभिः सितमि'**ति श्रुत्या **'यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः । वाक्तन्त्यां नामभिर्बद्धा हरन्ति बलिमीशितुरि'**ति स्मृत्या[2] च निश्चीयते । एवं सति स्वशक्त्या स्वार्थोपस्थापकत्वं नामत्वमिति सिध्यति । शक्तिश्च नित्यस्य गवादिशब्दस्य नित्येन गोत्वादिरूपेणार्थेन सह वाच्यवाचकभावरूपः संबन्धः । पदार्थान्तरमिति मीमांसकाः । तादृशेन व्यक्तिस्वरूपेण तत्प्रवाहेण वा सह तादृशस्संबन्ध इति वेदान्तिनः । सङ्केतापरनाम्नी अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिकेश्वरेच्छैव विषयता[3] संबन्धेन शब्दे वर्तमाना जातिविशिष्टार्थ-

१ नामफलादिप्रकारवाद इत्यपि पुस्तकान्तरेऽस्य वादस्य नाम दृश्यते ।
२ पञ्चमस्कंधे त्रयोदशाध्यायस्मृतिवाक्यादिति खपुस्तकेऽधिकः पाठः ।
३ विषयितेति खपुस्तकम् ।

बोधिकेति नैयायिकाः । इदं च स्वार्थोपस्थापनरूपं कार्यं वर्णात्मकत्वेन ज्ञातैर्नामभिर्गृहीतशक्तिके पुरुषे श्रवणमात्रेण स्वत एव क्रियते । यौगिकानि तु पाठकपाचकेत्यादीनि नामानि । तेषामवयवशक्त्या स्वार्थोपस्थापकत्वेन स्वशक्त्या तथात्वाऽभावात् । योगरूढैस्त्ववयवशक्तिं द्वारीकृत्य सहकृत्य वा स्वशक्त्यैवार्थोपस्थापनं क्रियत इति तान्यपि नामानि । एवं सत्याकृतौ वा विशिष्टे वा प्रवाहे वा व्यक्तौ वा शक्तेर्वर्णसमुदायात्मकत्वेन ज्ञातैर्भगवन्नामभिरपि गृहीतशक्तिकेषूच्चारयितृषु श्रोतृषु च स्वार्थप्रत्यायनेन स्वफलं संपादनीयमेव । अत एव सहस्रनामस्तोत्रादिषु **'वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत्'** इत्यादीनि फलान्युच्यन्ते । तत्तदर्थे तैस्तैः पठ्यमानानि स्तोत्राणि फलन्तीति प्रत्यक्षतोऽनुभूयते च । किं बहुना **'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुरि'**ति पुरुषान्तरे सङ्केतितानामन्येषाञ्च नाम्नां फलवत्त्वमुच्यते । तथा **'म्रियमाणोऽपि यन्नाम गृह्णन्पुत्रोपचारितम् । अजामिलोऽप्यगाद्धाम किमुत श्रद्धया गृणन्नि'**ति वाक्ये पुत्रोपचारितस्यापि नारायणनाम्नो यमपाशनिवर्तकत्वमजामिलोपाख्याने श्रूयते । विष्णुपुराणे यमगीतासु नारसिंहे च तथोच्यत इति यथाकथञ्चिन्नामग्रहणस्यापि फलवत्त्वात्किं यथावज्ज्ञानेन । अथ **'विदुषः कर्मसिद्धिः स्यात्तथा नाऽविदुषो भवेत्'** । **'अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यतीत्या'**दि वाक्येष्वज्ञनिन्दया ज्ञानस्यापि नामोच्चारणाद्यङ्गत्वमिति विभाव्यते । तदापि भगवत्त्वेनार्थस्वरूपेण वर्णात्मकत्वेन पदस्वरूपेण कादाचित्कगुणक्रियाप्रयुक्तयोगाख्यावयवशक्तिं द्वारीकृत्य सहकृत्य वा

समुदायशक्त्या तत्तज्जातिविशिष्टरूपोपस्थापनरूपेण तादृशरूपप्रवाहोपस्थापनरूपेण तादृशव्यक्त्युपस्थापनरूपेण वा कार्येण स्वार्थोपस्थापकत्वरूपे नामस्वरूपे च शास्त्रप्रनाड्या ज्ञाते किन्नामावशिष्टं नाम्नां यथावज्ज्ञाने येनेतरनिषेधपूर्वकं भक्त्या यथावज्ज्ञानं भगवन्नाम्नामत्र मुख्यफलसाधकत्वेन प्रतिपाद्य इति चेत्—अत्र ब्रूमः।

भक्त्यैव तत्त्वतो ज्ञेयो हरिर्भक्त्येति वाक्यतः।
नामापि तादृग्गर्गोक्तेस्तथाज्ञाने हि तत्फलम् ॥ १ ॥

तथाहि। 'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमि'ति गीतायां भगवता भक्त्या स्वाभिज्ञानमुक्तम्। एकादशे च 'यावान्यश्चास्मि यादृश' इति। अभिज्ञानञ्च शब्दतोऽर्थतश्चेत्युभयतो ज्ञेयम्। तत्रापि यावानित्यादिपदत्रयेण परिमाणस्वरूपप्रकारा उक्ताः। एकादशे च यादृश इत्यनेन प्रकार उक्तः। एवं सति यावत्परिमाणो यत्स्वरूपको यत्प्रकारकोऽहं तावत्परिमाणं तत्स्वरूपं तत्प्रकारकं मां शब्दमर्थञ्च द्वारीकृत्य भक्त्या जानाति। ततो भक्त्या शब्दार्थाभ्यां मां तत्त्वतोऽनारोपितानागन्तुकरूपेण ज्ञात्वा तदनन्तरं विशते। यथाधिकारं लीलायां स्वरूपे वा प्रविशति। नित्यलीलान्तःपाती भवति। सायुज्यं वा प्राप्नोतीत्यर्थः संपद्यते। तथा गर्गाचार्येणापि 'बहूनि सन्ति नामानि रूपाणि च सुतस्य ते। गुणकर्मानुरूपाणि तान्यहं वेद नो जना' इत्यनेन भगवतो बहूनां सतामेव रूपाणां नाम्नां च साधारणजनवेदनाविषयत्वस्ववेदनविषयत्वयोः कथनात्तेषां बहूनां सत्त्वं स्वस-

दृशवेदनविषयत्वं च स्फुटीकृतम् । तत्सदृशाश्च भक्त्या शब्दार्थविचारपूर्वकं स्वरूपज्ञातार एव प्रकरणवशादवगन्तव्याः । तत्र विचाराकारस्त्वेवं बोध्यः । तथा हि—भगवन्नाम्नां नाकृतौ विशिष्टे प्रवाहे वा संबन्धः । आकाशवद्रूपाणामेव नित्यत्वात् । '**यदेकमव्यक्तमनन्तरूपमि**'ति श्रुत्या तथैव सिद्धत्वात् । ब्रह्मणः शब्दैकसमधिगम्यत्वात् । आनन्त्यं चात्र देशकालादिपरिच्छेदरहितत्वमेव । न तु लोकवत्प्रवाहरूपत्वेन सङ्ख्याशून्यत्वमात्रम् । अनुक्तसिद्धत्वेनानुवादप्रसङ्गात् । '**सत्यं ज्ञानमनन्तं ब्रह्मे**'त्यनन्तश्रुतिविरोधापत्तेश्च । नृसिंहहंसादिषु स्वेच्छामात्रेणैव प्राकट्याज्जीवाऽदृष्टजन्यत्वाऽभावेन सदैकरूपत्वात्कालपरिच्छेद्यत्वरूपवैशिष्ट्याभावेन च तत्प्रवाहस्याऽशक्यवचनत्वाच्च । न च तत्तत्क्षणवैशिष्ट्यस्य प्रतीयमानत्वात्कथं तदभाव इति शङ्क्यम् । तत्कृतविशेषाऽभावे वैशिष्ट्यमात्रस्याऽपरिच्छेदकत्वात् । अन्यथा आकाशादिष्वपि तदापत्तेः । तथा '**सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि**' । **योऽयं कालस्तस्य तेऽव्यक्तबन्धोश्चेष्टामाहुश्चेष्टते येन विश्वम्**' । '**कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रम**' इत्यादिश्रुतिस्मृतिभिः कालस्य भगवत्परिच्छेद्यत्वेन न भगवद्रूपेषु तत्परिच्छेद्यत्वम् ।

न च बाल्यपौगण्डकैशोरादिहेतुकपरिमाणभेददर्शनात्तत्परिच्छेद्यत्वं शङ्क्यम् । तादृशदर्शनस्य भगवदिच्छाहेतुकत्वेन वयोहेतुकत्वाऽभावात् । न चात्र मानाभावः । मृत्साभक्षणजृम्भादिलीलासु वयःपरिच्छेदकस्य ज्योतिश्चक्रादेः स्वान्तःप्रदर्शनस्यैव मानत्वात् । न चेदं मायया प्रदर्शितमिति वाच्यम् । '**किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः । अथो अमुष्यैव ममा-**

भकस्य यः कश्चनौत्पत्तिक आत्मयोगः। अथो यथावन्न वितर्कगोचरं चेतोमनःप्राणवचोभिरञ्जसा। यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदमि'ति पक्षान्तरनिरासपूर्वकं भगवतः सकाशादेव प्रतीतिकथनस्य विरोधापत्तेः। अतो भगवद्रूपेषु कालपरिच्छेद्यत्वाभावान्न तेषु प्रवाह इति। **'समो मशकेन समो नागेन समः प्लुषिणा सम एतैस्त्रिभिर्लोकैरि'**त्यादिषु हेत्वन्तरमन्तरेणैव ब्रह्मणो नानापरिमाणवत्त्वमेकस्य श्राव्यते। तेनापि तावत्तावद्रूप इति सिध्यति। एवञ्च भक्त्यैव स्फुरति। **'यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन'** इति श्रुतेः। पूर्वोक्तगीतावाक्याच्च। एवं शब्दतः। अथार्थतो विचारः। भगवता स्वल्पेनापि रूपेण पूतनामारणशकटभङ्गादिरूपक्रियाकरणात्तादृशसामर्थ्यं सर्वदा भगवति यद्यपि वर्तते तथापि तत्तत्कार्यं तावता तावता रूपेण यत्क्रियते तेन ज्ञायते भगवतस्तत्तद्रूपं तावत्तावत्परिमाणकमिति। न च तदानीन्तनभक्तानुरञ्जनाय तावत्परिमाणप्रदर्शनमिति युक्तम्। तथा सत्यन्यदाऽन्येषु तावद्रूपं न प्रदर्शयेत्। सर्वेषामेकरूपभावाऽभावात्।

किञ्च। दर्शनं हि प्रसीदन्ददाति। प्रसादश्च यथावद्भावनेनैव। नत्वन्यथा[1]। **'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणे'**ति दोषश्रवणात्। तस्मात्त्वमेयं[2] रूपमेव तादृशमिति मन्तव्यम्। इत्यर्थतो यावत्त्वाभिज्ञानम्। एवं स्वरूपस्यापि **'सत्यं ज्ञानमनन्तं ब्रह्म' 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभि-**

---

१ नन्विति खपाठः। २ प्रमेयमिति कपाठः।

धीयत' इति श्रुत्या तदुपबृंहणभूतैः 'कृष्णस्तु भगवान् स्वयमि'-त्यादिवाक्यैः प्रसन्नस्य दर्शनेन च सच्चिदानन्दात्मकत्वेन 'परास्य शक्तिरि'त्यादिश्रुतिभिः स्वरूपसाधनविरुद्धलीलाभिश्च सर्वसामर्थ्यसंयुतत्वेन च यत्त्वाभिज्ञानम् । एवं प्रकाराणामपि तापनीयादिश्रुतिभिः पूर्वोक्ताभिरन्याभिस्तत्तल्लीलानिरूपकैः पुराणवाक्यैस्तत्तल्लीलाविशिष्टरूपदर्शनेन च यादृशत्वाभिज्ञानम् । एवं स्वरूपपरिमाणप्रकारेषु भक्त्या विचारेण ज्ञातेषु योगरूढभगवन्नाम्नां संबन्धोऽपि नित्यगुणक्रियाविशिष्टेषु नित्येषु तेषु तेषु रूपेषु विचारितो भवति । गुणक्रिययोः कादाचित्कत्वे तु तत्संबन्धेन प्राप्तं नामाऽन्यदा संबन्धरहितत्वादवाचकमेव भवेत् । योगेन वाचकं सत् पाचकपाठकादिवन्नामत्वादेव हीयेत । छत्रिन्यायतौल्येनौपचारिकत्वं चापद्येत । सहस्रनामादिषु प्रवेशं च न लभेत । एवं रूपाणामपि कालपरिणामेन प्रतिक्षणमन्योन्यभावेऽन्यस्मिन् संबद्धं सत् घटशब्दः पटमिव कालपरिणतं रूपान्तरं न वदेत् । तथा सत्यन्यदासंबन्धरहितत्वादनर्थकमेव भवेत् । पूर्ववदौपचारिकं वा स्यात् । तथा सति सहस्रनामादिप्रवेशोऽपि न स्यात् । अतो नामकार्यविचारेऽपि प्रकाराणां प्रकारिणां च नित्यत्वमेव ।

किञ्च । एतयोर्नामरूपयोर्न वाच्यवाचकभाव एव संबन्धः । किन्त्वाश्रयाश्रयिभावोऽपि । 'अर्थाश्रयत्वं शब्दस्य दृष्टलिङ्गत्वमेव चे'ति तृतीयस्कन्ध अर्थाश्रयत्वस्य शब्दलक्षणत्वेनोक्तत्वात् । द्वादशस्कन्धे च 'ततोऽभूत्त्रिवृदोङ्कार' इत्योङ्कारं प्रकृत्य 'यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मन' इत्योङ्कारस्य भगवल्लिङ्गशरीरत्वेनोक्ततया तद्विकृतीनां वर्णपदादीनामपि वाच्यस्वरूपाधारताया औचि-

त्याच्च। अतो लौकिके बाधाद्वैदिकस्याधिदैविकस्यैवाऽर्थस्य वेदादिशब्देष्वेव च तथात्वम्। अत एव नाम्नामपि नित्यत्वम्। न च नाम्नां वर्णात्मकत्वेन तेषां चोत्पत्तिनाशप्रतीत्या नश्वरत्वेन कथं नित्यत्वमिति शङ्क्यम्। तद्वर्णप्रत्यभिज्ञया उत्पत्त्यादिप्रतीतेर्वर्णाभिव्यञ्जकवायुविषयत्वेन तदंशे भ्रमत्वात्। न च प्रत्यभिज्ञायाः सजातीयविषयत्वेन तत्रांश एव भ्रमत्वं शङ्क्यम्। त्रिक्षणावस्थायित्वे वीचीतरङ्गवदुत्पद्यमानस्याऽन्यान्यतया ज्ञातसंबन्धपुरुषोच्चारितस्यार्थवतः शब्दस्य नष्टतयाऽनर्थकात्तत्सन्तानाच्छक्तिग्रहशाब्दबोधयोरनुदयप्रसङ्गात्। न च सादृश्यात्तदुभय इति शङ्क्यम्। आशुतरविनाशित्वेन सादृश्यग्रहस्यैव दौर्लभ्यात्। अतः शक्तिग्रहादिरूपकार्यानुरोधेन प्रत्यभिज्ञायास्तन्मात्रविषयत्वं जैमिनीयोक्तरीत्या निश्चेयम्। तथैव पदविषयिण्या अपि। अतस्तेषामपि नित्यत्वम्। न च पदानां घोत्तरटत्वादिरूपेण प्रतीतेः पुरुषबुद्ध्यादिजन्यानुपूर्वीकतया न नित्यत्वमिति शङ्क्यम्। सिद्धे नित्यत्वे घज्ञानोत्तरटज्ञानविषयत्वादिरूपतया तदबाधात्। न च तथापि गोवर्द्धनोद्धरणधीरगोवर्द्धनधारीत्यादिपदानुपूर्वीविशेषविशिष्टोच्चारणस्य पुरुषेच्छाधीनतयोच्चारण[1]विषयाणामनित्यत्वं शङ्क्यम्। यथासम्भवं क्रमन्यूनातिरिक्तत्वैस्तत्र पदानां भिन्नानामेवेच्छयोच्चारणविषयत्वात्।

ननु प्रकृतिप्रत्ययविभागानुशासनादनित्यत्वमेवेति चेन्न। तस्य व्युत्पत्तिमात्रार्थत्वात्। व्याकरणेऽव्युत्पत्तिपक्षस्यैव सिद्धान्तत्वेनाऽङ्गीकारात्। अतस्तेषामपि नित्यत्वमप्रतिक्षेप्यमेव। ततश्च पदानामप्यखण्डत्वम्। तेषां केवलवर्णसदृशावयवत्वेन वर्णघटितत्वाऽभावात्।

१ उच्चारणस्येति खपाठः।

तादृशावयवविशिष्टानामेव नित्यत्वात् । अतः 'स एष जीवो विवरप्रसूतिरि'त्येकादशस्कन्धोक्तरीत्या शब्दब्रह्मात्मकत्वमेव । एवं सति भक्त्या विचारपूर्वकं नाम्नां तदर्थस्य प्रकारादेश्च स्वरूपं ज्ञात्वा यदोच्चारणं क्रियते तदा तानि तादृशमर्थं बोधयन्ति फलं ददति । अन्यथा तु तानि निरर्थकान्यर्थमप्रत्यापयन्ति फलदातुर्भगवतः संबन्धराहित्यान्न फलन्ति । 'फलमत उपपत्तेरि'ति न्यायेन फलस्य भगवदेकसाध्यत्वात् । लौकिकपुरुषे सङ्केतितानि तु भगवन्नामान्येव न भवन्ति । अर्थभेदेन पदभेदस्य वाक्याधिकरणे सिद्धत्वात् । तेषां डित्थकपित्थादिवत्पुरुषबुद्धिकल्पितत्वाच्च । किन्तु तत्सदृशं पदान्तरम् । अतो घटादिपदवत्तस्य पदान्तरत्वाद्दूरापास्ता ततः फलसिद्धिः । न च वर्णानुपूर्वीभेदाभावात्पदैक्यमिति शङ्क्यम् । सिद्धे स्वरूपभेद आनुपूर्व्यभेदस्याऽप्रयोजकत्वात् । अतस्तत्र प्रत्यभिज्ञायाः सजातीयविषयत्वमेव । तत्तद्वर्णज्ञानोत्तरतत्तद्वर्णज्ञानविषयत्वरूपसाधर्म्यस्य तत्रापि सत्वात् । ननु यथा पितामहनामसिद्धमेव पौत्रे ध्रियते तथा भगवन्नाम लौकिके पुरुष इत्यखण्डस्य पदस्यैव तत्र सङ्केतितत्वेन डित्थादिवत्कल्पितत्वाभावात्कथं पदभेद इति चेन्न । लौकिकाऽलौकिकभेदादिति वदामः । न चात्र मानाऽभावः । एकादशे 'स एष जीव' इत्यत्र नादस्यैव मात्रादिरूपत्वमुक्त्वा तादृशवैखरीरूपस्य वेदस्य 'मे व्यक्तिरियं हि वाणी'ति स्वव्यक्तिरूपत्वमुपदिश्य 'एवं गदिरित्य'नेन लौकिकवाण्यां स्वव्यक्तित्वस्य भगवताऽतिदिष्टतया तयोर्भेदस्य बोधनात् । न ह्युपदेशातिदेशयोरुद्देश्यैक्यम् । प्रकृतिविकृतिभावस्य जागरूकत्वात् । न च लोकवेदाधिकरणे लौकिकवैदिकपदवर्णयोर्भेदाऽनङ्गीकारान्नेदं साम्प्र-

तमिति वाच्यम् । जैमिनिनाऽऽकृत्यधिकरणस्यैव प्रणीतत्वेन तदनुक्तस्य वर्णकान्तररूपस्य लोकवेदाधिकरणस्य वार्तिककारकल्पितत्वेनाऽप्रामाणिकत्वात् । न च भगवन्नाम्नां वेदोक्तत्वाभावेन लौकिकत्वं शङ्क्यम् । पुराणसिद्धत्वात् । 'इतिहासपुराणं वेदानां पञ्चमं वेद'मिति श्रुत्या तस्यापि वेदत्वात् । अतो भगवन्नामानि शब्दब्रह्मरूपाणि । लोके सङ्केतितानि तु तद्भिन्नानीति निश्चेयम् ।

नन्वस्तु भेदस्तथाप्युच्चारणप्रयत्नतौल्यात्कथं लौकिके वाच्ये लौकिकमेव मुखतो निर्गच्छत्यलौकिके चालौकिकमिति विभाग इति चेत् । शब्दस्य पश्यन्त्यवस्थायां तत्प्रयोजकबुद्धिभेदादिति ब्रूमः । तत्तदनुसन्धानेन तथोच्चारणादिति । न चैवं सति साङ्केत्यादिवाक्यवैयर्थ्यमिति शङ्क्यम् । ईदृशं भगवन्नाम यत्सरूपं शब्दान्तरमपि वक्तॄणामघं हरतीति नाममाहात्म्यबोधनार्थत्वेनाऽप्रवर्तमानप्रवर्तनार्थत्वेन च तदभावात् । अत एव पुत्रे सङ्केतितस्यापि नारायणनाम्न उपचारितत्वमुक्तम् । अन्यथा सङ्केतितस्य वाचकत्वेन तद्वाच्ये बालेषद्विधस्यापि सादृश्यस्याऽभावेनोपचारितमेव न वदेत् । एवं तु पुत्रेण नामसारूप्यरूप उपचारः संजातोऽस्य नाम्न इति पुत्रोपचारितमिति सङ्गच्छते । न च जीवात्मन्यपि चेतनत्वादिरूपब्रह्मसारूप्यस्य साजात्यस्य वा विद्यमानत्वात्तत एव नाम्न उपचारितत्वं शङ्क्यम् । तथा सति सङ्केतितानां भगवन्नाम्नामवाचकत्वापत्त्या साङ्केत्यपदविरोधापत्तेः । अत उभयसामञ्जस्यार्थमेवमेव स्वीकार्यमिति निश्चयः । अतोऽपि लौकिकालौकिकयोर्नाम्नोर्भेद एव सिद्ध इति तथोच्चारणेऽजामिलस्यापि न तदानीमेव मुक्तिरित्यपि युज्यते । नन्वस्त्वेवं तथापि सर्वेषामेवंप्रकारेण भगवत्स्वरूपनामस्वरूप-

योर्ज्ञानाभावेऽपि यत्सहस्रनामादिपाठफलमनुभूयते तत्कथमिति चेत्। उच्यते। न हि तत्पाठादिनापि तदानीमेव फलम्। यथा गोविन्देति पाञ्चाल्याः क्रोशनमात्रेण चीरपूरणम्। यथा च गजेन्द्रस्य तदानीमेवोद्धारः। प्रह्लादस्य च क्लेशनिवृत्तिः। किन्तु यथाकथञ्चित् कालान्तरे। अतस्तत्रापि पुरुषज्ञानतारतम्यमवश्यमनुसन्धेयम्। दृष्टशास्त्रयोरनुरोधात्।

एवं सति यस्योक्तरीत्या यथावज्ज्ञानं तस्य सकृदुच्चारणेनैव फलम्। अर्थस्य शब्दाश्रितत्वेन तदानीमेवाऽनाविर्भूयाविर्भूय वा दानात्। यस्य ततः किञ्चिदंशेन न्यूनं तस्य नाम्ना चित्तशुद्धिं संपाद्य किञ्चिद्विलम्बेन। यस्य ततोऽपि न्यूनं तस्य नामावर्तनेनाधिदैविकोद्बोधे ततोऽपि विलम्बेन। येषां च न चित्तशुद्धिस्तेषां फलाभावो दोषसंबन्धनिवृत्तिश्च। न च कालादिनैव स इति वाच्यम्। '**नैषां वयं न च वयः प्रभवाम दण्ड**' इति यमवाक्ये तेषां तत्राऽसामर्थ्यबोधनविरोधात्। अतोऽज्ञानेनैव विलम्बादिरिति निश्चयः। एवं सति यथा निकटस्थ उपांशूच्चारणे श्रुत्वाऽऽयाति मध्यस्थस्तारोच्चारणे दूरवर्ती त्वतितारोच्चारणेऽसकृदुच्चारणे च तद्वत्। यद्यपि भगवान् व्यापकस्तथापि '**हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम्**'। '**विदूरकाष्ठाय मुहुः कुयोगिनामि**'त्यादिवाक्यै'**र्न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं भवातीति**' श्रुत्या चाज्ञानेन व्यवधानाद्भगवतो दूरत्वमपि वर्तत इति यथा यथा तन्निवृत्तिस्तथा तथा नैकट्यमिति। तच्चातिशयितं भक्त्यैवेति पूर्वोक्तेऽर्थे न किञ्चिदनुपपन्नम्।

अथाधिकारितारतम्यादिबोधनार्थं षष्ठस्कन्धसिद्धाऽवस्था प्रद-

र्श्यते । तथाहि—तत्राऽऽरम्भे राज्ञा लोकानां नरकगमनाऽभावायोपाये पृष्टे श्रीशुकैः पूर्वं कर्मरूपं प्रायश्चित्तमुक्तम् । ततो राज्ञा तस्य कुञ्जरशौचन्यायेन वैयर्थ्ये बोधिते कर्मरूपप्रायश्चित्तस्याऽविद्वदधिकारकत्वं बोधयित्वा, तत उत्कृष्टं देहात्मभेदाऽलोचनात्मकं विमर्शनं भगवद्भक्तिश्चेति द्वयमुक्तम् । तत्र **'नाश्नत'** इत्यादि श्लोकत्रयेणाऽऽद्यम् । **'केचिदि'**त्यादिभिः पञ्चभिर्द्वितीयम् । ततो द्वितीयदार्ढ्यायाऽजामिलोपाख्यानं शिवभक्तागस्त्योक्तमुक्तवान् । तत्र प्रथमे पथ्यभोजनदृष्टान्तपूर्वकं **'एवं नियमकृद्राजन् शनैः क्षेमाय कल्पत'**इति कथनेनाग्रिमश्लोके तपःप्रभृतीनां तदङ्गानां च कथनेन तत्समग्राङ्गं धर्मज्ञस्य श्रद्धालोः कर्तुर्बहुकालेन नाशयति[1] । तत्रापि **'वेणुगुल्ममिवानल'**इत्यग्निदृष्टान्तेन सावशेषमेव नाशयति । वेणुगुल्मस्य दाहे मूलस्य भूमौ दर्शनाद्वह्निनिवृत्तौ पुनः प्ररोहदर्शनाच्च । द्वितीये तु **'अघं धुन्वन्ति कात्स्न्र्येन नीहारमिव भास्कर'** इति सूर्यदृष्टान्तेन निरवशेषनाशकत्वम् । ततो **'न तथाह्यघवान्राजन्नि'**ति श्लोके कृष्णार्पितप्राण इति कर्तृविशेषणेन परमस्नेहात्मकं भक्तिस्वरूपम् । ततोग्रे **'प्रायश्चित्तानि चीर्णानि'** इत्यनेन भगवद्विमुखं न निष्पुनन्तीति भगवद्विमुखा एव चाविद्वांस इति बोधयित्वा **'सकृन्मनः कृष्णपदारविन्दयोरि'**त्यनेन सकृत्कृतायाः स्वल्पायाः केवलाया अपि भक्तेर्निःशेषपापनाशकत्वं बोधयितुं यमाद्यदर्शनमुक्त्वा तथात्वदार्ढ्यायाऽजामिलेतिहास[2] उक्तः । तेन श्रवणादिरूपभक्त्या सर्वात्मना पापनाशः कृष्णार्पितप्राणानामेव । तादृशां पाप-

---

१ प्रभृतीनां तदङ्गानां च कथनेन तत्समग्राङ्गं धर्मज्ञस्य श्रद्धामेव नाशयति इति खेऽधिकः पाठः । २ अजामिलोपाख्यानमुपन्यस्तमिति खपाठः ।

सम्भवस्तु स्वधर्मकरणस्योत्कर्षभावनारूपाद्दोषात् । एवमेव 'स्वपादमूलं भजत' इत्यत्रापि बोध्यम् । ये पुनर्भक्तेः सहकारित्वं ज्ञात्वा कर्मणि[1] वा ज्ञाने वा पापनाशनाय प्रयतन्ते तादृशां ताभ्यां सावशेषः पापक्षयः । ये पुनः सहकारित्वमपि भक्तेर्न मन्यन्ते तेषु केवलकर्मिणां प्रायश्चित्तं कुञ्जरशौचवदपार्थम् । ये पुनस्तादृशाः केवलज्ञानिनो 'येऽन्येऽरविन्दाक्षेत्या'दिषूक्तास्तेषां केवलज्ञानेन साङ्केन शनैः पापनाशेऽप्यपथ्याशनेन रोगस्येव किञ्चिदन्यथाकरणेन पापमूलस्य सतः पुनः प्ररोहः । तेन भक्तानामेव नामोच्चारणेन श्रवणादिभिश्च निश्शेषपापक्षयः । तत्रापि 'तत्पूरुषनिषेवये'ति द्वारस्य सहकारिणो वा कथनात् । येषामजामिलादिसदृशां प्रतिबन्धकबाहुल्यं तेषां सत्सङ्गरूपद्वारादिना निरवशेषपापनाशो नामोच्चारणादिनेति । तेनाऽऽधुनिकानां भक्तसङ्गे सति यथा यथा विश्वासदार्ढ्यं तथा तथा शीघ्रं नामफलम् । नोचेद्विलम्बेनेति । येषां च न विश्वासस्तेषां तु नेति । तेन साङ्केत्यादिनापि नामग्रहणं प्रनाड्या दूरविप्रकर्षेण कथञ्चित् पापनाशकमिति तद्वाक्यमप्येवमुपसंहरणीयमितिहासबलात् । अतो नेह कोऽपि क्वापि विरोध इति भगवन्नाम्नां नामत्वं भक्त्यैव प्रकटीभवतीति सिद्धम् ।

इत्थं सुबोधिनीतो विद्वन्मण्डननिबन्धाभ्याम् ।
विदितो नामफलादेः प्रकार उक्तोऽधिकारी च ॥ १ ॥

इति श्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरात्मजश्रीपुरुषोत्तमविरचितो नामफलादिप्रकारवादः समाप्तः ।

---

१ कर्मणा ज्ञानेनेति खपाठः ।

॥ श्रीः ॥

श्रीमद्वृन्दावनविहारिणे नमः ।

## पुष्टिमार्गसिद्धान्तवाङ्मालायां
### गोस्वामिश्रीमत्पुरुषोत्तमविरचितो
# मूर्तिपूजनवादः ।

अथेदं विचार्यते—मूर्त्तौ भगवत्पूजनं जघन्यमितरसमं श्रेष्ठं वेति। किं तावत्प्राप्तम्?। जघन्यमेवेति। कुतः। पुराणेषु तथैवोक्तेः। तथा हि। तृतीयस्कन्धे, 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति स' इत्यादिवाक्येषु। 'यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम ईज्यधीः । यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखर' इति दशमस्थभगवद्वाक्ये च निन्दास्मरणात् । एकादशस्कन्धे च सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम् । भूरात्मा सर्वभूतानि भद्र पूजापदानि मे' इत्यत्र पूजापदेषु प्रतिमाया अनुक्तेश्च ।

न च 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । शालग्रामे च चक्राङ्के पटे मुद्रासु देवताः । नित्यं सन्ति हिरण्येषु ब्राह्मणेषु च गोषु चे'ति स्मृत्यर्थसारे वचनादितरसाधारण्यमिति वाच्यम् ।

आचारमाधवे, 'अर्चनं सम्प्रवक्ष्यामि विष्णोरमिततेजसः । यत्कृत्वा मुनयः सर्वे परं निर्गुणमाप्नुयुः । अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च । षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् । अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् । प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः । तस्य सर्वगतत्वाच्च स्थण्डिले भावितात्मनामि'त्याग्नेयवचने प्रतिमार्चनस्याल्पबुध्य-धिकारोक्तेः । एवं चेत्समत्वस्याप्यशक्यवचनत्वेन श्रैष्ठ्यस्य दूरा-पास्तत्वाज्जघन्यमेव प्रतिमायां पूजनमिति प्राप्ते । उच्यते—

जिज्ञासोरधिकारित्वाज्ज्ञानदोषाप्रसाधनात् ।
त्रेधा हरित्वान्मूर्ते श्रीकृष्णो भक्त्येह सेव्यताम् ॥ १ ॥

गीतायां चतुर्विधा भजन्ते मामित्यत्रार्तादीनां चतुर्णां भजनेऽधि-कार उक्तः । तेष्वार्तार्थार्थिनौ यावत्फलं भजनं कृत्वा ततस्त्यजत इति जघन्यौ । जिज्ञासुस्तु पूर्वं ज्ञानार्थं भजन्नपि जाते ज्ञाने पुन-रतिशयेन भजतीति ताभ्यामुत्तमः । ज्ञानिनो भजनं त्वत्रैवोक्तमिति नात्र सन्देहः ।

एवं सति जिज्ञासोरल्पबुद्धिताया अदुष्टत्वात्तादृशा[1] एकादश-स्कन्धीयोनविंशाध्यायोक्तरीत्याऽऽत्मनिवेदिना कृतानां पूजादीनां भक्तिपर[2]मकारणत्वं ज्ञात्वा भक्त्यर्थिना वाऽज्ञेनापि सेवने तद्विशेषस्य प्रतिमापूजनस्य न जघन्यत्वं सम्भवति । प्रत्युताऽन्येषां जघन्याधिका-रिणां, फलसाधनत्वात्तैरपि सेवने पूजनं श्रेष्ठमेव महारोगग्रस्तस्वा-स्थ्यसम्पादकौषधवत् । न च 'प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत् । यथा सन्ध्या तथा नित्या विष्णुपूजा स्मृता

---

१. तृतीयान्तं विशेषणमिदम् । २. परकारणमिति ख-पुस्तकम् ।

बुधैः। अशक्तौ विस्तरेणैव प्रातः सम्पूज्य केशवम्। मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत्। मध्याह्ने च विस्तरेण संक्षेपेणाथवा हरिम्। सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेदि'ति कालनिर्णयदीपिकायां नारदीयान्नित्यायास्तस्याः प्रत्यवायप्रागभावपरिपालनमात्रार्थत्वान्न फलसाधकत्वमिति दृष्टान्तवैषम्यान्न श्रैष्ठ्यमिति वाच्यम्। नित्यस्य तावन्मात्रार्थताया अप्रयोजकत्वात्तथा सति यावज्जीवाधिकारकाग्निहोत्रादपि स्वर्गाद्यभावप्रसक्तेः। तद्बोधकस्वर्गकामादिपदवैयर्थ्यप्रसक्तेश्च। किन्तु पूर्वोक्तगीतावाक्येऽधिकारिमुखेन फलसम्बन्धबोधनात् 'श्रुतिस्मृती ममैवाज्ञे यस्त उल्लंघ्य वर्तते। आज्ञाच्छेदी मम द्वेषी मद्भक्तोऽपि न वैष्णव' इति वचनाद्विधेर्नियोगार्थताया एवौचित्यादतस्तदुक्ताकरणे राजदण्डवत्प्रत्यवायः। करणे तु तद्वदेव फलमिति दृष्टान्तवैषम्याभावान्न श्रैष्ठ्यहानिः। 'पूजनं प्रतिमायां च उत्तमं परिकीर्तितमि'ति, कालनिर्णयदीपिकायां प्रातःकालस्थले विष्णुधर्मोत्तरवाक्येनोत्तमत्वस्य कण्ठोक्तत्वाच्च। न चेदमवैदिकपरमिति वाच्यम्। विनिगमकाभावात्। प्रत्युत स्मृत्यर्थसारे 'अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च। शालिग्रामे च चक्राङ्के पटे मुद्रासु देवताः। नित्यं सन्ति हिरण्ये च ब्राह्मणेषु च गोषु च। पौरुषेण च सूक्तेन गायत्र्या प्रणवेन वा। तल्लिङ्गैरेव वा मन्त्रैरर्चयेद्दुर्वेनुज्ञये'ति वाक्येन वैदिकपरत्वप्राप्तेश्च।

न च 'न तस्य प्रतिमा अस्ति तस्य नाम महद्यश' इति माध्यन्दिनश्रुतौ ब्रह्मप्रतिमानिषेधात्तत्पूजनमसाम्प्रतमिति वाच्यम्। श्रुतेः

---

१. न च किन्त्विति ख-पुस्तकम्।

साम्यनिषेधपरत्वात् । वैशम्पायनसहस्रनामव्याख्यायां शंकराचार्यैस्तथा व्याख्यानात् । 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्यन्तरेऽपि तथा निर्णयाच्च ।

किञ्च पूर्वोक्ताग्नेयवाक्ये षट्सु सम्यक्पूजनं स्मृतमिति पूजनस्य षट्सूत्तमत्वमुक्त्वा 'अग्नौ क्रियावतामि'त्यादिना तत्तच्छ्रद्धानुरोधेन पूजार्थं भगवत्स्थितिरित्यत्राध्याहृत्योच्यते नतु स्थितौ वैषम्यबोधनायैवमुक्तिः । तस्य सर्वगतत्वाच्चेति हेत्वन्तरस्य, श्रद्धानुरोधस्य च तेषु तेषु तौल्यात् । अतः कथं जघन्यसम्भावनाऽपि । श्रद्धावैषम्यकृतवैषम्यं तु सर्वत्र समानम् । श्रैष्ठ्यं तूपपादितमेवेति जघन्यतावादिन एव जघन्या इति दिक् ।

ननु यद्येवं तर्ह्येकादशस्कन्धे 'सूर्योऽग्निरि'त्यत्र प्रतिमापि कुतो नोक्तेति चेत् । उच्यते । पूर्वोत्तरग्रन्थमजानन्नेवं वदसि । पूर्वं हि 'भक्तिस्त्वय्युपयुज्येत कीदृशी सद्भिरादृते'त्युद्धवप्रश्ने भक्तिं वक्ष्य'न्मल्लिङ्गमद्भक्तजनदर्शनस्पर्शनार्चनमि'त्यादिना भक्तिसाधनानि वद'न्गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः । यात्राबलिविधानं च सर्ववार्षिकपर्वसु । वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् । ममार्चास्थापने श्रद्धा स्वतः संहृत्य चोद्यमः । उद्यानोपवनाक्रीडपुरमन्दिरकर्मणि । सम्मार्जनोपलेपाभ्यां सेकमण्डलवर्तनैः । गृहशुश्रूषणं मह्यं दासवद्यदमायया । अमानित्वमदम्भित्वं कृतस्यापरिकीर्तनम् । अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम् । यद्यदिष्टतमं लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पत' इत्यन्तैर्मूर्त्तिपूजां सपरिकरामुक्त्वा पश्चा'त्सूर्योऽग्निरि'त्यनेनैकादश पूजास्थानानि, ततो

जघन्यानि, सर्वत्र स्वस्थितिबोधनायाऽमानित्वाय भेददृष्टिवारणाय चाऽवदत् ।

अत एव 'सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् । आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना । वैष्णवे बन्धुसत्कृत्या हृदि खे ध्याननिष्ठया । वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः । स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि । क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत मामि'त्येकं साधनमुक्तवान् । नतु पूर्ववत्स्नानोत्सवादिपूर्वकाणि नानासाधनानि । तेन मूर्तिपूजनमेव मुख्यं भक्तिसाधनमभिप्रेतमिति निश्चीयते । ध्यानसौकर्याच्च । 'धिष्ण्येषु तेषु मद्रूपं शङ्खचक्रगदाम्बुजैः । युक्तं चतुर्भुजं शान्तं ध्यायन्नर्चेत्समाहित' इति वाक्ये ध्यानस्याधिकारत्वेन कथनात्तस्यात्र सौकर्यात् । एवमेव सप्तविंशे महापुरुषपूजाध्याये भगवता मूर्तिपूजैव महता प्रबन्धेन वैदिकतान्त्रिकमिश्रभेदैर्न्यरूपि । अतोऽयं भ्रान्तानां मूर्तिद्वेष्टॄणामेव पर्यनुयोगः ।

नन्वेवं सति तृतीयस्कन्धोक्तनिन्दाया निर्विषयत्वापत्तिरिति चेत् । न । पृथग्भावेन कृतायाः पूजाया विषयत्वात् । प्रकरणेन तथा निश्चयात् । तथा हि—'भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते । स्वभावगुणमार्गेण पुंसां भावो विभिद्यत' इत्युपक्रमे भक्तिमार्गस्य नानात्वादिकं प्रतिज्ञाय'ऽभिसन्धाय यो हिंसामि'त्यादित्रिभिर्नवविधां सगुणभक्तिं वदता राजसभक्तौ या प्रतिमापूजा—'अर्चादावर्चयेद्यो मां पृथग्भावः स राजस' इत्यनेनोक्ता, सैवा'ऽहं सर्वेषु भूतेषु भूतात्माऽवस्थितः सदा । तमवज्ञाय मां मर्त्यः कुरुतेऽर्चाविडम्बनमि'ति द्वाभ्यां निन्द्यते । तादृशतत्कर्ता

च 'द्विषन्तः परकायेषु मानिनो भिन्नदर्शिनः । भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छती'ति । 'अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयाऽनघे । नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिन' इत्यनेन निन्द्यते । तादृशार्चाविधायकवाक्यवैयर्थ्यपरिजिहीर्षया- 'ऽर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितमि'ति तादृश्या एव कालश्च नियम्यते । स्वकर्मकृदिति विशेषणेन धर्मरूपतापि तस्या ज्ञाप्यते । न तु केवलभक्तिरूपता । तत्कर्तुरेव चा'ऽऽत्मनश्च परस्यापि यः करोत्यन्तरोदरम् । तस्य भिन्नदृशो मृत्युं विदधे भयमुल्बणमि'ति भयं चोच्यते ।

एवं सत्युपक्रमे पृथग्भावपदादग्रे निन्दायामवज्ञादिपदेभ्यश्च सगुणं पृथग्दृशा पूजनं यत्क्रियते तदेव सपरिकरं निन्द्यत इति सिद्ध्यति । या पुनर्मद्गुणश्रुतेत्याद्युक्तलक्षणकनिर्गुणभक्तिसाधनाय 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत[1] । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः । येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत' इत्यनेनोच्यते, तस्यास्तु 'निषेविता निमित्ते'त्यादिनोच्यमानेषु साधनेषु 'मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवादनैः । भूतेषु मद्भावनया सत्त्वेनासङ्गमेन चे'त्यनेन धिष्ण्यपूजादीनां सर्वेषु भगवद्भावनस्य चोक्तेः पृथग्भावपदानुक्तेः सर्वगुहाशयपदोक्तेश्च नैकादशवैसम्मत्यम् ।

अत एव—'यो मां सर्वेषु भूतेषु' इत्यस्य सुबोधिन्यामाचार्य-

---

१ सायुज्यैकत्वेति खपाठः ।

चरणैरुक्तं 'भजने प्रमाणाभावमाह मौढ्यादिति'। न तु स्वतन्त्रो भगवन्मार्गो निषिद्धः। स गुणातीत इति वक्ष्यते 'मन्निकेतं तु निर्गुणमि'त्यादिभिः। प्रकरणेन च वाक्यानि सम्बद्धानि तत्प्रकरणस्थमेव गुणदोषं वदन्ति। तत्र पृथग्भावस्तु नोक्तः। द्वादशानुसारेण वा पुरुषोत्तमनारायण ईज्यः। उभयत्रापि भेदगुणयोरभावान्नैतानि दूषणानि सम्बद्धानि भवन्ति। किन्त्वत्रैवैतानि पूर्वोक्तसगुणभक्तिदूषकानी'ति। यद्यपि 'वने तु सात्त्विको वासो ग्रामे राजस उच्यते। तामसं द्यूतसदनं मन्निकेतं तु निर्गुणमि'ति स्थानमेव निर्गुणत्वेनोक्तं तथापि प्रतिमास्थितिमन्तरेण भगवन्निकेतव्यवहाराऽदर्शनात्तत्र मूर्त्तिस्थितिस्तदर्थमङ्गीकार्या। अन्यथा भगवतः सर्वगतत्वेन सर्वस्यैव भगवन्निकेतत्वात्मनिकेतमिति पृथग्वदेत्।

एवं सति यत्र भगवन्मूर्त्यधिष्ठितमन्दिरस्यापि निर्गुणत्वं तत्र प्रतिमायास्तत्पूजनस्य च निर्गुणत्वे कः सन्देहः। अत एवाग्रिमे सेवाविषयकश्रद्धाया अपि निर्गुणत्वमुक्तम्। 'मत्सेवायां तु निर्गुणे'ति। अत एव चैतादृशाया मूर्तिपूजायाः फलं भक्तिरुक्ता। 'मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति'। 'भक्तियोगं स लभते एवं यः पूजयेत मामि'ति। अतोऽत्र न चोद्यावकाशः।

'अर्चायामेव हरये पूजां यः श्रद्धयेहते। न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत' इति तु न भक्तिमार्गीयभक्तविषयकम्। एकत्रायं भगवन्तं जानाति पूजाकरणात्। न तु भक्तेष्वपि। नापि पातिव्रत्यधर्मा, नापि ज्ञानी। अर्चाहर्योर्भेदनिर्देशात्। अन्येषु भावाभावात्। चकारेण भक्ताभक्तयोस्तुल्यताज्ञानवान्। तेन यस्ता-

दृशः स एव प्राकृतत्वेनात्रोच्यत इत्यदोषः। एतेनैव दशमस्कन्धीयमपि व्याख्यातं ज्ञेयम्। देहात्मबुद्धिसत्त्वसाधनादिना भिन्नदृक्त्वबोधनादिति।

नन्वाधुनिकानामेवं भावाभावात्तत्कृतपूजादीनां निन्द्यत्वं दुर्वारमिति चेत्। न। पित्रादिशिक्षया कृतसन्ध्यावन्दनादेरिवोपदेशानुसारेण तथाकरणे पूजायामपि तदप्रसङ्गात्। अत एव भक्तिमार्गीयत्वमपि। तदुपपादितं भक्तिहंसे प्रभुचरणैः। 'भक्तिमार्गीयभजनप्रकारेष्वि'त्यारभ्य 'नात्र लिख्यत' इत्यन्तेन।

किञ्च। सूर्यादिष्वपि 'ध्येयः सदा सवितृमण्डलमध्ये'त्यादिना 'धिष्ण्येष्वेतेषु मद्रूपमि'त्यादिना च ध्यानस्याऽऽवश्यकत्वेनोक्तेस्तस्य च मानसीमूर्तिकल्पनमन्तरेणाऽसिद्धेर्मूर्तिः सर्वेषामेव पूज्येति शैल्यादिषु मूर्तिषु कदर्य एव प्रद्वेषो भवताम्। तथा चोक्तं स्कान्दे उत्तरसंहितायां पाण्डुरङ्गमाहात्म्ये 'शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित्। ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृत्। तीर्थक्षेत्रे स्थिते विष्णौ शिलाबुद्धिं करोति यः। स याति नरकं घोरं पुनरावृत्तिवर्जितम्। अत्र सामान्यतो मूढा हैतुकाः पापबुद्धयः। प्रतिमेति विकत्थन्ते दृष्ट्वाऽऽनन्दात्मकं वपुरि'ति। उत्कलखण्डे च पुरुषोत्तममाहात्म्ये 'अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम्। तदा लभस्व दुर्हणो तेन गच्छ परस्तरमि'ति मन्त्रे दारु ब्रह्मपरत्वेन व्यासचरणैरुक्तम्। विद्याऽरण्येन च वेदभाष्ये तथा व्याख्यातमिति मूर्तिद्वेष्टारो भगवद्द्वेषित्वादन्त्यजा एव। 'अवैष्णवस्तु यो विप्रः स पाषण्डी प्रकीर्तितः। अन्त्यजो भगवद्द्वेषी देवि तत्रैव निर्णय' इति पाद्मोत्तरखण्डे शिववाक्यात्।

न चोक्तवाक्यानां तत्तत्क्षेत्रस्थस्वरूपपरत्वादन्यप्रतिमाप्रद्वेषे न दोष इति वाच्यम् । 'ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृदि'ति हेतूक्तिसामान्योक्त्योर्विरोधात् । अतो मूर्त्तेर्भगवत्त्वं ज्ञात्वा तत्पूजने भक्त्या क्रियमाणे न कोऽपि दोषप्रसङ्गः ।

ननु मूर्त्तेर्भगवत्त्वे विशेषेण तत्र भगवत्स्थितिः प्रयोजिका । सा चाऽनादि[1]सिद्धासु देवादिकृतासु च तास्वस्तु । त्रिविक्रमभट्टादिभिस्तत्र जीर्णोद्धाराऽनङ्गीकारात् । अन्यासु तु 'खण्डिते स्फुटिते दग्धे भ्रष्टे मानविवर्जिते । त्यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु । अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते । दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकस' इति ब्रह्मवाक्ये निमित्तवशादसन्निधानस्याऽप्युक्तत्वात् । त्रिस्थलीसेतौ 'स्त्रीणामनुपनीतानां शूद्राणां च नरेश्वर । स्थापने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य वा । यः शूद्रसंस्कृतं लिङ्गं विष्णुं वा विनमेन्नरः । इहैवात्यन्तदुःखानि पश्यत्यामुष्मिके किमु' इति । ब्रह्मनारदीयस्कान्दवाक्येषु 'यः शूद्रस्थापितं लिङ्गं विष्णुं वा विनमेद्द्विजः । स याति नरकं घोरं यावदाभूतसम्प्लवमि'ति वाक्ये । 'यः शूद्रेणार्चितं लिङ्गं विष्णुं वा विनमेन्नरः । न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि । नमेद्यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा । स सर्वयातनाभोगी यावदाचन्द्रतारकम् । योषिद्भिः पूजितं लिङ्गं विष्णुं वा विनमेन्नरः । स कोटिकुलसंयुक्त आकल्पं रौरवं वसेदि'ति त्रिस्थलीसेतौ नारदवाक्येषु नमनेऽपि दोषस्मरणात् । तत्रैव 'शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा । केशवं वा शिवं वाऽथ

1 साधनादित्यादि खपुस्तक पाठः ।

स्पृष्ट्वा[1] नरकमश्नुत[2]' इति शूद्रादीनां स्पर्शस्यापि पातकस्मरणात्। सन्निधाने च तद्योगात्तासु[3] न स्थितिरित्यङ्गीकार्यम्। तथा च तादृश्याः पूजने कथं न दोष इति चेत्—

उच्यते। मूर्तावस्ति त्रेधा भगवत्त्वम्। सर्वस्य भगवद्रूपत्वेन तस्या अपि भगवद्रूपत्वात्। साकारब्रह्मणस्तत्र स्थितत्वात्। मन्त्रादिभिरावाहनेन सन्निधानाधानाच्चेति। तत्र 'खण्डिते स्फुटित' इति वाक्याद्यदसन्निधानस्वरूपं दूषणमायुष्मतोक्तं तत्तु देवान्तरविषयकम्। दिवौकस इति पदाद्बहुवचनाच्च। न तु भगवन्मूर्तिविषयकम्। भगवतः सर्वत्र सन्निहिततयाऽऽवाहनस्य सन्निधायकत्वाभावेन खण्डितत्वादीनामसन्निधापकत्वाभावस्याऽप्यर्थादेव सिद्धेः। अत एवोक्तं विष्णुधर्मोत्तरे तृतीयकाण्डे आवाहनप्रयोजनाऽध्याये। 'वज्र उवाच। विष्णुः सर्वगतो देवो महद्भ्योऽपि महत्तरः। सूक्ष्मेभ्यश्चातिसूक्ष्मश्च सर्वव्यापी जगन्मयः। नास्ति किञ्चिज्जगत्यस्मिन्यत्र नास्ति जनार्दनः। सदसच्च महाभाग तेन व्याप्तं महात्मना। आवाहनेन किं कार्यं तस्य सर्वगतस्य तु। मार्कण्डेय उवाच। आवाहनमथाऽत्रापि क्रियते यज्जगत्पतेः। नित्यं सन्निहितस्यापि सर्वत्र परमेष्ठिनः। केवलं कारणं तत्र स्वमनस्तुष्टिकारणम्। आवाहितो महादेवस्तत्र सन्निहितोऽपि वे'ति। अत एव 'दशपञ्चाङ्गुला मुख्या मध्यमा द्वादशाङ्गुला। अष्टाङ्गुलाऽधमा प्रोक्ता न्यूनाधिक्यं न कारयेत्। प्रतिष्ठा विफला तस्य पूजनं निष्फलं भवेत्। मानाङ्गुलिविहीना या प्रतिमा यत्र तिष्ठती'ति गौतमीतन्त्रवाक्योक्तो मानहीनत्वादिदो-

---

१ दृष्ट्वेति खपाठः। २ आप्नुयादिति कपाठः। ३ तदनुयोगादिति कपाठः।

षोऽपि न । नापि 'हन्त्यर्थहीना कर्तारं मन्त्रहीना तु ऋत्विजम् । स्त्रियं लक्षणहीना तु न प्रतिष्ठासमो रिपुरि'ति नारदोक्तः प्रतिष्ठादोषः । तदुद्धारार्थं तथाप्राकट्यात् । प्रतिष्ठाया विश्वासदार्ढ्यार्थत्वाच्च ।

एवं सति ये उपासनामार्गीयास्तत्राप्यज्ञा अदृढविश्वासास्तेषां हृदि तथा स्फुरतीति तान्प्रत्येवैषा व्यवस्था बिभीषिका वा । न भक्तान्ज्ञानिनो वा प्रत्यकिञ्चित्करा । अत एव प्रतिष्ठानमनादिकृतोऽपि न तेषां दोषः । नापि 'खण्डिता स्फुटिता दग्धा यस्मादर्चा भयावहा । तस्मात्समुद्धरेत्तां तु पूर्वोक्तविधिना नर' इतिनारदपञ्चरात्रोक्तो जीर्णोद्धारः । भक्तिमार्गविरुद्धत्वात् । भक्तेः स्नेहरूपत्वात् । स्निग्धस्य तादृशत्व उपचारकरणस्यैवौचित्यात् । रागस्य भयप्रतिपक्षत्वाच्च । प्रतिमाया अपि न भयावहत्वम् । दुष्टस्पर्शादौ तु स्वस्त्ययनादिकरणं पञ्चामृतस्नानं महाऽभिषेकादिकं च भक्त्यङ्गतया प्राप्तं स्नेहभावेन कार्यम् । श्रीनन्दकृतजातकर्मादिवत् । तावता 'द्रव्यवत्कृतशौचानां देवतार्चानां पुनः प्रतिष्ठापनेन शुद्धिरि'ति विष्णुवाक्यमप्यनुकूलं भवतु नाम । प्रतिमाभङ्ग उपवासोऽपि स्नेहानुसारेणैव कार्यः । 'न राज्ञो विप्लवेऽश्नीयात्सुरार्चाविप्लवे तथे'ति विष्णुधर्मवाक्यमपि तेनैवाऽनुकूलं भवतु नाम । विरुद्धवाक्यानि त्वभक्तपराणि ।

यद्यपि तद्रूपादिहेतुद्वयस्य सर्वसाधारणत्वं तथाऽपि शालिग्रामादिपूजामनुक्त्वा भगवता प्रतिमापूजैव यन्महता प्रपञ्चेन निरूपिता तेन तत्र कश्चिद्विशेषोऽस्तीति ज्ञायते । स च ज्ञानिभक्तमेनमुद्ध-

---

१ ज्ञानिभक्तं प्रतीति कपाठः ।

रिष्यामीतीच्छया मृदादेः प्रादुर्भूतत्वरूप एकः । यथा स्तम्भात्प्रह्लादार्थम् । जीवक्रिया तु श्रीजगन्नाथस्वरूप इवा<sup></sup>ऽभिव्यक्त्यर्थं व्यापृताऽपीच्छाशरीर एव प्रविशतीत्यकिञ्चित्करा । एनं जीवमेवमाविर्भूयोद्धरिष्यामीत्याकारा, ब्रह्मणः साकारव्यापकतया मुखे मुखस्य हस्ते हस्तस्यैवं स्थितिरित्यपरः । तेन सर्वेषां कटककुण्डलाद्युपचाराणां साक्षाद्विनियोग इति । न चाधेयत्वेन स्थितौ कथं साक्षाद्विनियोग इत्याशङ्कनीयम् । भगवतः सर्वान्तरत्वात् । 'यः पृथिवीमन्तर' इत्यादिश्रुतेः । अन्तरयतीत्यन्तरः । अतो यत्रैवं विशेषतो[2] भगवतो भगवत्त्वं तत्पूजातद्वेष्टारो लघुतमा एवेति दिक् ।

नन्वस्त्वेवं तथाऽपि सर्वासु मूर्तिषु विशेषाच्छ्रीकृष्णमूर्तिरेव सेव्येति कोऽयं निर्बन्धः । उच्यते । भजनं हि मूलरूप एव मुख्यम् । फलनान्तरीयकत्वात् । मूलरूपता च **'कृष्णस्तु भगवान्स्वयम्' 'कृषिर्भूवाचकः शब्द'** इत्यादिवाक्यैस्तत्रैव सिद्धा । इतरत्र त्ववतारादिरूपा । तदुपपादितमाचार्यैः सुबोधिनीभाष्यादिषु- **'मूर्तौ च स्थितिरावेशरूपा । वन्हेरयसीव ।'** एवं सति मूर्त्यन्तरे य आवेशः सोऽवतारादिरूपस्य । तच्च भगवदंशभूतमिति द्व्यन्तरितत्वं मूर्तेः । श्रीकृष्णमूर्तौ तु मूलरूपेणेति साक्षात्त्वमित्यतोऽयं निर्बन्धः ।

अथ मूर्त्यन्तरेऽपि भक्तिविशेषेण स्वयमेव चेदाविर्भवेत् । भवतु नाम । तथाऽपि साधनदशायां तत्तत्प्रतीतिरेव पूर्वं भवतीति द्व्यन्तरितत्वमबाधम् । एतेनैव पञ्चायतनपक्षोऽप्यपास्तः । 'यथा

---

१ इह खपुस्तकेऽशुद्धबहुलोऽन्य एव पाठ उपलभ्यते स च व्यर्थाडम्बरभिया परित्यक्तः । २ विशेषत इति खपुस्तके नास्ति ।

हि स्कन्धशाखानां तरोर्मूलाऽवसेचनम् । एवमाराधनं विष्णोः सर्वेषामात्मनश्च ही'त्यष्टमस्कन्धपञ्चमाध्यायवचनेन, 'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्ये'ति चतुर्थसमाप्तौ वचनेन च, तेनैव[1] सर्वसिद्धेरुक्तत्वाच्च । नाऽपि तस्य पक्षस्य वैयर्थ्यम् । अनन्यभिन्नान्साधारणान्प्रतिकृतार्थत्वादिति ।

ननु प्रतिमायामेवमावेशः सर्वदा, कदाचिद्वा । सोऽपि सर्वान्प्रति, कञ्चित्प्रति वा । अविशिष्टो विशिष्टो वेति विचार्यताम् । तत्र कक्षात्रयाद्यपक्षास्तु न भवन्ति । सर्वदा सर्वेषामेकरूपानुभवात् । द्वितीया एव तु साधीयांसः । तथा सत्ययमपि तस्यावेशोऽयःस्थापनवत् । अत्र भक्तिरेव तस्य तादृशी निमित्तभूता वाच्या । सा च रत्याख्यमनोविकाररूपत्वादान्तरा, व्यधिकरणा वेति न बहिरावेशयितुं शक्नोति । तथा सति साधितमपि मूर्तौ भगवत्त्वमकिञ्चित्करमिति चेत्—

उच्यते । 'भक्त्या तुतोष भगवान्गजयूथपाय' 'भक्त्यैव तुष्टिमभ्येती'त्यादिवाक्यैर्भक्तेर्भगवत्तोषहेतुत्वमविवादम् । तोषे चाऽविर्भावोऽप्यविवादः । सामानाधिकरण्यात् । स चाऽरणौ वह्नेरिव सत एवेति न पूर्वोक्तानुपपत्तिगन्धोऽपि । आविर्भावादेव चानुभावानुभवो भक्तानाम् । आरम्भदशायां तदभावेऽपि भावनासौकर्यं त्वविवादमेव । सा च गुरूपदेशमन्तरेणानुपपन्ना । स च तद्भक्तिमन्तरेण तथा । साऽपि यस्य देवे परा भक्तिर्यथा देवे तथा

---

१ भगवत्पूजनेनैवेत्यर्थः ।

गुरावि'ति श्रुतेरुत्कैटैवाऽपेक्षितेति तारतम्येऽपि न किञ्चिदनुपपन्नम्। इदं च सर्वं सपरिकरं निबन्धे सेवाप्रकरणे 'तद्रूपं तत्र च स्थितमि'त्यादिना प्रकटीकृतमाचार्यैः। सेवनप्रकारश्च दशमस्कन्धसिद्धो व्रजस्थानां गृह्यते। 'केवलेन हि भावेने'त्यादिना तेषां प्रशंसनात्। 'देशान्पुण्यानाश्रयेत मद्भक्तैः साधुभिः श्रितान्। देवासुरमनुष्येषु मद्भक्ताचरितानि चे'त्यनेन भक्ताचरिताश्रयणाऽऽज्ञापनात्। 'गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुरि'त्याज्ञापनाच्च। पञ्चायतनपूजादिकं त्वनन्यताज्ञापनादेव निरस्तमिति न कोऽपि शङ्कालेशः।

एवं च 'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः। प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्ये'ति चतुर्थस्कन्धसमाप्तिस्थनारदवाक्यम्। सभापर्वदशमस्कन्धस्थभीष्मसहदेववाक्यं च सङ्गतं भवति। फलं च सेवाफलविवरणे। साधनभक्तीनां स्वरूपं भगवतः प्रेमैकलभ्यत्वादिकं च प्रभुचरणैर्भक्तिहंसविद्वन्मण्डनादौ प्रपञ्चितमित्युपरम्यते॥

इति श्रीगोस्वामिश्रीपुरुषोत्तमविरचितो मूर्तिपूजनवादः समाप्तः।

---

१ रेकदैवाऽपेक्षितेति ख पाठः।

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां

## गोस्वामिश्रीमत्पुरुषोत्तमविरचित

# ऊर्द्ध्वपुण्ड्रधारणवादः ।

श्रीकृष्णसेवनरसैस्तिरस्कृतरसान्तरान् ।
तदेकभावनपरानूर्द्ध्वपुण्ड्रधरान्नुमः ॥ १ ॥

नन्विदमहृदयङ्गमम् । अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेदिति प्रकारकस्य, **'व्रतमेतत्पाशुपतं पशुपाशविमोक्षणाये'**त्यथर्वशिरसि श्रावितस्य भस्मोद्धूलनस्य पाशुपतविद्याप्रकरणाऽऽम्नातत्वेन तदवरुद्धत्वेऽपि यथोपनयनमध्ययनविध्येकवाक्यतापन्नविधिविहितत्वादध्ययनाङ्गं सदधिकारापादकत्वेन सर्वकर्मार्थमेवं पाशुपतविद्याङ्गमपि भस्मोद्धूलनं चित्तशुद्ध्यापादकत्वेन सकलविद्याङ्गमिति भट्टोजिदीक्षितैर्महता प्रपञ्चेन व्यवस्थापितमतस्तदपेक्षयोर्द्ध्वपुण्ड्रधारणस्याधिक्याभावादिति चेत्—मैवम् । तस्य सकलब्रह्मविद्याङ्गचित्तशुद्ध्यापादकत्वे मानाऽभावात् । न च **'पापं नाशयते कृत्स्नमपि जन्मशतार्जित'**मिति जाबालश्रुतिरेव मानमिति वाच्यम् । पापनाशमात्रस्यैवाऽत्र श्रावणेन तस्य चित्तशुद्धि-

जनकताया अश्रुतत्वात् । 'अन्तःकरणशुद्धा ये तान्विभूतिः पवित्रयेत् । पावनाः किं प्रकीर्त्यन्ते रासभा भस्मधूसरा' इति काशीखण्डपञ्चत्रिंशाऽध्यायीयस्कन्दवाक्ये चित्तशुद्ध्युत्तरकालीनपावित्र्यबोधनेनाऽस्य तदुत्तरकालीनपापनाशकत्वाऽनिश्चयाच्च ।

न च काशीखण्डस्य भस्मस्नानविषयत्वान्नैतत्परत्वमिति वाच्यम् । भस्मस्नाने 'अग्नि'रित्यादि पाशुपतमन्त्राणामेव स्मार्तैः पाठात् । न चैवं सति श्रौतकृत्स्नपदे सङ्कोचाऽऽपत्तिरिति वाच्यम् । निरवकाशस्मृतिबाधाऽपेक्षया सङ्कोचस्याऽल्पदूषणत्वात् । श्रुतौ सन्देह उपबृंहणभूतपुराणस्यैव निर्णायकत्वेन तन्नैर्बल्यस्याऽप्यशक्यवचनत्वात् । सप्तम्यां कक्षायां स्वयमपि तथाङ्गीकाराच्च । न चायं ब्राह्मस्नानस्तुत्यर्थोऽर्थवाद इति स्नानेन तस्य चित्तशोधकत्वनिवृत्तिरिति वाच्यम् । वाक्यार्थबाधप्रसङ्गात् । छागादिषु पशुत्वस्य प्रत्यक्षसिद्धत्वेन 'अन्ये त्वपशव' इत्यत्र गौणीवदत्र पुरुषान्तःकरणनिष्ठस्य पावित्र्यस्याऽप्रत्यक्षत्वेन तन्न्यूनताया दुर्ज्ञेयतया गौण्या वक्तुमशक्यत्वात् ।

एवं सिद्धेऽस्योपबृंहणत्वे 'अग्नि'रित्यादिमन्त्रविधेयं भस्मोद्धूलनं सकलब्रह्मविद्याङ्गम् । विद्याङ्गत्वे सति सकलब्रह्मविद्यापेक्षितोपकारजनकत्वात् । शमदमादिवदित्यनुमानमपि निरस्तम् । स्वबुद्धिकल्पितन्यायापेक्षयोपबृंहणभूतपुराणस्यैव ज्यायस्त्वात् । ननु बाह्यपापनिवर्तकत्वेनैव सर्वविद्याङ्गत्वं तर्ह्यस्त्विति चेत्—किमेतज्जन्मीयतन्निवर्तकत्वं विवक्षितमुतजन्मान्तरीयतन्निवर्तकत्वम् । नाद्यः । 'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्यां शयानो रुद्राध्यायी मुच्यते सर्वपापै'रिति शातातपस्मृत्युक्तप्रायश्चित्ते प्रवेशाद्विद्याङ्गत्वहानेः ।

न द्वितीयः । 'द्विषन्तः पापकृत्या'मिति श्रुतेः पापसत्वेऽपि विद्योत्पत्त्या पापनिवृत्तेरप्रयोजकत्वात् ।

ननु जाबालश्रुतेरुपनिषन्निष्ठत्वेन तदुक्तोद्धूलनस्य विद्याङ्गभूतपापक्षयहेतुत्वे सिद्धे काशीखण्डवाक्यस्य शातातपोक्तप्रायश्चित्ताङ्गभूतोद्धूलनादिपरत्वेनाऽप्युपपत्तेर्नास्यैतदुपबृंहणत्वमिति चेत्—न । उपनिषन्निष्ठतामात्रस्य विद्याङ्गत्वाऽनिश्चायकत्वात् । अन्यथा बृहदारण्यकीयपञ्चाग्निविद्योक्तायाः गर्भधारणभावादिसाधनक्रियाया अपि तथात्वाऽऽपत्तेः । किञ्च । काशीखण्डीयवाक्यस्याऽन्यपरत्वेऽप्युक्तोद्धूलनस्य सकलविद्याङ्गभूतपापक्षयहेतुत्वं न शक्यवचनम् । **अथ रात्रावग्निहोत्रभस्मना 'अग्नेर्भस्मासीदं विष्णुर्स्त्रीणि पदेति मन्त्रैर्विष्णुगायत्र्या प्रणवेनोद्धूलनं कुर्यादि'**ति वासुदेवोपनिषदुक्तगोपीचन्दनधारणाङ्गभूतोद्धूलनविधियैवर्थ्यापत्तेः । न च तत्पापक्षयाऽतिरिक्तफलकमिति वाच्यम् । एतदनन्तरमेव—**'एवं विधिना गोपीचन्दनं यो धारयेद्यस्त्वेतदधीते वा स सर्वपातकेभ्यः पूतो भवति । पापबुद्धिस्तस्य न जायत'** इति फलश्रुतिविरोधात् । अतोऽत्रैव चित्तशुद्धिलिङ्गदर्शनादस्यैव तथात्वं, न जाबालोक्तस्येति जाबालोक्तोद्धूलने चित्तशोधकत्वस्य निवृत्तौ सकलब्रह्मविद्यापेक्षितोपकारजनकत्वस्य विशेषणस्याऽभावाद्धेतुः स्वरूपासिद्धः ।

एवं च जाबालोक्तोद्धूलनस्य विद्यान्तरेष्वपेक्षाभावे सिद्धेऽपेक्षाया लिङ्गप्रमाणेन्तर्भावमपि महता प्रयासेन साधयित्वाऽपेक्षितत्वेनानुमानस्याऽप्रयोजकत्वनिरासोऽपि काकदन्तविचारमेवानुसरति । अतश्चित्तशुद्धेः सर्वविद्यापेक्षितत्वमिच्छद्भिः स्वोक्तानुमाने स्वरूपाऽसि-

१ विशेष्यस्येति खपुस्तकम् । २ स्वरूपासिद्धेरिति कपुस्तकम् ।

द्धिवारणाय 'अग्नि'रित्यादिमन्त्रविधेयमिति पक्षविशेषणं विहाय, अग्नेर्भस्मासीत्यादिमन्त्रविधेयमिति विशेषणं दातव्यमिति युक्तम् । ननु 'व्रतमेतत्पाशुपतं पशुपाशविमोक्षाये'ति श्रुतौ विमोक्षपदेन करणव्युत्पत्त्या विमोक्षसाधनभूतं विद्यामात्रमुच्यते । 'एतावदरे खल्वमृतत्वमि'त्यत्राऽमृतत्वपदेनाऽमृतत्वसाधनवत् । अतः श्रुतिरप्येषा शैवानुमाने न प्रमाणमिति नाप्रयोजकत्वं नापि स्वरूपासिद्धिरिति चेत्—न । दृष्टान्ते केवलामृतविमोक्षपदेन दार्ष्टान्तिके केवलाऽमृतविमोक्षपदाभावेनोभयोर्वैषम्यात् । विमुक्तेर्नित्यनिरतिशयसुखरूपत्वेन पशुपाशविमुक्तेर्दुःखाभावरूपत्वेन भेदात्पशुपाशविमोक्षपदस्य श्रुत्या सर्वसाधारणत्वाऽभावात् । विमोक्षपदस्य करणव्युत्पत्तावपि पशुपाशपदविशिष्टतया तत्सान्निध्येन वाचकत्वे नियन्त्रिते पशुपाशविमोक्षरूपफलकरणभूतपाशुपतविद्याया एव बोधसम्भवेन विमुक्तिसाधनीभूतविद्यान्तरपरत्वे निवृत्ते सर्वविद्यापरत्वस्याऽशक्यवचनत्वाच्च ।

नापि 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्ण'मिति मुण्डकवाक्यं तत्र प्रमाणम् । शिरस्यङ्गारधारणरूपस्य मुण्डकाध्ययनाङ्गभूतव्रतस्य तत्राभिप्रेतत्वेनोद्धूलनस्य तत्राऽशक्यवचनत्वात् । ननु सौरसंहितायामथर्वशिरःप्रसिद्धं पाशुपतव्रतमेव शिरोव्रतपदेनोच्यते । 'इदं शिरोव्रतं चीर्णं विधिवद्यैर्द्विजातिभिः । तेषामेव परां विद्यां वदेदज्ञानबाधिकाम् ।' शिरोव्रतं नाम शिरस्याऽथर्वणश्रुतेर्यदुक्तं तद्धि, नैवान्यत्तत्पाशुपतसंहितमित्याद्युक्त्वा 'अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना । सर्वा-

---

१ शैवानुमान इति खपुस्तकम् । २ विमोक्षमात्रं कपुस्तके ।

ङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वय'मिति । ब्रह्मोत्तरखण्डेऽपि 'उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये । आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थित'मिति ।

पूर्वोक्तव्रते तु शिरोव्रतपदमध्यापकप्रसिद्धम् । तत्प्रसिद्ध्यपेक्षया पुराणप्रसिद्धेर्बलिष्ठत्वादिदमेव शिरोव्रतत्वेन ग्राह्यम् । अन्यथैतद्वाक्यविरोधापत्तेरिति चेत्—न[1] । पूर्ववाक्ये, समः समान आह्वयो यस्येति समाह्वयः । शिरोव्रतं समाह्वयो यस्य तच्छिरोव्रतसमाह्वयमिति समासादुद्धूलनस्य शिरोव्रतसमाननामकत्वबोधनात् । द्वितीयवाक्ये पूर्ववत्तस्यैवाऽथर्वशिरःस्थितत्वकथनेन शिरःसंबन्धि व्रतं शिरोव्रतमिति योगबोधनाद्रूढिर्योगमपहरतीत्यतोऽस्यानुपबृंहणत्वानुसन्धानेन पुरःस्फूर्तिकं तद्विरोधमनादृत्यैव व्यासचरणैः, 'स्वाध्यायस्य तथात्वेन समाचारेधिकाराच्चे'ति सूत्रेऽध्यापकप्रसिद्धस्य समाचारग्रन्थोक्तस्यैव शिरोव्रतस्याऽऽदरात् । अन्यथा 'स्मृतेश्चे'त्यादिसूत्रप्रणयने पुराणमुपजीवतः पुराणप्रणेतुस्तदनादराऽनुपपत्तेः । तत्सूत्रव्याख्याने सर्वैरेव भाष्यकारैर्वेदव्रतविशेषरूपस्य तस्याऽऽदरणानुपपत्तेश्च । अत एवाऽध्यापकप्रसिद्धिनैर्बल्यमपि परिहृतम् । अन्यथाऽन्धपरम्परात्वाऽऽपत्त्या तदाचारविप्लवप्रसङ्गात् । न च कृत्वाचिन्तार्थमेतन्नादृतमिति वाच्यम् । असति बाधके कृत्वाचिन्ताङ्गीकारस्य जघन्यत्वात् । अत एवान्यैस्तदनादरात् । यदपि 'तेषामेवैतां ब्रह्मविद्यां वदेते'ति ब्रह्मविद्यापदस्य ब्रह्मविषया विद्या ब्रह्मविद्येति योगेन सकलब्रह्मविद्यापरत्वसिध्या ब्रह्मविषयत्वरूपहेतुसाधारण्यात्सर्वासु विद्यास्वङ्गत्वेनाऽथर्वशिरःसिद्धशिरोव्रतप्राप्तिर्हेतु-

१ तन्नेति कपुस्तम् ।

साधारण्येन हेतुमति विधेयप्राप्तेरर्थबलसिद्धत्वादित्युक्तम् । तदप्यनुपपन्नम् । **'ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे'** त्युपक्रम्य मुण्डकोपनिषद्रूपब्रह्मविद्यापाठेन तस्यां ब्रह्मविद्यापदस्य रूढत्वनिश्चयादुपसंहारगतेऽपि ब्रह्मविद्यापदे **'एतामि'**ति प्रकृतपरामर्शिपदसान्निध्येन तस्या एव स्फूर्तेरवयवशक्तेस्तत्राऽभावेन हेतुमत्त्वस्यैव तत्राऽभावात् ।

न च **'निर्मन्थ्य'**न्यायेन योगरूढत्वं शङ्क्यम् । तथा सति समाचारग्रन्थोक्तस्यैव सर्वत्राऽऽपत्त्या युष्मदभीष्टासिद्धेः । आचारविरोधेन तस्याऽनिष्टत्वात्त्वदभिमतस्याऽपि तथात्वाच्च । तस्मादिदं वाक्यमपि न तत्र प्रमाणम् ।

एवं तदुक्तश्रुतिवाक्ययोस्तत्राऽप्रामाण्ये अपेक्षाभावेन लिङ्गस्याऽप्यभावे, सत्यामपि तस्यां लिङ्गस्यान्यपरत्वेनाऽपि तत्राऽप्रामाण्ये सिद्धे तदुक्तन्यायस्याऽप्रयोजकत्वात् । असिद्धत्वाच्च । तत्र वैष्णवस्योक्तं भस्मोद्धूलनं न सकलविद्याङ्गम् । विद्याविशेषप्रकरणनियन्त्रितत्वात् । पूर्वोऽतिथिभ्योऽश्नीयादिति ? वैश्वानरविद्योक्तातिथिप्राग्भोजनवदित्यनुमानस्य प्रत्यनुमानत्वमपि दुर्वारमेव । विद्याविशेषप्रकरणनियन्त्रितत्वं च प्रकरणीयविद्यावशीकृतत्वम् । न च तस्यासिद्धत्वम् । शैवोपन्यस्तश्रुतिलिङ्गवाक्यानामन्यपरत्वस्योपपादितत्वेन तैः सर्वविद्याङ्गत्वापादनाशक्तौ प्रकरणस्यैव प्रमाणत्वेन हेतावसिद्धिपरिहारात् । एवं त्रिपुण्ड्रस्यापि कालाग्निरुद्रोपनिषदुक्तस्य शैवविद्याङ्गत्वमेव । व्रतमेतच्छाम्भवमिति तत्रैवोक्तेः । प्रकरणसमाख्याभ्यां तन्नियमनात् । बृहज्जाबालश्रुतौ तस्यापि पाशुप-

तविद्योक्तभस्मोद्धूलनतुल्यफलत्वेन प्रपञ्चिततया कालाग्निरुद्रस्थापुनर्भवपदस्यापि पशुपाशविमोक्षरूपार्थस्यैवादरणीयत्वाच्च । एवं सिद्धे तयोः शैवविद्याङ्गत्वे 'ततोधिकारास्त्वनुपनीतशतमेकेनोपनीतेन तत्सम'मित्यादिना 'ऽथर्वशिरःशिखाध्यायी शतमेकमेकेन मन्त्रराजजापकेन तत्सममि'त्यन्तेन श्रावितविद्यावदुत्कर्षविश्रान्तिसाधितपरमोत्कर्षासु तापनीयरूपाऽथर्वणस्य रहस्याद्युक्तविद्यासु तदनुपयोगान्न तयोरूर्द्ध्वपुण्ड्रादाधिक्यमिति सिद्धम् ।

अतः परं तादृगत्युत्कृष्टविद्योपयुक्तमूर्द्ध्वपुण्ड्रं विचार्यते । तच्च वासुदेवोपनिषद्युक्तम् । '**ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ भगवन्नूर्द्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादियुतं मे ब्रूहीति । तꣳहोवाच भगवान् वासुदेवो वैकुण्ठस्थानोद्भवं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारित**'मित्युपक्रम्य गोपीचन्दनाख्यं द्रव्यं प्रथमकण्डिकायामुक्त्वा द्वितीयकण्डिकायां । **अथ गोपीचन्दनं नमस्कृत्योद्धृत्य, गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव । चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव । इमं मे गङ्गे यमुने सरस्वति**[1] **शुतुद्रि स्तोमं सचता परुष्णिया । असिक्निया मरुद्वृधे वितस्तयार्जीकीये शृणुह्यासुषोमया । इति जलमादाय विष्णोर्नुकमिति मर्दयेत् । अतो देवा अवन्तु न** इत्येताभिस्तत्पुरुषाय[2] **विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयादिति** विष्णुगायत्र्या त्रिवारमभिमन्त्र्य **शङ्खचक्रगदापाणे द्वारकानिलयाच्युत । गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतमिति, मां** ध्यात्वा गृहस्थो ललाटादिद्वादशस्थानेषु अनामिकया-

---

१ अयं मंत्रः कपुस्तके नास्ति । २ अयं मंत्रः कपुस्तके नास्ति ।

ङ्गुल्या विष्णुगायत्र्या केशवादिभिर्द्वादशनामभिर्वा धारयेत् । ब्रह्मचारी[1] वानप्रस्थो वा ललाटकण्ठहृदयबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेत् । यतिस्तु तर्जन्या शिरोललाटहृदयेषु प्रणवेन धारयेत् । ब्रह्मादयस्तिस्रो व्याहृतयस्त्रीणि छंदांसि त्रयो वेदास्त्रयः स्वरास्त्रयोऽग्नयो ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रय ऊर्द्ध्वाकारा अकारोकारमकारा एते सर्वे प्रणवमयोर्ध्वपुण्ड्रत्रयात्मकाः । तदेतदोमित्येकत्वं संभावयन् परमहंसो ललाटे प्रणवेनैकमूर्द्ध्वपुण्ड्रं धारये'दिति तद्विधेरुक्तत्वात् ।

न च [2]प्रसिद्धशाखासु तस्या उपनिषदोऽनुपलम्भादप्रामाण्यं शङ्क्यम् । संप्रदायाध्ययनरहितानामपि खिलशाखास्थमन्त्राणां शिवसङ्कल्पादीनां तत्र तत्र कर्मणि शिष्टकृतविनियोगदर्शनवदस्या अपि तत्तद्देशस्थाऽद्वैतब्रह्मतत्त्ववादिसङ्गृहीतपुस्तकेष्ववगम्यमानत्वेन कालाग्निरुद्रोपनिषद्बदादरदर्शनात् । तैत्तिरीयशाखाश्रितवैखानसाख्यगृह्यसूत्र '[3]इति भूति से'ति भस्म गृहीत्वा ललाटहृदयबाहुकण्ठादी- 'नादित्यः सोमो [4]मन इत्यूर्द्ध्वाङ्गमालिप्यापोहिष्ठे'ति संप्रोक्ष्य 'ते अग्ने तेने'त्यादिरग्नि'मुद्वयं तमसस्परीत्यादित्यमुपतिष्ठत' इत्युपस्थानाङ्गत्वेन तद्विहितम् । तदेवाऽऽश्रित्य द्रविडदेशस्थैर्याज्ञिकैरग्निहोत्रानन्तरं तदीयभस्मनोर्द्ध्वपुण्ड्रं ध्रियमाणं दृश्यते । तथा तत्तन्निबन्धलिखितेषु पुराणेष्वपि दृश्यते । तत्तावत्त्रिविधम् । जातिप्रयुक्तं, कर्माङ्गभूतं, सम्प्रदायानुरोधि च । तत्राऽऽद्यं मदनपारिजाते ब्राह्मे

---

१ इत आरभ्य यतिस्त्वित्यन्तः पूर्वतनो भागः खपुस्तके नास्ति । २ अत्र खपुस्तके भूयानशुद्धः पाठः । ३ अपीति खपाठः । ४ नम इति कपुस्तकम् ।

'ऊर्ध्वपुण्ड्रं द्विजः कुर्यात् क्षत्रियस्तु त्रिपुण्ड्रकम् । अर्द्धचन्द्रं तु वैश्यानां वर्तुलं शूद्रजातिष्वि'ति । धर्मप्रवृत्तौ शाकलश्च । 'त्रिपुण्ड्रं सुरविप्राणां वर्तुलं नृपवैश्ययोः । अर्द्धचन्द्रं तु शूद्राणामन्येषामूर्ध्वपुण्ड्रक'मिति । द्वितीयमाचारमाधवे ब्रह्माण्डे 'पूजाकाले जपे होमे सायंप्रातः समाहितः । नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रक'मिति । मदनपारिजाते च ब्राह्मे 'यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् । भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृतम्' । स्कान्दे मार्गशीर्षमाहात्म्येऽपीदमेव वाक्यम् । धर्मप्रवृत्तौ च स्मृतिसारसमुच्चये 'स्वाध्यायजपहोमादि सन्ध्यादानादिकं च यत् । ऊर्ध्वपुण्ड्रं विना कुर्यात्तत्सर्वं निष्फलं भवे'दिति । आचारमयूखे च ब्रह्माण्डे 'मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् । एभिर्द्रव्यैर्यथाकालमूर्ध्वपुण्ड्रं भवेत्सदा । स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना । देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये । जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धय' इति । तृतीयं धर्मप्रवृत्तौ स्मृतिसारसमुच्चये ऊर्द्धपुण्ड्रविधिं प्रक्रम्य 'ललाटे तिलकं कृत्वा कुर्युः शैवाश्च वैष्णवाः । तर्पणश्चापि वै श्राद्धमन्यथा निष्फलं भवेत्' । आचारमयूखे च शौनकः । 'ऊर्ध्वपुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः । मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभि'रिति । 'ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कदाचन । धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति य' इति पाद्मोत्तरखण्डे ऊर्द्धपुण्ड्राध्याये चोक्तम् ।

एवं प्रकारत्रयमध्ये तृतीय एव प्रबलः । जातिप्रयुक्त्या पुण्ड्रा-

---

१ इत आरभ्य पङ्क्तिद्वयात्मको भागः खपुस्तके नास्ति ।

न्तरस्यापि स्मरणाद्विकल्पप्राप्तौ सम्प्रदायवाक्यस्य व्यवस्थापकत्वात् । 'संयोगपृथक्त्वेन' कर्माङ्गत्वाद्यसिद्धेश्च[1] । पूर्वात्परबलीयस्त्वमिति न्यायानुगृहीतत्वाच्च । न चेदमप्रयोजकम् । पूर्वादेव सिद्धौ परविधानवैयर्थ्यापातात् । न च सम्प्रदायवाक्यस्याऽन्यत्र सावकाशत्वेन ब्राह्मणेतरपरत्वं शङ्क्यम् । शौनकवाक्यस्थब्राह्मणलिङ्गविरोधात् । वाक्यान्तरेषु ब्राह्मणस्यैव द्वादशपुण्ड्रविधानात् । नाप्यवैदिकपरत्वम् । पूर्वोक्तब्राह्मस्कान्दादिवाक्यविरोधात् । यत्तु 'वेदमार्गैकनिष्ठानां वेदोक्तेनैव वर्त्मना । ललाटे भस्मना तिर्यक् त्रिपुण्ड्रं धार्यमेव हि । ललाटे भस्मना तिर्यक् त्रिपुण्ड्रस्य तु धारणम् । विना पुण्ड्रान्तरं मोहाद्धारयन् पतति क्षणादि'ति सूतसंहितावाक्यं, तत्तु शैवपरम् । प्रकरणेन तथा निश्चयात् । पूर्वग्रन्थे शिवमाहात्म्यादिकथनेन तदीयस्यैव प्रस्तावाऽवगमात् । कर्मजडपरं वा तत् । एकपदेन वेदान्तविचारशून्यतत्स्वरूपबोधनात् । वेदपदस्य कर्मकाण्ड एव प्रचुरप्रयोगात् । 'वेदाः साङ्गोपनिषद' इत्यादौ तथा निर्णयात् ।

वस्तुतस्तु पूर्वोक्तशौनकवचसा वैदिकावैदिकशैवानामपि प्राप्तस्योर्द्ध्वपुण्ड्रस्यावैदिकशैवपरतां बोधयन्ती वैदिकशैवे तन्निवारणफलिकेयं परिसंख्या[2] । जातिप्रयुक्तपुण्ड्रस्य वैदिकशैवे नियमो वाऽयं पूर्ववाक्ये । तेन द्वितीयमपि तादृशस्यैव भस्मत्रिपुण्ड्रोपरि पुण्ड्रा-

---

१ त्वादिसिद्धेश्चेति खपाठः । २ रागप्राप्ते विषये तन्निवृत्तिहेतुकः संकोचफलको विधिः परिसंख्या । यथा पञ्चपञ्चनखा भक्ष्या इत्यत्र । यथा वा ऋतौ भार्यामुपेयादित्यत्र । अत्रहि रागतः प्राप्तं सर्वमांसभक्षणं, सर्वकाले सर्वासु च स्त्रीषु प्राप्तं च गमनं पञ्चपञ्चनखभक्षणविधानेन परिणीतपत्न्यां ऋतावेव गमनविधानेन च संकोच्यते ।

न्तरधारणपरम् । 'विने'त्यन्तेन पूर्वार्द्धेन तथानिश्चयात् । यत्तु कौर्मे 'सर्वेषामेव भक्तानां शम्भोर्लिङ्गमनुत्तमम्[1] । सितेन भस्मना कार्यं ललाटे तु त्रिपुण्ड्रकमि'ति वाक्यं, तदपि शैवपरमेव । 'यस्तु नारायणं देवं प्रपन्नः परमं पदम् । धारयेत्सर्वदा शूलं ललाटे गन्धवारिभिः । प्रपन्ना ये जगद्बीजं ब्रह्माणं परमेष्ठिनम् । तेषां ललाटे तिलकं धारणीयं तु सर्वदे'त्यग्रे दर्शनात् । अतो न केवलवैदिकाः वैदिकवैष्णवा[2] वाऽस्य विषयाः । अन्यथा 'विप्राणां नैव धार्यं स्यात्तिर्यक्पुण्ड्रादिधारणम् । नारायणात्परब्रह्मादन्येषामर्चनं न हि । ब्राह्मणः कुलजो विद्वान् भस्मधारी भवेद्यदि । वर्जयेत्तादृशं देवि मद्योच्छिष्टं घटं यथा । त्रिपुण्ड्रं शूद्रकल्पानां शूद्राणां च विधीयते । त्रिपुण्ड्रधारणाद्विप्रः पतितः स्यान्न संशय' इति पाद्मोत्तरखण्डीयोर्द्ध्वपुण्ड्रधारणाध्यायवाक्यत्रयविरोधात् । 'शोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनया भृतम् । आनिम्लुचः शकृदेको अपाभरत्किंस्वित्पुत्रेभ्यः पितरावुपावतुरिति' ऋक्शाखास्थचमसविभागप्रकरणीयश्रुतिविरोधापाताच्च । अत्र हि श्रुतौ द्रव्यान्तरस्य पितृकृतोपस्थानस्य च श्रावणेन शिष्टाचारप्राप्तरक्षणस्यैव बोधनात् ।

एवं सति 'ऊर्ध्वपुण्ड्रमृजुं सौम्यं ललाटे यस्य दृश्यते । चण्डालोऽपि विशुद्धात्मा पूज्य एव न संशय' इत्याचारमाधवे सत्यव्रतवचनेनोर्द्ध्वपुण्ड्रस्यातिमाहात्म्यबोधनादपिशब्देन 'कैमुतिक' बोधनान्माधवेन पुण्ड्रान्तरस्याविचारणाच्च । धर्मप्रवृत्तौ स्मृतिसार-

---

१ मुदाहृतमिति खपुस्तकम् । २ केवलवैष्णवा इति खपुस्तकम् ।

समुच्चये 'ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधि'रिति कथनात्। स्कान्दे मार्गशीर्षमाहात्म्ये 'मन्त्रेणैवाभिमन्त्र्याऽथ ललाटादिषु वैष्णवः। धारयेदूर्ध्वपुण्ड्राणि यथासङ्ख्यमतन्द्रितः। ब्रह्मन् द्वादश पुण्ड्राणि ब्राह्मणः सततं धरेत्। चत्वारि भूभृतां पुत्र पुण्ड्राणि द्वे विशां स्मृते। एकं पुण्ड्रं च नारीणां शूद्राणां च विधीयत' इति वाक्यैः पूर्वोक्तपाद्मवाक्यैश्च वैष्णवानां सर्वेषामूर्द्ध्वपुण्ड्रमेव धार्यम्। न च कूर्मोक्तेन त्रिशूलेन विकल्प इति वाच्यम्। तस्य सगुणोपासकपरत्वात्। 'यत्तत्प्रधानं त्रिगुणं ब्रह्मविष्णुशिवात्मकम्। धृतं तु शूलधरणाद्भवत्येव न संशय' इति तत्र वाक्यान्तरात्। अतः पूर्वोक्त एव निर्णयः।

वैष्णवास्तु त्रिविधाः। 'न कामकर्मबीजानां यस्य चेतसि सम्भवः। वासुदेवैकनिलयः स वै भागवतोत्तम' इत्येकादशस्कन्धोक्ता उत्तमाः। 'जगद्धातुर्महेशस्य दिव्याज्ञाचरणा वयम्। इह नित्यक्रियां कुर्मः स्निग्धास्ते वैष्णवाश्च ते' इति गारुडविष्णुभक्त्यध्यायोक्ताश्च। मध्यमास्तु, सात्विकादिभेदभिन्नास्त्रिधा 'यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिः। तं सत्त्वप्रकृतिं विद्यात् स्त्रियं पुरुषमेव वा। यदा आशिष आशास्य मां यजेत स्वकर्मभिः। तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामस'मित्येकादशस्कन्धवाक्योक्ताः। प्राप्तवैष्णवदीक्षोपदेशान्यतरास्तदनुसारिणः शेषाः। पूर्वोक्तधर्माभावेऽप्यनुसारित्वात्। 'स्वयं समुत्तीर्ये'ति गर्भस्तुतौ 'किरातहूणान्ध्रे'ति द्वितीयस्कन्धे च तादृशानामपि संसारोत्तरणशुद्ध्योः कथनात्। अतस्तान्त्रिकमिश्रपरमिदं धारणमिति न भ्रमितव्यमिति दिक्।

एवं वैष्णवानां सिद्धे ऊर्द्धपुण्ड्रे तत्र द्रव्यादिकमुच्यते । आचारमाधवे ब्रह्माण्डे 'पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते । एता मृदः सुसम्पाद्या वर्जयेत्त्वन्यमृत्तिका' इति । पाद्मोत्तरखण्डे तु 'यस्मिन्कस्मिन्महाभागा वैष्णवा धारयन्ति वै । तस्मिन्वै मृत्तिका ग्राह्या ऊर्ध्वपुण्ड्रस्य धारणे' इत्यप्युक्तम् । मदनपारिजाते तु 'जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्त्ति यः । बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवलमि'ति व्यास आह । तत्रैव सत्यतपाः 'गोमतीतीरसंभूतां गोपीदेहसमुद्भवाम् । मृदं मूर्ध्ना वहेद्यस्तु सर्वपापैः प्रमुच्यत' इति फलमाह । धर्मप्रवृत्तौ स्मृतिसारसमुच्चये तु 'अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि । माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनमि'ति निषेधोऽप्युक्तः । तेन भगवत्प्रसादशेषचन्दनेन वैष्णवानां करणे कदापि न निषेधः । स्कान्दे मार्गशीर्षमाहात्म्ये तु द्रव्यान्तरमप्युक्तम् । 'शृणु वत्स प्रवक्ष्यामि पुण्ड्रं च त्रिविधं स्मृतम् । तुलसीमृत्स्नया सार्द्धं श्रीगोपीचन्दनेन च । हरिचन्दनेन च ततः कार्यं तत्र विचक्षणै'रिति । धर्मप्रवृत्तौ तु विशेषः कालभेदेन । 'स्नात्वा पुण्ड्रं मृदा कुर्याद्धोमं कृत्वा तु भस्मना । अभ्यङ्गोत्सवकाले तु कस्तूरीचन्दनादिने'ति । आचारमयूखे तु देवार्चनोत्तरमपि गन्धेनोक्तं जलान्तर्जलेन च । वचनं तूक्तमधस्तात् । पाद्मोत्तरखण्डे तु कामनाभेदेनापि द्रव्यभेद उक्तः सोऽनावश्यकत्वान्न लिख्यते । वर्णाङ्गुलिभेदेन फलभेदोऽप्याचारमाधवे ब्रह्माण्डे 'श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् । श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ।

अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमाऽऽयुष्करी भवेत् । अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी । एतैरङ्गुलिभेदैस्तु कारयेन्न नखं स्पृशेत्' । मानभेदोऽपि तत्रैव 'दशाङ्गुलप्रमाणं तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् । सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं परिकीर्तितम् । चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं स्मृत'मिति । आचारमयूखे त्वेतदग्रे 'ऊर्ध्वपुण्ड्रमृजुं सौम्यं कनिष्ठाङ्गुलिवत्स्मृतम् । नासादिकेशपर्यन्तं प्रयत्नाद्धारयेद्द्विज' इति चोक्तम् । इदं च कनिष्ठं मानम् । तेन नासादिब्रह्मरन्ध्रान्तं मुख्यमित्येवं फलति । परिणाहस्त्वङ्गुलिकृतत्वादङ्गुलेरेव । इदं च सान्तरालं कार्यम् । 'ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा मध्ये शून्यं प्रकल्पयेत् । शृणु षण्मुख तन्मध्ये उभयाहं श्रिया हरि'रित्याचारमयूखे चतुर्विंशतितमव्याख्यायां च प्रयोगपारिजाते सङ्ग्रहात् । एकान्तिनो महाभागाः सर्वभूतहिते रताः । सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् । ऊर्द्ध्वपुण्ड्रं मृजुं सौम्यं सुपार्श्वं सुमनोहरम् । दण्डाकारं सुशोभाढ्यं मध्येछिद्रं प्रकल्पयेत् । ऊर्द्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे । सान्तराले समासीनो हरिस्तत्र श्रिया सह । निरन्तरालं यः कुर्यादूर्द्ध्वपुण्ड्रं द्विजाधमः । स हि तत्र स्थितं विष्णुं श्रियं चैव व्यपोहति । अच्छिद्रमूर्ध्वपुण्ड्रं तु ये कुर्वन्ति द्विजातयः । ते ललाटे तु सततं शुनः पादं न संशय' इति पाद्माच्च ।

केचित्तु 'सुदर्शनं धारयत्यूर्द्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः सायुज्यतां सलोकतां जयति य एवं वेदे'ति काण्वशतपथीयां श्रुतिमप्याहुः । एतदारम्भश्च नासामूलात् भ्रूमध्याच्च कार्यः ।

'आरभ्य नासिकामूलं ललाटं विलिखेन्मृदा। समारभ्य भ्रुवोर्मूलमन्तरालं प्रकल्पये'दिति पाद्मात्। मृदेत्युपलक्षणम्। द्रव्यान्तरस्यापि तत्रोक्तत्वात्। क्रमो[1] मन्त्राश्च पाद्मे स्कान्दे च। 'ललाटे केशवं विद्यान्नारायणमथोदरे। माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके। उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते। तत्पार्श्वे बाहुमध्ये तु मधुसूदनमनुस्मरेत्'। दक्षिणबाहावित्यर्थः। 'त्रिविक्रमं कन्धरे तु वामनं वामपार्श्वके। श्रीधरं बाहुके वामे हृषीकेशं तु कर्णयोः'। साम्प्रदायिकास्तु कर्णमूले कुर्वन्ति। 'पृष्ठे तु पद्मनाभं च ककुद्दामोदरं स्मरेत्। ककुत्रिकम्। 'तत्प्रक्षालनतोयेन वासुदेवेति मूर्द्धनि' इति। आचारमाधवे ब्रह्माण्डे तु 'द्वादशैतानि नामानी'ति पाठः।

क्षत्रियादौ तु विशेषः पाद्मे। 'चत्वारि भूभृतां प्रोक्ते पुण्ड्राणि द्वे विशां स्मृते। एकं पुण्ड्रं तु नारीणां शूद्राणां च विधीयते। ललाटे हृदि बाह्वोश्च चतुःपुण्ड्राणि धारयेत्। ललाटे हृदये द्वे तु भाले त्वेकं विधीयते। ऊर्द्ध्वपुण्ड्रं तु सर्वेषां ललाटे प्रथमं स्मृतम्। ललाटादिक्रमेणैव धारणं तु विधीयते। मूर्तयो वासुदेवाद्याश्चतुःपुण्ड्रेषु धारयेत्। वासुदेवसङ्कर्षणानिरुद्धप्रद्युम्ना इत्यर्थः। 'द्वयोर्गोविन्दकृष्णौ तु एकं नारायणं धरे'दिति। आकारान्तरमप्याचारमाधवादौ स्मर्यते। 'वर्त्तिदीपाकृतिं वापि वेणुपत्राकृतिं तथा। पद्मस्य मुकुलाकारं तथैव कुमुदस्य च। मत्स्यकूर्माकृतिं वापि शङ्खाकारमतः परमि'ति। पाद्मे तु फलविशेषः 'अश्वत्थपत्रसङ्काशो वेणुपत्रसमाकृतिः।

---

१ क्रमोऽयमिति खपाठः।

पद्मकुण्डलसङ्काशो मोहनं त्रितयं स्मृतम् । महाभागवतः शूद्रः पुण्ड्रं हरिपदाकृतिम् । दण्डाकारं तु वा देवि धारयेदूर्ध्वपुण्ड्रकमि'ति । उपरि किञ्चिद्विस्तीर्णत्वे पदाकृतिर्ज्ञेयः समत्वे दण्डाकृतिः ।

निबन्धे तु स्थानविशेषो नियमितः । 'दण्डाकारं ललाटे स्यात्पद्माकारं तु वक्षसि । वेणुपत्रनिभं बाहोरन्यद्दीपाकृतिर्भवेदि'ति । इदं चादर्शादि दृष्ट्वैव कार्यम् । 'वीक्ष्याऽऽदर्शे जले वापि यो विदध्यात्प्रयत्नतः । ऊर्द्ध्वपुण्ड्रं महाभाग प्रयाति परमां गतिमि'ति स्कान्दे मार्गशीर्षमाहात्म्यवाक्यात् । 'वर्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं तनुं ततम् । वक्रं विरूपं वक्राग्रं छिन्नमूलं पदच्युतम् । अशुभ्रं रूक्षमासक्तं तथा नाङ्गुलिकल्पितम् । विगन्धमवसह्यं च पुण्ड्रमाहुरनर्थक'मिति पाद्मे वक्रादेर्निन्दनाच्च । दीर्घमिति नासाग्रमारभ्य कृतम् । यथा चेदिदेश्यानाम् । ततं बहुपरिणाहं यथा विरागिणाम्[1] । तथैव तनुं छिन्नमूलम् । दण्डाकारादिकरणोत्तरं प्रोञ्छितमूलम् । रूक्षं जलेन विनैव कृतम् । अवसह्यमसह्यम् । शेषं स्फुटम् । यस्तु 'न पादुकास्थो नादर्शे न जले त्ववलोकयेत् । न प्रावृतशिराः कुर्यात्तिलकं धर्मसाधन'मिति धर्मप्रवृत्तौ विष्णुवाक्य आदर्शादिनिषेधः, स पुण्ड्रान्तरपरः । होमोत्तरं तु ललाटादौ बिन्दुरेव विधेयः । 'न कदाचिन्मृदा तिर्यक् न्यसेदूर्द्ध्वं न भस्मने'ति सङ्ग्रहे भस्मोर्द्ध्वपुण्ड्रनिषेधात्पूर्वोक्तपाद्मवचनेषु वैष्णववैदिकस्य त्रिपुण्ड्रस्यापि निषेधात् । स्कान्दे त्रयोविंशाध्याये 'ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं यः कुरुते स नराधमः । भङ्क्त्वा

1 वीतरागिणामिति खपाठः ।

विष्णुगृहं पुण्यं स याति नरकं ध्रुवम् । त्रिपुण्ड्रं यस्य विप्रस्य ऊर्द्ध्वपुण्ड्रे प्रदृश्यते । तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत्' इत्युर्ध्वपुण्ड्रोपर्यपि तद्धारणे निन्दास्मरणाच्च ।

न च बिन्दोर्वर्तुलत्वादानर्थक्यं शङ्क्यम् । पाद्मे वर्तुलानर्थकताबोधकस्य तिर्यगादिसमभिव्याहृतत्वेन प्रयत्नविशेषं निष्पाद्य तदानर्थक्यपरत्वात् । अन्यथा होमान्ते भस्मपुण्ड्रबाधापत्तेः । अतो यथा भस्मोर्द्ध्वपुण्ड्रस्य विहितप्रतिषिद्धत्वं स्वीकृत्य नृसिंहभट्टीये शिष्टाचारात् व्यवस्थापितो विकल्पस्तथा शिष्टाचारादपि बिन्दुप्राप्तिः । अत एव कात्यायनगृह्ये'त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि चे'त्यनेन विहिते त्र्यायुषकरणे, शिष्टा बिन्दूनेव विदधति । तथैव तैत्तिरीयाश्च । तस्मादेषैव व्यवस्थेति दिक् । पित्र्ये कर्मण्यपि ऊर्द्ध्वपुण्ड्रं न त्याज्यम् । 'ऊर्द्ध्वपुण्ड्रधरं विप्रं यः श्राद्धे भोजयिष्यति । आकल्पकोटि पितरास्तस्य तुष्टा न संशयः । ऊर्द्ध्वपुण्ड्रधरो यस्तु श्राद्धं कुर्याच्छुभानने । कल्पकोटिसहस्राणि गयाश्राद्धफलं लभेदि'ति पाद्मात् । 'मत्प्रियार्थं शुभार्थं च रक्षार्थं चतुरानन । मत्पूजाहोमकाले च सायं प्रातः समाहितः । मद्भक्तोद्धारयेन्नित्यमूर्द्ध्वपुण्ड्रं भयापहमि'ति स्कान्दाच्च । यत्तु 'ऊर्द्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले तु संप्राप्ते कर्ता भोक्ता च तत्त्यजे'दिति धर्मप्रवृत्तौ स्मृतिसमुच्चयवाक्यं, तदवैष्णवपरम् । यच्च 'निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् । पर्यङ्कात्प्रमदां भालात्पुण्ड्रं पुष्पाणि मस्तकादि'ति विष्णुवाक्यम् । तदपि तथा । विशेषानुल्लेखात् । पुण्ड्रान्त-

रपरं वा । एतावान्परं विशेषः । रात्रौ स्वेदादिना निवृत्ते पुण्ड्रे भगवत्कर्माद्यभावे सति न कार्यम् । सायं प्रातरितिवद्रात्राववि-धानात् । शिष्टाचाराऽभावात् । रक्षादीनां स्मरणेनापि सम्भवा-च्चेति दिक् ।

मतान्तराण्यपाकृत्य श्रुतिस्मृतिसयुक्तिभिः ।
सच्छिद्रमत्र तिलकं निर्णीतं वैष्णवोचितम् ॥ १ ॥

इति श्रीवल्लभाचार्यमतवर्तिश्रीपीताम्बरतनुजश्रीपुरुषोत्तमवि-
रचित ऊर्ध्वपुण्ड्रधारणवादः समाप्तः ॥

॥ श्रीः ॥

श्रीकृष्णाय नमः ।

# पुष्टिमार्गसिद्धान्तवाङ्मालायां
## गोस्वामिश्रीमत्पुरुषोत्तमविरचितः
# शङ्खचक्रधारणवादः ।

कृष्णं भजन्ति ये प्रेम्णा तदङ्गत्वेन तन्मृदा ।
शङ्खादिचिह्नितांस्तान्वै ब्राह्मणान्प्रणमाम्यहम् ॥ १ ॥

अत्रेदं विचार्यते । शङ्खचक्रादिधारणं ब्राह्मणादीनां सर्वेषां कर्तव्यं शूद्राणामेव वेति । किमत्र युक्तम्? । शूद्राणामेवेति । कुतः 'शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः । शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः । यथा स्मशानजं काष्ठमनर्हं सर्वकर्मसु । तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हित' इति विष्णुवाक्येषु शङ्खादिधारणस्य शूद्रधर्मताव्यवस्थापनपूर्वकं द्विजातिधर्मतानिषेधात् । धारणे कर्मबहिष्कारगर्हयोः स्मरणाच्च । न च 'शङ्खादिचिह्नरहितः पूजां यस्तु समाचरेत् । निष्फलं पूजनं तस्य हरिश्चापि न तुष्यती'त्यादिवाक्येष्ववधारणे प्रत्यवायस्मरणात्तन्नित्यमिति विहितप्रतिषिद्धत्वादैच्छिको विकल्प इति वाच्यम् । ईदृशां सामान्यवचसामेकजातेरयं धर्म इत्यनेनोपसंहारादस्यैच्छिकविकल्पाऽप्रसञ्जकत्वात् । न च निषेधस्य प्राप्तिपूर्वक-

त्वाद्विधिं विना च तदयोगादुपजीव्यविरोधेन 'न तौ पशौ करो-
ती'तिवदनिवार्यो विकल्प इति वाच्यम् । 'भूमावग्निश्चेतव्यो नान्तरिक्षे न दिवी'तिवन्निषेधस्य नित्यानुवादरूपत्वात् । न च 'चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत् । क्रियमाणं च यत्कर्म वैष्णवानां विशेषत' इति स्कान्दमार्गशीर्षमाहात्म्य[1]वाक्याद्विप्रस्यापि धारणविधि[2]प्राप्ते न निषेधस्य नित्यानुवादत्वमिति वाच्यम् । एतस्याऽवैदिकतान्त्रिकपरत्वात् । 'विष्णवागमादितन्त्रेषु दीक्षितानां वि[3]धीयते । शङ्खचक्रगदापद्मैरङ्कनं नान्यदेहिनाम् । वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितो यदि । पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि । नाङ्कनं विग्रहे कुर्याद्वेदपन्थानमाश्रितः । पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेदि'ति सूतसंहितावाक्येन तथानिश्चयात् । तस्माच्छूद्रैस्तान्त्रिकैश्चावैदिकैः शङ्खचक्रादिकं धार्यं, न तु कथमपि वैदिकैस्त्रैवर्णिकैः शिष्टैरिति प्राप्ते—उच्यते

नित्यत्वे सति पूजाङ्गत्वोपवीताऽतिदेशतः ।
केवले सेधतः शिष्टैर्धार्यं शङ्खादिकं मृदा ॥ १ ॥

तथाहि—शङ्खादिचिह्नरहितः पूजां यस्तु समाचरेत् । निष्फलं पूजनं तस्य हरिश्चापि न तुष्यती'ति चक्रलाञ्छनहीनस्येत्यादिवाक्येषु पूजाङ्गत्वेन नित्यत्वं शङ्खादिधारणस्योक्तम् । 'प्रातर्मध्यंदिने सायं विष्णुपूजां समाचरेत् । यथा सन्ध्या तथा नित्या विष्णुपूजा स्मृता बुधै'रिति कालनिर्णयदीपिकायां नारदीयात् ।

---

१ माहात्म्ये वाक्यादिति गपाठः । २ प्राप्तेर्नेति गपाठः । ३ कखपुस्तकयोर्धीयत इत्यशुद्धः पाठः ।

'न विष्ण्वाराधनात्पुण्यं वर्तते कर्म वैदिकम् । तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् । तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण त्वि'त्याचारमाधवे कौर्माच्च, ब्राह्मणादीनां विष्णुपूजापि नित्या । एवं सति नित्यायाः पूजाया नित्यमिदमङ्गमिति तस्या व्यङ्गत्वपरिहारायेदं सर्वेषामावश्यकम् । पौराणिकधर्मस्य श्रौतस्मार्तधर्माङ्गत्वाच्च । जन्माष्टम्यादिपूजानां पौराणत्वेन तस्यावश्यकत्वाच्च । तेन पूजाङ्गबोधकवाक्यानां सामान्यत्वेऽपि शूद्रादिविषयत्वेनोपसंहारोऽनवधानरमणीय एव । न चेदमप्रयोजकम्[१] । निषेधनिन्दादिवाक्येषु केवलधारणस्यैव निषेधनिन्दयोर्दर्शनात्तयोः पूजाकर्तरि पाखण्डतासम्पादनाऽशक्तत्वात् । अन्यथा तादृशमपि क्वचिन्निन्देत् । अतः शूद्रधर्मताव्यवस्थापनं द्विजातिधर्मतानिषेधनं धारकगर्हादिकं च केवलस्यैवेति निश्चेयम् ।

किञ्च । 'गोपीचन्दनमृत्स्नाया लिखितं यस्य विग्रहे । शङ्खचक्रगदापद्मं तस्य देहे भवाम्यहम् । सौवर्णं राजतं ताम्रं कांस्यं मृण्मयमेव वा । चक्रं कृत्वा[२] तु मेधावी धारयेत विचक्षणः । उपवीतादिवद्धार्याः शङ्खचक्रगदादयः । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः । उपवीतं शिखाबद्धं चक्रलाञ्छनसंयुतम् । विप्रत्वं सफलं तस्य वैष्णवत्वं विशेषतः । चक्रलाञ्छनहीनस्य विप्रस्य विफलं भवेत् । क्रियमाणं च यत्कर्म वैष्णवानां विशेषत'इति स्कान्दमार्गशीर्षमाहात्म्यतृतीयाध्यायवाक्यं च । 'ये मृदा' शङ्खादिधारणमुपक्रम्योपवीतादिवत्तदतिदिश्यते । उपवीतं च देवलक्ष्म कर्माङ्गभूतं नित्यं च । 'उपवीतं च देवानामुपव्ययते

---

१ अश्रौतस्मार्तेति गपाठः । २ गत्वेति खपाठः ।

देवलक्ष्ममेव तत्कुरुते इति। तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या' इति श्रुतेः। 'सदोपवीतिना भाव्यं सदा बद्धशिखेन च। विशिखो व्युपवीतश्च यत्करोति न तत्कृतमि'ति स्मृतेश्च। शिखा चाऽऽकुमारमात्रिदण्डि नित्या। तद्वदिदमपि देवलक्ष्म कर्माङ्गं नित्यम्। तदेतदातिदेशिकं नित्यत्वादिकमुपवीतं शिखेत्यादिवाक्यद्वयेन दृढीक्रियते। ब्राह्मणपदं विप्रपदं च कण्ठतोऽत्र पठ्यते। तेनाऽस्य वैष्णवद्विजातिधर्मत्वसिद्धौ तन्निषेधो न नित्यानुवाद इति निश्चीयते।

वस्तुतस्तु वैयासे दर्शने देवानां कर्माधिकाराङ्गीकारात्तेषां योगादिबलेनाऽन्तरिक्षादावपि करणसम्भवात्प्राप्तिपूर्वक एव तत्रापि निषेधः। 'न कलञ्जं भक्षयेदि'तिवत्। व्यासस्य गुरुत्वेन तद्विरुद्धानां जैमिनीयानामनादरणीयत्वात्। नापि तान्त्रिकपरत्वम्। विप्रपदात्। 'वेदाभ्यासाद्भवेद्विप्र' इति तन्निर्वचनात्। वस्तुतस्तु निषेधादिवाक्येष्वङ्कनपदात्तप्तधारणस्यैव निषेधस्तान्त्रिकपरत्वं च। अङ्कनपदेन तथानिश्चयात्। अङ्कनपदस्य वृषोत्सर्गादौ दाहन एव प्रसिद्धत्वात्। अन्यथा पुण्ड्र इवात्रापि धारणपदमेव वदेत्। अतएव 'यस्तु संतप्तशङ्खादिलिङ्गचिह्नतनुर्नरः। स सर्वयातनाभोगी चण्डालो जन्मकोटिषु। द्विजं तु तप्तशङ्खादिलिङ्गाङ्कितत३नुं नरः। संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दशे'ति पृथ्वीचन्द्रोदयस्थे बृहन्नारदीयवाक्ये तप्तादिपदोक्तपूर्वकमेव निन्दासरणम्।

---

१ यज्ञोपवीतेति गपुस्तकपाठः। २ व्युपवीतेश्चेति खपाठः। ३ तनुर्नर इति खपुस्तकम्।

न च विष्णुना मृदा धारणस्यापि निषिद्धत्वान्नेदं साम्प्रतमिति वाच्यम् । तत्र तन्निषेधस्याऽविवक्षितत्वात् । यथा श्रुतौ '**निर्यासस्य नाश्यं ब्रह्महत्यायै ह्येष[1] एव वर्ण**' इत्युपक्रम्याग्रे '**यो लोहितो यो वा व्रश्चनान्निर्येषति तस्य नाश्यमि**'ति पर्यवसानवचनात्तस्यैव निषेधो विवक्षितो न निर्यासमात्रस्येति निर्णयस्तथा प्रकृतेऽपि तप्तायसे पर्यवसानात्तन्निषेधस्यैव विवक्षितत्वनिर्णयेन मृदा धारणनिषेधस्याऽविवक्षितत्वनिश्चयात् ।

न च श्रुतौ सामान्यविशेषभावप्रतीतेर्युक्तो विशेषनिषेधोपसंहारः । प्रकृते तूभयत्र विशेषोल्लेखाद्वैरूप्यमिति वाच्यम् । अबोधात् । भक्षणस्य रागतः प्राप्तेस्तत्र तथाकथनस्य युक्तत्वात् । प्रकृते तु तदभावादुल्लिखितोऽपि विशेषोऽस्य शास्त्रीयत्वज्ञापनायेति सामान्यताऽनपायेन वैरूप्याऽभावात् । एतेनैव '**चक्राङ्कितततनुर्यस्तु मृदा कार्ष्णायसेन वा । स शूद्रवद्बहिष्कार्य**' इति पराशरमाधवीयपाठोऽपि द[2]त्तोत्तरो ज्ञेयः । किञ्चाङ्कनपदस्य साधारणत्वाङ्गीकृतौ पूर्ववाक्ये सामान्यनिषेधस्येहापि सत्त्वान्न वैरूप्यं प्राप्तावसरम् । '**लोहितान्वृक्षनिर्यासानि**'तिवद्वाक्यान्तरे मृद्धारणनिषेधाऽदर्शनात्सत्त्वेऽपि, केवले सावकाशत्वात्कथमपि पूजाङ्गस्य मृदा धारणस्य निषेधो न संभवदुक्तिकः । किञ्च । ब्राह्मणस्य निषिद्धं वैष्णवस्य विहितम् । तत्र ब्राह्मणश्चेद्वैष्णवो भवति तदा '**पूर्वात्परबलीयस्त्व**' न्यायादपि तत्प्राप्तेर्निषेधो न शक्यवचनः । '**किं पुनर्ब्राह्मणाः पुण्या भक्ता**' इति वाक्याद्भक्तिप्रयुक्तस्य ब्राह्मणवैष्णवत्वस्याऽति-

---

१ ह्येषर्वेण इति कपुस्तकम् । २ इतः परं अशुद्धपाठाः परित्यज्यन्ते टिप्पण्यामपि । यतो हि खपुस्तकेऽशुद्धबहुलाः पाठाः ।

प्रशंसनात् । सिध्यति पूर्वस्मात्कार्ये परविधानवैयर्थ्याऽऽपाताच्च । वैष्णवत्वस्य च संस्काररूपत्वेन परत्वात् । भक्तेरपि पुंस्त्वादिवत्सत्या अप्युत्तरकाल एव प्रादुर्भावात् । तत्र वैष्णवत्वमूर्द्धपुण्ड्रधारणवाद एव विवेचितम् । न च तस्य ब्राह्मणत्वापेक्षया पूर्वत्वं सम्भवति ब्राह्मणत्वस्य वर्णत्वेन साहजिकत्वात् । **'दैव्यो वै वर्णो ब्राह्मण'** इति श्रुतेः ।

इदमपि त्वद्रीत्योक्तम् । यदि च ब्राह्मणपदेन ब्रह्मज्ञोऽभिप्रेयते तदा तु निषेधगन्धो नोपैति । निषेधादिवाक्येषु ब्राह्मणपदाऽभावात् । प्रत्युत विधिवाक्य एव ब्राह्मणपदात् । एतेनैव **'शिवकेशवयोश्चिह्नान् शूलचक्रादिकान् द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थित'** इत्याश्वलायनवचनमपि प्रत्युक्तम् । ब्राह्मणपदाभावात् । द्विजपदस्य वर्णवाचकत्वाऽऽदरणेऽपि शिवकेशवपदात्समुच्चितोभयलिङ्गधारणस्य कुत्राप्यविधानेन भ्रान्तप्रतिपन्नत्वात्तथाधारण एव निषेधसंक्रमेण केवलकेशवचिह्नधारणे निषेधाऽप्रसक्तेः । अन्यथोपजीव्यविरोधेन विकल्पप्रसक्तेर्दुर्वारत्वात् । तप्ताऽधारणे निषेधोपसंहारस्य शक्यवचनत्वाच्च । न च निषेधानामुपसंहारो नास्तीति वाच्यम् । वृन्ताकश्वेतवृन्ताकनिषेधे माधवहेमाद्रिभ्यां तदङ्गीकारात् । उक्तश्रुतेश्च ।

ननु भवत्वेवं तथापि तप्तधारणमितोऽपि प्रशस्तम् । पाद्मोत्तरखण्डे सुदर्शनमाहात्म्याध्याये **'शङ्खचक्राङ्कनं कुर्यादुभयोर्बाहुमूलयोः । हुताग्निना तु संतप्य सर्वपापापनुत्तये । वह्निनैव तु संतप्तं चक्रमादाय वैष्णवः । धारयेत्सर्ववर्णानां हरिसालोक्यकाम्यया ।** तथा **'चक्रचिह्नविहीनस्तु यः पूजयति केशवम् ।**

**तत्सर्वं निष्फलं याति पूजामन्त्रजपादिकम् । चक्रं वा शङ्खचक्रे वा तथा पञ्चायुधानि वा । धारयित्वैव विधित्सर्वकर्म समाचरेत् । अधृत्वा विधिना चक्रं ब्राह्मणः प्राकृतो भवेत् । न तस्य किञ्चिदश्नीयादपि क्रतुसहस्रिण'** इत्यादिवाक्यैः । तथा सति विहितप्रतिषिद्धत्वात्प्राप्ते विकल्पे स्मार्तवैष्णवपरत्वेनोभयव्यवस्थापनमुचितम् । **'तस्माच्चक्रादिहेतीनामङ्कनं वैष्णवं स्मृतम् । चक्रादिचिह्नहीनत्वाद्वैष्णवत्वं न लभ्यते'** इति तत्रैव वाक्यात् । बृहन्नारदायाश्वलायनवाक्यविरोधस्तु मृदा धारणविचार एव सिद्धान्तिना परिहृतः । उचितश्चासौ । रुद्रसाधारणबुध्द्या भगवन्तं जानत एव शूलादिधारणसम्भवात् । तादृशबुद्धिमतश्च **'यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाखण्डी भवेत्सदे'**ति पाद्मोत्तरखण्डे पाखण्डोत्पत्तिकथनाध्याये पार्वतीं प्रति शिववाक्यादिति चेत् ।

नेदं युक्तम् । विष्णुवाक्यविरोधस्य दुष्परिहरत्वात् । न च विकल्पो युक्तः । पुराणाऽपेक्षया स्मृतेर्बलवत्त्वात् । **'श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते । तत्र श्रौतं बलिष्ठं स्यात्तयोर्द्वैधे स्मृतिर्वरे'**ति लघुव्याससस्मरणात् । किञ्च । पाद्मे सुदर्शनमाहात्म्यतृतीयाध्याये **'सर्वेषामेव देवानां ममापि पुरुषोत्तमः । पूजनीयो हरिर्नित्यं ब्राह्मणानां विशेषतः । तस्मात्तु ब्राह्मणो नित्यं विधिवत्पूजयेद्धरिम् । तच्चिह्नैरङ्कितः श्रीशपदं प्राप्नोत्यसंशय'** इत्युपक्रमात् । **'तस्माच्चक्रादिहेतीनामङ्कनं वे'**त्युपसंहारान्मध्ये च **'द्विविधं वैष्णवं प्रोक्तं बाह्यमाभ्यन्तरं तथा । शङ्खचक्रादिभिर्बाह्यमान्तरं वीतरागता । बाह्याभ्यन्तरसाम्यं यत्त-**

द्वैष्णवमुदाहृतमि'ति वाक्याच्च चक्रादिधारणस्य पूजाङ्गाद्यङ्गत्वं वैष्णवीयबाह्यचिह्नत्वं च सिद्ध्यति, न तु मुख्यत्वम् । तच्च मृदा धारणेऽपि तुल्यम् । यत्तु नृसिंहपरिचर्यायां शिवलिङ्गाङ्कितवृषवदनन्याऽधीनतायै[1] तप्तचक्रादीनि धारयेदित्युक्तम् । तदप्येतेनैव निरस्तं ज्ञेयम् । अनन्याधीनताया अप्याऽऽन्तःकरणिकाया एव मुख्यत्वात् । भेदवादस्य श्रुत्यनभिमतत्वाच्च । लोकसङ्ग्रहार्थानां कर्मणां संन्यासात्पूर्वमादरणीयत्वाद्भक्त्यविरुद्धत्वाच्चेति । किञ्च । कालोऽयं कलिर्बुद्ध्यादयश्चान्नादिवशा इति बुद्धेर्विपर्यासे तावन्मात्रेण सिद्ध्यभावादङ्गिभूतायाः पूजायाः कालादिवशादकरणे पाक्षिकदोषस्यापि प्रसक्तिः । अतोऽपि मृदैव धारणमुचितम् ।

केचित्तु शङ्खचक्रधारणं हारीतेनोक्तमित्याहुः । यदि तत्तथा, तदापि विकल्पप्रसक्तेः पूर्वोक्तरीत्यैव व्यवस्थापनमुचितम् । तदा शिष्टाचारप्राप्तत्वात्तौल्यमेव पक्षद्वये । यत्तु पुराणेषु ध्रुवाम्बरीषादीनां तप्तधारणमुक्तं तदपि सेवकानां 'करौ हरेर्मन्दिरमार्जनादिष्वि'त्यादिवाक्यैः पूजकत्वेन प्रसिद्धानामेवोक्तम् । न तु पूजारहितानामिति न तेनापि तप्तधारणस्याऽऽधिक्यसिद्धिः[2] । यत्तु रामार्चनचन्द्रिकायां 'अतप्ततनूर्न तदामो अश्नुत' इति श्रुतिमुपन्यस्य धारणस्य श्रौतत्वमुक्तम् । तन्न । अत्र विध्यभावात् । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इतिवदेतद्विनियोजकश्रुत्यन्तराऽभावाच्च । किञ्च । इयं श्रुतिः 'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वत' इत्यस्योत्तरार्द्धभूता पवमानसोमदेवताके षोडशे पञ्चर्चसूक्तेऽस्ति । तेन तमेव प्रकाशयति । 'सर्वे वेदा यत्पद-

---

१ अधीनतयैवेति कपुस्तकम् । २ धिकासिद्धिरिति खपुस्तकम् ।

**मामनन्ती**'तिश्रुतिमादाय भगवत्परत्वेन व्याख्याने तु रासस्थ-वृत्तान्तं वक्तीति नाऽत्र युज्यते । तथाहि-हे ब्रह्मणस्पते अक्षर-स्वामिन् । 'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भव' इति । ते विततं विस्तारः । कृत्वा तावन्तमात्मानमित्यादिरूपः । पवित्रं कामादि-शबलनिवर्तकम् । तत्र हेतुः प्रभुः । समर्थो भवान् । गात्राणि भक्तानां शरीराणि । विश्वतः पर्येषि अन्तर्बहिर्व्याप्नोषि । यत एवमतस्ता अपि वह्न्ययोगोलन्यायेन व्याप्ता निष्कामा भवन्तीति तथा । एवं तत्स्तुत्वा तस्य दुर्लभत्वमाह—अतप्ततनूः विरहताप-रहितः तत्पूर्वोक्तं नाश्नुते न विशेषेणाप्नोति । कथमेवं ज्ञायत इत्याकाङ्क्षायां वैधर्म्यदृष्टान्तमाह । शृतासः सिंचाङ्गेत्युक्तप्रकारेण पक्वा वहन्तः संप्रापयन्तः[1] तत्समासत प्राप्तवन्त ईत्[2]यवधारणतस्त-थेत्यर्थः । '**तयोः पवित्रमि**'त्यग्रिमं तु तदग्रिमऋगारम्भ इति न किञ्चिदेतत् ।

एवमेव हरिवल्लभसुधोदयेऽपि ऋक् पूर्वोक्तसूक्तीया शङ्खच-क्रादिधारणपरत्वेन लिखिता । '**चमूषच्छ्येनः शकुनो बिभृत्वा गोविंदु द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति**' । सापि नरकासुरवधोद्युक्तस्य भगवतो वृत्तान्तं वक्ति । तथा हि—चमूषत्, चमूः नरकसेनाः अवसादयन् । श्येनः शंसनीयः शूरैर्युद्धे । द्रष्टृभिर्देवादिभिर्वा । शकुनः शक्तः । हेतुगर्भं विशेषणम् । बिभृत्वा, युद्धहतैः मुरा-दिदेहैः विशेषेण पूरयित्वा । गोविन्दुर्भगवान् । उप्रत्ययान्तो निपातः । द्रप्सः सेनाविद्रावणशीलः । अन्तर्भावितण्यर्थः । आयु-

१ संप्रापयन्त इति खपुस्तकम् । २ इदिति खपाठः ।

धानि बिभ्रत्सुदर्शनादीनि धारयन्। हेतुगर्भं विशेषणम्। अपामुदकानामूर्मिं प्रेरकम्। समुद्रमुदधिम्। अन्तरिक्षं वा सचमानः सेवमानः। महिषः महीयान्। तुरीयं संकर्षणं, चतुर्व्यूहेष्वन्यतमम्। धाम स्वतेजः। विवक्ति विशेषेण वक्ति। तादृशपराक्रमेण ज्ञापयतीत्यर्थः। 'चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि। तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेमे'ति तैत्तिरीयश्रुतिस्तु पवित्रत्वलिङ्गेन त्रिविक्रमचरणं बोधयन्ती, तेन ब्रह्मणा प्रक्षालनाच्छुद्धेन सता यत्पवित्रं गाङ्गमम्भस्तेन पूता इति वक्तीति बोध्यम्। पवित्रचरणपदयोरत्र दर्शनात्सुदर्शनपक्षे पुनरुक्त्यापत्तेश्च। **'सुदर्शनं सहस्रारं पवित्रं चरणं पविरि'**ति निघण्टौ **'पवित्रं चरणं नेमिर्हरेश्चक्रं सुदर्शनम्। सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम्। नामानि विष्णुचक्रस्य पर्यायेण निबोध मे'** इति पाद्मे श्रीशास्त्रे च पर्यायताकथनात्। तथापि तप्तलिङ्गादर्शनाच्च। तथा चानयापि न निर्वाहः।

या तु **'प्रतद्विष्णो अब्जचक्रे सुतप्ते'** इति, या च **'धृतोर्द्ध्वपुण्ड्रः कृतचक्रधारी'**ति क्वचिल्लिखिते ते श्रुती इदानीमप्रसिध्यमाने अपि पाद्मे सुदर्शनाध्याये **'तथैव साम्नि यजुषि ऋषि प्रोक्तं शुभानने'** इत्युक्त्वा किञ्चित्पादवैषम्येणोक्ते, ताभ्यां श्रौतं भवतु। एताभ्यामेवान्या अपि श्रुतयो व्याख्याता ज्ञेयाः। भगवच्छास्त्रोपात्तत्वेन कल्पाद्युपात्तयज्ञोपवीतादिमन्त्रवत्प्रामाण्येऽपि तेषामुपक्रमादिसन्दंशपतितत्वात्। तत्राप्युपक्रमे पूजाङ्गतामेवोक्त्वा धारणस्य फलान्तरस्य चोक्तत्वात्तदङ्गत्वेनैव धारणं फलावहं नतु केवलम्। **'अङ्गे फलश्रुतिरर्थवाद'** इति न्यायात्। एवं सति पूजादि-

व्यङ्गतापरिहारो वैष्णवबाह्यचिह्नता फलानुकूलता च मृदा धारणेऽपि तुल्या । अतः कालदोषसंसर्गभियेदमेव कार्यम् ।

नन्वस्ति भगवानेव रक्षक इति न कालभीतिरिति चेत्—सत्यम् । परं तत्र तादृशी भक्तिरपेक्ष्यते । तस्याश्च ज्ञापको देहगेहादिषु रागाद्यभाव इति यावन्न तथा तावदिदमेव साधीयः । ये पुनर्धारणं तप्तैः पूर्वमाग्रहेण कुर्वन्तः पूजादिकं कदाचित्कुर्वन्ति च तेषामाशयं त एव विदन्तीत्यलमुक्त्या । एवं च पूजाङ्गधारणोत्तरं श्राद्धे प्राप्ते तत्स्थापनमुचितमेव । तथोक्तं स्कान्दे मार्गशीर्षमाहात्म्ये मृदा धारणं प्रकृत्य 'शङ्खायुधाङ्कितो भक्त्या श्राद्धं यः कुरुते सुतः । विधिहीनं तु संपूर्णं पितृणामक्षयं भवेदि'ति । शङ्खाङ्किततनुर्विप्रो भुङ्क्ते वै यस्य वेश्मनि । तदन्नं स्वयमश्नाति पितृभिः सह केशव' इति च । शङ्खपदमायुधान्तराणामप्युपलक्षणार्थकमिति तु प्रकरणादेव स्फुटति । एवमेव पाद्मे तप्तचक्रधारणं प्रकृत्य 'विष्णुचक्रविहीनं तु यः श्राद्धे भोजयिष्यति । व्यर्थं भवति तत्सर्वं निराशाः पितरो गता' इति । अग्रे च 'अचक्रधारिणं विप्रं दूरतः परिवर्जयेत् । श्वपाकमिव नेक्षेत लोके विप्रमवैष्णवम् । वैष्णवो वर्णबाह्योऽपि पुनाति भुवनत्रयमि'त्युक्तम् । तेन श्राद्धेऽपि वैष्णव एव ब्राह्मणः शङ्खचक्रोर्द्ध्वपुण्ड्रवानेव भोजनीयः । यानि निषेधनिन्दावाक्यानि तानि शैवस्मार्तादिपराणीति दिक् ।

तद्धारणप्रकारस्तु स्कान्दपाद्मादिषु नैकः । तथापि सारसङ्ग्रहे ब्राह्मे 'यस्य नारायणी मुद्रा देहं शङ्खादिचिह्नितम् । सर्वाङ्ग

---

१ मृद्धारण इति खपाठः । मृदारण इति कपाठः ।

चिह्नितं यस्य शस्त्रैर्नारायणोद्भवैः । प्रवेशो नास्ति पापस्य कवचं तस्य वैष्णवम् । चक्रं च दक्षिणे बाहौ शङ्खं वामेऽपि दक्षिणे । गदां वामे गदाधस्तात्पुनश्चक्रं च धारयेत् । शङ्खोपरि तथा पद्मं पुनः पद्मं च दक्षिणे । उभयोर्नाममुद्रां तु संप्रदायानुसारत' इति सनत्कुमारवाक्येनोपसंहाराद्यथासंप्रदायं व्यवस्था । स च प्रकारः स्फुट एवेत्युपरम्यते ।

यत्तु भट्टोजिदीक्षितास्तन्त्राधिकारिणो निरूप्य 'तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा । भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः । इह जन्मनि शूद्रः स्यान्मृतः श्वा चाऽभिजायत' इति ब्राह्मदशमाध्यायवाक्यं, 'शृणु राम महाबाहो लिङ्गचक्रादिधारिणाम् । शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः । विप्रस्यैतद्विगर्ह्यत्वात्प्रायश्चित्तमुदीरितमि'ति पाद्मं वाक्यं, 'शिवकेशवयोश्चिह्नं शूलचक्रादिकं द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः । त्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः । ते धारयेयुश्चिह्नानि शिवयोर्भिन्नबुद्धयः । वेदाक्षरविहीनानां नास्तिकानां द्विजन्मनाम् । विहितं धारणं नित्यं चिह्नानां केशवेशयोः । तेषां भिन्नधियां किञ्चित्सुगत्यर्थं शिवः पुरा । कृपया तच्चकारेह पुराणेषूदितं च तदि'त्याश्वलायनषष्ठाध्यायवाक्यानि, 'वेदमूलतया नित्यं प्रवृत्ता अपि सत्तम । कचित्कदाचित्स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै । कचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि । वदन्ति तादृशांशस्तु ग्राह्यस्तत्रावलम्बिना । पुराणे धर्मशास्त्रे च योंऽशः श्रुत्या विरुद्ध्यते । स तन्त्रार्थस्तु विज्ञेयः समासेन मनीषिभिरि'ति

पराशरीयपुराणदशमाध्यायवाक्यानि, **'तन्त्रावलम्बनेनैव पुराणानि च कानिचित् । साक्षाद्वेदविरुद्धार्थं प्रवदन्ति क्वचित् क्वचित् । अधिकारिविभेदेन नैव वेदपरं प्रती'**ति स्कान्दवाक्यं चोदाहृत्य, अत एव वैदिकान्प्रति तप्तमुद्रादिनिषेधकं, तद्धारणे प्रायश्चित्तविधायकं प्रायश्चित्ताऽननुष्ठाने नरकादिबोधकं वचनसहस्रं तत्र तत्रोपलभ्यत इति चोक्त्वा बृहन्नारदीयसूतसंहितावायवीयलैङ्गाऽऽदित्याग्नेयकौर्मवामनोपपुराणपराशरोपपुराणवाक्यानि, पूर्वोक्तं विष्णुस्मृतिवाक्यं, **'अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः । अङ्कयेद्यदि वा मोहात्पतत्येव न संशय'** इति शातातपीयं, **'रागसंदग्धगात्राणां न स्यात्पारत्रिकं शुभमि'**ति हारीतं, **'नाङ्कनाय दहेद्देहं दहेच्चेत्कामकारतः । नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मस्वि'**ति बौधायनीयं, तादृशं याम्यं पराशरमाधवीयं चोदाहृतं । भ्रष्टादीनामेवागमोक्तदीक्षायामधिकारः । तप्तमुद्रादिविधिप्रशंसादिकमपि तद्विषयो, निषेधास्तु वैदिकविषयका इत्युक्तवन्तः । **तदिदं श्रीमतो रुक्माङ्गदस्य प्रतारणार्थमेव । ग्रन्थप्रतिज्ञायां श्रीमतो रुक्माङ्गदस्य प्रीतये पञ्चरात्राद्यधिकारी निरूप्यत इति कथनात्** । उपसंहारदशायां सर्वागमेष्वपि वेदविरुद्धांशस्यैव स्वरसप्राप्तस्यैव चाप्रामाण्यव्यवस्थापनेन प्रकृते तदभावात् । प्रत्यक्षश्रुतिषु मुद्राधारणनिषेधाद्यनुपलम्भेन श्रुतिविरुद्धत्वस्याऽशक्यवचनत्वात् । पौराणिकत्वेन धारणे स्वारसिकत्वाऽभावाच्च । नचेदमप्रयोजकम् । उक्तस्कान्दे साक्षात्त्वेन तच्छ्रुतेर्विशेषितत्वात् । नच साक्षात्त्वमर्थविशेषणमिति शक्यशङ्कम् । उक्तस्कान्दे साक्षा-

---

१ वैयर्थ्यापातात् इत्यनेन कपाठः ।

द्वैयर्थ्यापातात् । 'असूर्यंपश्या राजदारा' इत्यादौ पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति मर्यादाया भङ्गस्य सर्ववादिसम्मतत्वेनात्रापि शक्यवचनत्वात् । अतः पूर्वोक्तैव व्यवस्था सदादरणीयेति दिक् ।

इत्येवं भगवत्पूजाशेषं शङ्खादिधारणम् ।
निबन्धोक्तपथोवाच(?)निश्चित्य पुरुषोत्तमः ॥ १ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजश्रीपुरुषोत्तमविरचितः शङ्खचक्रधारणवादोऽष्टादशः समाप्तिमगमत् ॥

---

श्रीहरिर्जयति ।

# पुष्टिमार्गीयसिद्धान्तवाङ्मालायां
## श्रीमत्पुरुषोत्तमविरचित-
# स्तुलसीमालाधारणवादः ।

तुलसीकाष्ठमालाभिः सर्वदा भूषितान्नरान् ।
हरिनामाक्षरमुखान्नमामि भगवत्परान् ॥ १ ॥

ननु तुलसीमालावदन्यासामपि धारणस्य विहितत्वात्को विशेषस्तद्धारण इति चेत्—भगवत्प्राप्त्युपायत्ववैष्णवचिह्नत्वपुण्यजनकत्वनित्यत्वादिरिति वदामः । तथा हि—स्कान्दे मार्गशीर्षमाहात्म्ये 'अतः परं प्रवक्ष्यामि तुलसीमालाफलं बहु । अन्यासामपि माहात्म्यं शृणु ब्रह्मन् सुशोभनम् । तुलसीकाष्ठजां मालां कण्ठस्थां वहते तु यः । अप्यशौचोऽप्यनाचारो मामेवैति न संशयः । धात्रीफलकृता माला तुलसीकाष्ठसम्भवा । दृश्यते यस्य देहे तु स वै भागवतोत्तमः । तथा 'तुलसीदलजां मालां ममोत्तीर्णां वहेत्तु यः । पत्रे पत्रेऽश्वमेधानां दशानां लभते फलम् । तथा—तुलसीकाष्ठसम्भूतां यो मालां वहते नरः । फलं यच्छाम्यहं तस्य प्रत्यहं द्वारकोद्भवम् । तथा—तुलसीकाष्ठमालाभिर्भूषितः पुण्यमाचरेत् । पितृणां देवतानां च पुण्यं कोटिगुणं कलौ । धारयन्ति न ये मालां हैतुका पापबुद्धयः ।

**नरकान्न निवर्तन्ते दग्धाः कोपाग्निना ममे**’ति भगवद्वाक्यात् । अधारणे प्रत्यवायबोधनाच्च नित्यत्वम् ।

न च ‘**ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिशोभितशङ्खचक्राः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भवनमाशु पवित्रयन्ती**’ति पाद्मोत्तरखण्डे दशमाध्याये शिववाक्ये पूर्वोक्तस्कान्दवाक्ये च मालान्तराणामप्युक्तेः सर्वासां तौल्यमिति वाच्यम् । स्कान्दे ‘**तुलसीकाष्ठसम्भूतं शिरसो बाहुभूषणम् । धारयेत्कण्ठदेशे तु तस्य नैवास्ति पातकमि**’ति वाक्यात् । तथा पाद्मोत्तरखण्डे कार्तिकमाहात्म्ये नारदवाक्याच्च । ब्रह्मवैवर्तप्रकृतिखण्ड ऊनविंशाध्याये तुलस्युपाख्याने ‘**तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः । पदे पदेऽश्वमेधस्य लभते निश्चितं फलमि**’ति वाक्याच्च, तुलसीकाष्ठजा माला सर्वथा धार्या । तुलसीकाष्ठमालामेव प्रस्तुत्याऽनुपदमेवाऽधारणे प्रत्यवायबोधनादेतद्धारणस्यैव नित्यत्वनिश्चयात्तद्दौर्लभ्य एवान्यासां धात्रीफलादिकृतानां धार्यता । तिलकवद्वैष्णवचिह्नत्वाच्च ।

यत्तु निर्णयसिन्धौ ‘**निवेद्य केशवे मालामि**’त्यादीनामनाकरत्वमुक्तम् । तदपि ब्रह्मवैवर्तस्कान्दपद्मादिवचसां साकराणां दृश्यमानत्वादकिञ्चित्करमेव । तर्ह्यस्तु पूजादिसमय एव तद्धारणं न सर्वदेति चेत् । न । तद्धारणस्य सर्वदा आवश्यकत्वात् । पूर्वोक्तवाक्येभ्यस्तथा निश्चयात् । ‘**हरिनामाक्षरमुखं भाले गोपीमृदाङ्कितम् । तुलसीमालिकोरस्कं न स्पृशेयुर्यमोद्भटा**’ इति काशीखण्ड एकोनविंशाध्यायवाक्याच्च । उचितं चैतत् । देहस्य क्षणभङ्गुरत्वात् । ‘**न जह्यात्तुलसीमालां धात्रीमालां विशेषतः ।**

महापातकसंहर्त्री धर्मकामार्थदायिनीमि'ति वाक्यस्यापि पाद्म-स्थस्य क्वचिद्दृश्यमानत्वात् । हरिवल्लभसुधोदयादावन्येषामपि तादृशां वचसां दृश्यमानत्वात् ।

न च 'नागन्धां स्रजं धारयेद्दते हिरण्यस्रजमि'ति श्रुतेर्धा-रणवचसां निर्बलत्वं शङ्क्यम् । श्रुतेर्लोहान्तरपरत्वात्क्रत्वर्थताबोधक-त्वाद्वा । एतस्य वाक्यस्य मिताक्षरायां पाठभेदेन दर्शनात् । श्रुति-त्वेनालिखनाच्च । श्रुतित्वस्याप्यत्र सन्दिग्धत्वात् । एतस्याःसर्वपर-त्वादरे रुद्राक्षधारणस्यापि भवतां निषिद्धत्वापत्तेः । अगन्धत्वस्य तुल्यत्वात् । अनुद्भूतगन्धस्य तुलसीकाष्ठेऽपि सत्त्वात् ।

न च रुद्राक्षधारणाभावो ज्ञानानुत्पत्तिकारणमिति सूतसंहिता-वाक्याज्ज्ञानेच्छोस्तद्धारणमावश्यकमिति वाच्यम् । तस्य शैवपर-त्वात् 'रुद्राक्षदेहसंस्थो यः कुक्कुरो म्रियते यदि । सोऽपि रुद्रपदं याति किं पुनर्मानवो गुह । सप्तविंशतिरुद्राक्षमालया देहसं-स्थया । यः करोति नरः पुण्यं सर्वं कोटिगुणं भवेत् । हस्ते चोरसि कण्ठे च शिरसा चैव धारयेत् । अवश्यं सर्वभूतानां रुद्रवद्विचरेन्महीम् । सुरासुराणां सर्वेषां वन्दनीयो यथा शिवः । उच्छिष्टोऽपि[३] विकर्मस्थो युक्तो वा सर्वपातकैः । मुच्यते सर्वपापेभ्यो रुद्राक्षस्य च धारणात् । शिखायां बाहु-कण्ठे च कर्णयोश्चापि यो नरः । रुद्राक्षं धारयेद्भक्त्या स शैवं लोकमाप्नुया'दिति सदाचारचन्द्रोदयस्थशिवकार्तिकेयसंवादेन तथा निश्चयात् ।

ननु वैष्णवस्य तद्धारणनिषेधाऽदर्शनात्तद्धारणे को दोष इति

---

१ हिरण्यमय्यामिति खपाठः । २ स्मृतेरिति खपाठः । ३ चेति खपाठः ।

चेत् । अविहितत्वमेवेति जानीहि । नन्वेवं सति मौक्तिकादिष्वपि तौल्यमिति वाच्यम् । ओमिति ब्रूमः । रागविशेषादेव तद्धारणात् । अतो ज्ञानस्य स्वतःपुरुषार्थत्वा'न्मोक्षमिच्छेज्जनार्दनादि'ति वाक्येन ज्ञानफलस्य भगवदधीनत्वाच्च भगवत्प्राप्तीच्छोस्तुलसीधारणस्यैवावश्यकत्वात् । **'मामेवैति न संशय'** इति पूर्वोक्तवाक्यात् । **'श्रेयःस्रुतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद्यथा स्थूलतुषावघातिनामि'**ति श्रीभागवतवाक्येन भक्त्यपेक्षया ज्ञानस्य जघन्यत्वात् । अतो भगवदीयानां तुलसीकाष्ठमालाधारणमेवोचितम् । ये च तुलसीधारिणं दृष्ट्वा निन्दन्ति तेषां स्वरूपं गारुडाज्ज्ञेयम् । **'कृष्णायुधाङ्कितं विप्रं तुलसीकाष्ठभूषितम् । दृष्ट्वा निन्दापरो यस्तु स बौद्धो न तु वैष्णव'** इति । तथा **'धारयन्ति न ये मालां हैतुकाः पापबुद्धयः । नरकान्न निवर्तन्ते दग्धाः कोपाग्निना हरेः । तुलसीकाष्ठमालोक्य कण्ठे वा मस्तके करे । निन्दां कुर्वन्ति ये मूढा म्लेच्छजास्ते न संशयः । अत्रातिशयमालोक्य तुलसीं द्वेषयन्ति ये । बहुनोक्तेन किं पार्थ सर्वे ते अन्यरेतजाः । तुलसीकाष्ठधृग्विप्रान् वैष्णवान् दूषयन्ति ये । सर्वे ते रौरवं यान्ति संशयो नास्ति नारद'**ति हरिवल्लभसुधोदयस्य वाक्येभ्यश्च । जपोऽपि तन्मणिभिरेव साधीयान् । **तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका । सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदे'**ति रामार्चनचन्द्रिकावाक्यात् । **तुलसीसम्भवा या तु मोक्षं वितनुतेऽचिरादि'**ति गौतमीतन्त्रसप्तमाध्यायवाक्यात्पुरश्चरणचन्द्रिकायां वैष्णवे **'तुलसीमाले'**ति वाक्यात् । तत्र धर्मप्रवृत्तौ

च 'तुलसीमणिभिश्चैव गणितं चाक्षयं भवे'दिति । अगस्त्यसंहितायां षष्ठेऽध्याये 'यः कुर्यात्तुलसीकाष्ठैरक्षमालां सुरूपिणीम् । कर्णमालां प्रयत्नेन कृतं स्यादक्षयं भवे'दित्यादिवाक्येभ्यः ।

यद्यपि 'रुद्राक्षैश्चानन्त'मिति शिवपुराणेऽस्ति । तथापि तत्सकामपरं, शैवपरं वा वाक्यं प्रकरणवशाद्बोध्यम् । वैष्णवपुराणादिषु वैष्णवनिबन्धेषु च तदादरस्याऽदर्शनादिति । अथ प्रासङ्गिकमुच्यते । जपमालामणिसङ्ख्यामाहाऽऽचारमाधवे प्रजापतिः । 'अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशकं तथा । सप्तविंशतिकाः कार्यास्ततो नैवाधिका हि ताः । अष्टोत्तरशता माला उत्तमा परिकीर्तिता । चतुःपञ्चाशिका वत्स मध्यमा परिकीर्तिता । अधमा प्रोच्यते नित्यं सप्तविंशतिसङ्ख्यये'ति । गौतमीयतन्त्रेऽपि 'अष्टोत्तरशतमणिभिर्निर्मिता या तु मालिका । राज्यं वितनुते नृणां देहान्ते मोक्षमाप्नुयादि'त्यलं प्रसक्तानुप्रसक्त्या । तस्माद्वैष्णवसाम्प्रदायिकैस्तुलसीकाष्ठमालैव धार्या तदभावे धात्रीफलादिसम्भवा । वैष्णवैकचिह्नत्वात् । जपेऽपि तस्या एव प्रशस्ततरत्वाच्च । न च रुद्राक्षादिसम्भवेति निश्चयः ।

इति नानानिबन्धानां वैष्णवाचरितस्य च ।
दर्शनादतिनिष्कृष्टं तुलसीकाष्ठधारणम् ॥ १ ॥

इति श्रीमद्वल्लभाचार्यमतवर्तिश्रीमद्वल्लभनन्दनचरणैकतानश्रीपीताम्बरतनुजपुरुषोत्तमविरचितः सप्तदशस्तुलसीमालाधारणवादः संपूर्णतामफाणीत् ॥

---

श्रीगोपीजनवल्लभाय नमः ।

## पुष्टिमार्गसिद्धान्तवाङ्मालायां

भट्टश्रीरामकृष्णविरचितः

# शुद्धाद्वैतपरिष्कारः ।

शुद्धाद्वैतप्रचारेण[1] मायावादनिवर्तकान् ।
श्रीमदाचार्यचरणान्प्रणमामि पुनः पुनः ॥ १ ॥

अथ शुद्धाद्वैतस्य किं लक्षणमिति चेत् । इतरसम्बन्धाऽनवच्छिन्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिताकाऽभाववत्त्वमिति[2] गृहाण । अत्र हि[3] द्वित्वप्रकारकज्ञानप्रतियोगिताकाऽभाववत्त्वमित्यनेनैवेतरसम्बन्धाऽनवच्छिन्नत्वप्रतीतेरनवच्छिन्नाऽन्तविशेषणस्य किं प्रयोजनमिति चेत् । सत्यम् । कार्यकारणादिद्वित्वप्रकारकपदार्थस्य मायिकत्वाऽभावाय तद्विशेषणम् । शंकराचार्याणां मते मायाऽविद्योपाध्यवच्छिन्नेश्वरजीवादिरूपकारणकार्ययोरशुद्धत्वात् । अन्यथा तेषां मते कार्यकारणयोः शुद्धत्वे द्वैताऽऽपत्तिः । अत एव स्वरूपलक्षणे सत्यादिपदलक्ष्यमेव ब्रह्म । **सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थित** इत्युक्तेः ।

तत्राऽपि वदामः । लक्षणायाः शक्यसम्बन्धरूपत्वात्तस्य च द्विनिष्ठत्वाद्ब्रह्मणि सत्त्वेन वान्ताशित्वाऽऽपातः । अथ च सम्ब-

---

१ विचारेणेति खपाठः । २ अभावत्वमिति खपाठः । ३ हीति नास्ति खे ।

न्धस्याऽपि मायिकत्वमिति चेत् । लक्ष्यत्वरूपधर्मवत्त्वेन दोषस्तदवस्थः । लक्ष्यत्वमपि तथैव मायिकं चेत् । भद्रं लक्षणावैयर्थ्यम् । किं च । लक्ष्यस्य तीरस्याऽगङ्गात्ववत्सत्यादिलक्ष्यस्याऽसत्यत्वादित्वापातः । उपाधिवादस्य च श्रीमदाचार्यचरणादिभिः खण्डितत्वान्नेह तन्यते ।

अथ च, **सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदिति** न्यायेन विशेषणस्येतरभेदकत्वेन मायासम्बन्धराहित्याभावादेव व्यावर्त्याऽभावादपार्थमिदं विशेषणमिति चेत् । न । दत्तोत्तरत्वात् । बोधाय निरूपणीयत्वेनेतरमतजन्यज्ञानस्य निरसनीयत्वात् ।

किञ्च । सन्ध्याधिकरणाऽनुरोधेन स्वाप्निकसृष्टेर्मायिकत्वेन तद्व्यावृत्त्यर्थं वा तत् । स्वाप्नसृष्टेरवास्तविकत्वेनाऽस्याः सृष्टेश्च वास्तविकत्वेन भेदो, **'वैधर्म्याच्च न स्वप्नादिवदि'**ति सूत्रादिभिर्व्यासचरणैरेव प्रतिपादितः । इतर[1]सम्बन्धविशेषणं तु ब्रह्मणो धर्मधर्मिभावसम्बन्धावच्छिन्नतया । तस्यापि निरासे शङ्करमतप्रवेशवारणाय । तर्हि धर्मधर्मिभावसम्बन्धाऽङ्गीकारे द्वित्वप्रकारकज्ञा[2]नप्रतियोगिताकाऽभावाऽभावादव्याप्तिरिति चेत् । धर्मधर्मिभावस्याऽभिन्नत्वस्य, **'प्रकाशाश्रयवद्वा तेजस्त्वादि'**त्यादिसूत्रैर्निर्णीतत्वात् । **'परास्य शक्तिरि'**त्यादिष्वभेद एव षष्ठ्यङ्गीकारात् ।

एतेन भेदाऽभेदवादिनौ निम्बार्कभास्कराचार्यौ प्रत्युक्तौ । तत्राऽऽद्यस्य वास्तविकभेदाऽभेदत्वेन मध्वाचार्यस्यैव भेदस्य वास्तविकतया द्विप्रकारकेत्यादिना निरस्तत्वात् । द्वितीयस्य त्वौपाधिकभेदाभेदेन भेद-

---

१ इतर इति सम्बन्धेत्यादि खपाठः । २ ज्ञानेति खे नास्ति ।

स्यौपाधिकत्वेनेतरसम्बन्धेनेत्यादिना व्यावर्तितत्वात् । तर्हि अवच्छिन्नान्तमेव तदिति चेत् । शङ्करमताऽऽपत्तिः । अतः कार्यादीति ।

तर्हि रामानुजाचार्यमतेऽपि मायासम्बन्धाऽभाववत्कार्यकारणयोरद्वैततया तन्मतप्रवेश इति चेत् । शृणु । तन्मते हि चिदचिद्विशिष्टस्य सूक्ष्मस्य स्थूलस्य कारणस्य कार्यस्य च सत्त्वेन, स्वमते, **'आत्मैवेदमग्र आसी'**दित्यादिश्रुत्याऽचितः कारणावस्थायां निषेधात् । केवलात्मनः कारणतया ततो वैलक्षण्यम् । कार्यावस्थायामपि तेषां मते परस्परभेदस्य वास्तविकत्वेन स्वमतेऽभेदस्य वास्तविकत्वेनाऽपि वैलक्षण्यम् । न च घटपटादीनामभेदो न सम्भवतीति वाच्यम् । एवैषां ब्रह्मोपादानस्यैकत्वेन तस्यैवाऽवस्थान्तरत्वेन चाऽभेदात् । यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवस्थाभेदेऽपि न पुरुषभेदः ।

किञ्चेतरसम्बन्धाऽनवच्छिन्नत्वेनाऽचितो, वास्तविकभिन्नचितश्च निरासेन न तत्रातिव्याप्तिः[१] ।

किञ्च विशिष्टाद्वैतमित्यस्य विशेषणविशिष्टत्वेन विशेषणस्य चेतरव्यावर्तकत्वेन सम्भवोऽपेक्षितोऽत्र व्यावर्त्याभावतया वैशिष्ट्यकथनं नोपपद्यत इति । एतेन शैवो[२]ऽपि दत्तोत्तरः ।

भिक्षुस्त्वविभागाद्वैतवादमवलम्ब्यौपाधिककर्तृत्वादिकमङ्गीचकार ।

---

१ तत्रापि व्याप्तिरिति खपाठः । एवमशुद्धा अपि पाठा अस्माभिष्टिप्पण्यां धृता इति मास्मभूदाश्चर्यं पश्यताम् । यतो हि पुस्तकानामशुद्धतमतया शोधने कियान्प्रयासस्तथापि पुस्तकसंग्रहवन्तः शोधनाय न ददतीति दर्शनाय क्वाचित्कोऽयमाडम्बरः । पुस्तकमेकमेवाऽस्य सम्प्राप्तम् । तदपि च सर्वत्राऽशुद्धम् ।
२ विशिष्टाद्वैतवादिरामानुजमतस्य चौरत्वात् ।

तदपीतरसम्बन्धानवच्छिन्नाऽभावत्वेन निरस्तम् । द्वित्वप्रकारकाद्यभावत्वाऽन्तेन मध्वाचार्यमतस्य निरासः । लीलास्थभावस्य बाधाभावाय कार्यकारणादिरूपमिति ज्ञानस्य विशेषणम् । द्वित्वप्रकारकप्रतियोगिताकाभावस्य मायावादमतेऽपीष्टत्वात्तन्निवारणाय ज्ञानस्येति प्रतियोगिनि विशेषणमिति सुष्ठु ।

अत्र शुद्धाद्वैतपदे कोऽसौ समास इति चेत् । शुद्धं च तदद्वैतं चेति कर्मधारयः । अत्रेतरसम्बन्धाऽनवच्छिन्नत्वे सतीत्येवं योज्यम् । उक्तलक्षणं तु शुद्धयोः कार्यकारणयोरिति षष्ठीतत्पुरुषपक्षे बोध्यम् ।

अत्र नरसिंहतापिन्यां योनित्वं ब्रह्मणः समर्थयित्वा, 'सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वाऽवस्थासु तथाऽप्यल्पा' इत्याद्युक्त्वा, 'सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगम्यते' इति वाक्यं पठितम् । अग्रे च, 'सर्वमत[1] एव शुद्धोऽबाध्यस्वरूपः सुखरूप आत्मे'ति निरूपितम् । 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतिषु शुद्धाद्वैतं स्पष्टमेव प्रतीयत इति बोध्यम् । विस्तरस्तु मत्कृतशुद्धाद्वैतमार्तण्डप्रकाशे बोध्यः ।

श्रीमद्गिरिधराधीशपादाम्बुजपरागभृत् ।
व्यलिखद्रामकृष्णोऽसौ शुद्धाद्वैतपरिष्कृतिम् ॥ १ ॥

इति श्रीरामकृष्णभट्टविरचिता शुद्धाद्वैतपरिष्कृतिः समाप्ता ॥

---

१ मत इति खपाठः ।

श्रीकृष्णाय नमः ।

## पुष्टिमार्गसिद्धान्तवाङ्मालायां
### श्रीमत्पुरुषोत्तमविरचित
# उपदेशविषयशङ्कानिरासवादः ।

यथाधिकारं शरणभक्तिमार्गोपदेशतः ।
य उद्दधार सर्वांस्तं वन्दे श्रीवल्लभं प्रभुम् ॥

ननु सर्वपदं त्रैवर्णिकभिन्नपरत्वेनात्र व्याख्यातव्यम् । यतः 'सर्वे शाक्ता द्विजा जात्या न शैवा न च वैष्णवाः । यस्मादुपासते नित्यं गायत्रीं वेदमातरमि'ति विश्वामित्रवाक्ये सर्वेषां द्विजानां जात्या शाक्तत्वकथनात्रैवर्णिकानां शाक्तत्वं साहजिकम् । शैवत्ववैष्णवत्वादिकं तु पारिभाषिकत्वात्कृत्रिमम् । गायत्र्युपदेशापेक्षयाऽन्यस्य जघन्यत्वात् ।

किञ्च द्विजातीनां कर्मार्थत्वात्कर्मणां च श्रौतस्मार्तभेदेन द्वैविध्यादन्येषां चेतो जघन्यत्वाच्छ्रौतस्मार्तकर्माधिकारस्य गायत्र्युपदेशादेव सिद्धावुपदेशान्तरस्याऽनर्थकत्वात् । न च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि'त्यादिश्रुतिभि[1] 'स्तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् । शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयमि'त्यादिश्रीभागवतवाक्यैश्च[2]

१ मितीति खपाठः । २ भगवद्वाक्यैरिति कपाठः ।

गुरूपसत्तिबोधनाद्ब्रह्मज्ञानार्थमेव च तदुपसत्तेरुपदेशस्य तदेव प्रयोजनमिति नानर्थकत्वमिति वाच्यम् । एवमपि तदतिरिक्तोपदेशानर्थक्यस्य दुर्वारत्वात् । ब्रह्मण औपनिषदत्वात् ।

अथ 'अदीक्षितस्य वामोरु कृतं सर्वमनर्थकम् । पशुयोनिमवाप्नोति दीक्षाहीनो नरो मृतः । विना श्रीवैष्णवीं दीक्षां प्रसादं सद्गुरोर्विना । विना श्रीवैष्णवं धर्मं कथं भागवतो भवेदि'त्यादिपाद्मोत्तरखण्डीयवाक्येभ्यस्तस्यावश्यकत्वं विभाव्यते । तदापि श्रीवैष्णव्या दीक्षायास्तथात्वमस्तु । न त्वन्यस्या अपि । अवाचनिकत्वात् । न च 'कृते श्रुत्युक्तमार्गः स्यात्त्रेतायां स्मृतिभावितः । द्वापरे तु पुराणोक्तः कलावागमसम्भवः । अशुद्धाः शूद्रकल्पा हि ब्राह्मणाः कलिसम्भवाः । तेषामागममार्गी स्याच्छुद्धिर्न श्रौतवर्त्मना । अभावे वेदमन्त्राणां पञ्चरात्रोदितो विधिः । वैदिकी तान्त्रिकी दीक्षा द्विविधापि हि सिद्धिदे'ति विष्णुयामलवाक्यात्तान्त्रिक्यास्तथात्वं शंक्यम् । एतस्याऽवैदिकपरत्वात् । अभावे वेदमन्त्राणामिति कथनात् । इदानीं च कलेरारम्भाद्वेदादिसत्त्वे तस्याप्रयोजकत्वात् । अत एव कौर्मे यामलादीनां मोहकत्वमुक्तम् । तथाहि-पूर्वभागे द्वादशाध्याये हिमाचलं प्रति देवीवाक्ये । 'न च वेदादृते किञ्चिच्छास्त्रं ब्रह्माभिधायकम् । यानि शास्त्राणि दृश्यन्ते युगेऽस्मिन्विविधानि तु । श्रुतिस्मृतिविरुद्धानि तेषां निष्ठा हि तामसी । कापालं पाञ्चरात्रं च यामलं वाममार्गजम् । एवंविधानि चान्यानि मोहनार्थानि तानि तु । ये कुशास्त्राभियोगेन मोहयन्तीव मानवान् । मया सृष्टानि शास्त्राणि मोहायैषां

भवान्तर' इति । [1]तथा तत्रैव षोडशाध्याये देवदारुवनस्थानां गौतमशप्तानां मुनीनां प्रसङ्गे शिवं प्रति नारायणवाक्यम् । 'न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर । संगच्छति महादेव धर्मो वेदाद्विनिर्बभौ । तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर । अस्माभिः सर्व एवैते गन्तारो नरकानपि । तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् । विमोहनानि शास्त्राणि करिष्यावो वृषध्वज । एवं सम्बोधितो रुद्रो माधवेनासुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं लाङ्गलं वामभैरवीं पूर्वपश्चिमाम् । पाञ्चरात्रं पा[2]शुपतं तथाऽन्यानि सहस्रश' इति ।

यदि [3]च वाममा[4]र्गव्यतिरिक्ततन्त्राणामदुष्टत्वं विभाव्यते । तदापि दीक्षायाः सार्थकत्वमस्तु । एवं सत्युपदेशानर्थक्यं तु दुर्वारमेव । दीक्षापदात् 'मन्त्रमार्गानुसारेण साक्षात्कृत्वेष्टदेवताम् । गुरुश्चेद्बोधयेच्छिष्यं मन्त्रदीक्षेति सोच्यत' इति तन्त्रे तल्लक्षणात् । न चोपदेशे मन्त्रमार्गानुसारित्वम् । 'नराणां स्वल्पवित्तानां कुर्याद्वित्तानुसारतः । महामण्डपयोगेन वित्तार्थानां तथा भवेत् । वित्तलाभाद्विमुक्तस्य स्वल्पवित्तस्य देहिनः । संसारभयभीतस्य विष्णुभक्तस्य तत्त्वतः । अग्नावाज्यान्वितैर्बीजैः सतिलैः केवलैस्तु वा । द्रव्यहीनस्य कुर्वीत वचसानुग्रहं गुरुरि'ति नारदपञ्चरात्रे विज्ञानोपनिषत्संहितायाः षोडशे पटले दीक्षात्रैविध्यमुपक्रम्य मन्त्रमार्गानुसारस्वरूपकथनात् । 'ब्राह्मणान्क्षत्रियान्वैश्या-

---

१ तथेति कपुस्तके नास्ति । २ तथा कालामिति कपुस्तकम् । ३ वेति कपाठः । ४ मार्गमध्येति कपाठः ।

न्सच्छूद्रान्सत्स्त्रियोऽपि वा । विष्णुभक्तिरतान्साधून्दीक्षयेद्विधिना गुरुः । गुरुः परीक्षयेच्छिष्यं संवत्सरमतन्द्रितः । नियमान्विहितान्वर्ज्यांश्श्रावयेच्च चतुःशतमि'[१]त्यादिविष्णुयामलेऽपि कथनाच्च । उपदेशस्य त्वितो वैलक्षण्यं स्फुटमेव । 'चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये । मन्त्रमात्रप्रकथनमुपदेशः स कथ्यत[२] इति रामार्चनचन्द्रिकायां रुद्रयामलवचनात् ।

अथ यथाकथंचिदुपदेशसार्थक्यं विभाव्यते, तदाप्यवैदिकान्प्रत्यस्तु । अतः शिष्टान्प्रति[३] गायत्र्याद्यतिरिक्त उपदेशः सर्वथा नोचित एवेति प्राप्ते–उच्यते ।

येन शाक्तत्वस्य साहजिकत्वं ब्रूषे सा जातिः किं सामान्यभेदरूपा[४] भवतोऽभिमता । उत देहसम्भवरूपा । किं वाऽतिशयरूपा । नाऽऽद्या । पुंसो म्लेच्छादिभावे तस्या व्यक्तिपरित्यागाज्जातित्वस्य वक्तुमशक्यत्वात् । परित्यागाऽनङ्गीकारे म्लेच्छत्वेन सांकर्यान्नियतव्यंजकाभावाच्च । नाऽपि धर्मान्तरमुपाधिरूपम् । जातिपदस्य विरोधात् । न द्वितीया । उत्तरार्धस्य, 'जन्मना जायते शूद्र' इत्यादिवाक्यानां[५] च विरोधापातात् । तृतीया चेत्, तथा सति न शाक्तत्वस्य साहजिकत्वम् । संस्कारोत्तरभावित्वात् । उत्तरार्ध उपासनोक्तेश्च । एवं सति वाक्यान्तरे 'जन्मना जायते शूद्र' इति प्रथमं शूद्रत्वस्योक्तत्वाच्छैवाद्युपदेशैस्तदनपायात्स्मार्तकर्माद्यधिकाररूपद्विजत्वसम्पादको गायत्र्युपदेशस्तत उत्तम इत्येवं स्तुत्वोत्तरार्धे

---

१ तथेत्यधिकः कपुस्तके । २ स काम्यत इति कपाठः । ३ शिष्यानिति कपाठः । ४ प्रामाण्येति कपाठः । ५ इत्यादिवाक्यविरोधादिति खपाठः ।

तदेवं दृढीक्रियते । तावता स्मार्तकर्माधिकारसम्पादकत्वमस्य सिद्ध्यति, न तु वैष्णवत्वादीनां जघन्यत्वमपि । नहिनिन्दान्यायात् ।

किंच । पारिभाषिकत्वं तदा भवति यदा स धर्मस्तत्रासन्नपि किञ्चित्कार्यकरणार्थं वचनादारोप्यते । यथा, आदित्योदयमात्रव्यापिन्यास्तिथेः पूर्णत्वम् । नहि वैष्णवत्वादिकं तथा । उपदेशादिना तत्सिद्धेः । अन्यथा द्विजत्वस्याऽपि पारिभाषिकत्वापत्तेः । अतः स्वर्गादिसम्पादकज्योतिष्टोमार्थं सौमिकदीक्षावन्मोक्षाद्यर्थकनिवृत्तिधर्मार्थं वैष्णवाद्युपदेशस्ततोऽधिक एव ।

वस्तुतस्त्वस्मिन्वाक्ये वेदमातृपदाद्गायत्रीप्रतिपाद्यब्रह्माऽनभिज्ञस्यैव शाक्तत्वमत्र सिद्ध्यति, न तु ज्योतिश्चरणाधिकरणोक्तरीत्या जन्माद्यस्य यतोऽन्वयादितिवाक्योक्तरीत्या वा प्रतिपाद्यब्रह्मस्वरूपाभिज्ञस्य । अतस्तथा तदुपासनेऽपि न शाक्तत्वमिति न किञ्चिदेतत् । न चौपनिषदोपदेशेन गतार्थत्वं शङ्क्यम् । इदानीं तदनधिकारात् । निर्वेदाद्यभावादाहारशुद्ध्यभावाच्च । यथाकथंचित्तत्सम्भवेऽपि ज्ञानस्य विलम्बेन साधकत्वात् । 'वेदान्तविज्ञाने'ति श्रुत्या तथानिर्णयात् ।

नाऽपि श्रीवैष्णव्या दीक्षया । तस्या अपि प्रावाहिकभक्तावेवान्तःपातात् । मोक्षफलकत्वेन तथानिर्णयात् । नाऽपि तान्त्रिक्या । उपासनामार्गीयत्वात् । न चोपासनैव भक्तिरिति वाच्यम् । रूपभेदफलभेदकाण्डभेदधर्मभेदैस्तस्या भक्तिभिन्नत्वस्य भक्तिहंसे निपुणतरमुपपादितत्वात् । अतः स्वतन्त्रभक्तीच्छूनां स्वतन्त्रभक्तानुसा-

१ तदेव हेतुनेति कपाठः । २ मस्तीति खपाठः । ३ तस्य तथेति कपाठः ।

रिणां च साधनभक्तौ फलमुखाधिकारसम्पादकत्वाद्भक्तिमार्गीयोपदेशः सर्वान्प्रत्यावश्यकः। **'देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा। भजन्मुकुन्दचरणं स्वस्तिमान्स्याद्यथा वयमि'**ति सप्तमे प्रह्लादवाक्ये स्वरूपयोग्यत्वस्य सर्वत्र तुल्यत्वात्फलमुखाधिकारस्य तदर्थिनामपेक्षणात्। अत एव शुकवसिष्ठादीनां परीक्षिदुपबर्हणाद्युपदेष्टृत्वं श्रीभागवतब्रह्मवैवर्तादिषु युज्यते।

न च **'भक्त्या मामभिजानाती'**ति वाक्याद्भक्तेर्ज्ञान एवोपक्षयादुपनिषच्छ्रवणेनैव ज्ञानसिद्धौ भक्तेरनावश्यकत्वात्तदर्थमुपदेशादिप्रयासोऽपार्थ[1] इति वाच्यम्। उपनिषच्छ्रवणमात्रेण[2] ज्ञानाऽनुदयात्। प्रत्यक्षबाधात्। मननादिविधिवैयर्थ्यापाताच्च। अतोऽधिकारिविशेषस्य तत्राऽपि मृग्यत्वेन मन्दमध्यमाज्ज्ञानाधिकारिणः प्रत्यपि भक्तेरावश्यकत्वात्तदर्थमुपदेशो नाऽपार्थः।

वस्तुतस्तु **'निर्विण्णानां ज्ञानयोगः कर्मयोगस्तु कामिनाम्। न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद'** इत्येकादशे भगवताऽधिकारि[3]भेदेन साधनभेदनिरूपणात्पृथक्फलसाधकत्वमिति न भक्तेर्ज्ञानोपक्षीणत्वम्। **'यो मद्भक्तः स मे प्रिय'** इति भगवत्प्रियत्वसम्पादकत्वाच्च। **'तपस्विभ्योऽधिको योगी'**ति वाक्यसन्दर्भे भक्तस्य सर्वोत्कर्षमुखेन ज्ञानाऽपेक्षयापि भक्त्युत्कर्षबोधनाच्च।

न च **'ज्ञानी त्वात्मैव मे मतमि'**ति वाक्याज्ज्ञानिन उत्कर्षः शङ्क्यः। **'नैवात्मा च यथा भवानि'**त्येकादश उद्धवं प्रति,

---

१ अयथार्थ इति खपुस्तकम्। २ श्रवणेनेति कपुस्तकम्। ३ अधिकारेति खपुस्तकम्।

'नाऽहमात्मानमाशास' इति नवमे दुर्वाससं प्रति च भगवद्वाक्यस्य विरोधात्। 'भक्त्या मामभिजानाती'त्येतत्तु फलात्मकज्ञानपरम् 'समासेनैव कौन्तेये'ति वाक्यसन्दर्भे ज्ञाननिष्ठाकथनेन ब्रह्मभावानन्तरं भक्तिलाभकथनाच्च । तज्जन्यस्य ज्ञानस्याऽपि नान्तरीयकत्वेन तदभिन्नत्वात् । भक्तेरपि पर्यवसानदशायां फलत्वमेव । 'सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृत' इति तल्लक्षणात् ।

न च भक्तेरश्रौतत्वान्नैर्बल्यं शङ्क्यम् । माहात्म्यज्ञानार्थं सृष्ट्यादिवाक्यानि सुदृढस्नेहार्थमात्मवाक्यानि च वदन्त्याः श्रुतेर्माहात्म्यज्ञानपूर्वकसुदृढस्नेहस्वरूपिकायां भक्तावेव तात्पर्यात् । तदर्थमेव च कर्मादीनां निरूपणात् । 'भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेदि'ति द्वितीयस्कन्धवाक्यादित्युपपादितं तत्त्वदीपे । अतो भक्तेरावश्यकत्वात्तदधिकारसम्पादक उपदेशः शिष्टानां वैदिकमुख्यानामत्यावश्यक इति सिद्धम् । 'मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारत । पूर्वैश्च कोटिपुरुषैः परैः सार्धं हरेरहो । कोटिजन्मार्जितात्पापान्मंत्रग्रहणमात्रतः । मुक्ताः शुद्ध्यन्ति यत्पूर्वं कर्म निर्मूलयन्ति च । पुत्रान्दारांश्च शिष्यांश्च सेवकान्बान्धवांस्तथा । यो दर्शयति सन्मार्गं सद्गतिस्तद्भवेद्ध्रुवम् । यो दर्शयत्यसन्मार्गं शिष्ये विश्वासिते गुरुः । कुम्भीपाके स्थितिस्तस्य यावच्चन्द्रदिवाकरा'विति ब्रह्मखण्डाष्टमाध्याये ब्रह्माणं प्रति नारदवाक्य उपदेशमात्रेण सद्गतिकथनाद्विमार्गोपदेशे दुर्गतिकथनाच्च । चतुर्थस्कन्धद्वादशा-

ध्याये 'ज्ञानमज्ञाततत्त्वाय यो दद्यात्सत्पथे स्थितः। कृपालोर्दीननाथस्य देवास्तस्यानुगृह्णत' इति वाक्याच्चापि तथा।

किञ्च। विज्ञानोपनिषत्संहितायां यथोक्तप्रकारेण दीक्षाकरणे शिष्येण गुरवे स्वीयधनार्द्धं तुरीयांशो वा सर्वथार्पणीय इत्युक्त्वा तदकरणे दोषो[2] दर्शितः। तदिदानीन्तनानां शिष्याणां लुब्धत्वाद्गुरुणा तथोक्तौ तस्यापि लुब्धत्वसम्भावनया हेयतापत्तेश्च तदशक्यमत उपदेश एव दोषाऽजनकत्वादुचित इति। एतेनैवं[3] श्रीवैष्णव्या एव दीक्षाया आवश्यकत्वमित्यपास्तम्। ब्रह्मवैवर्ते रासेश्वरमन्त्रस्याग्रे नारदायोपदेक्ष्यमाणस्य प्रस्तावेन तदभावाच्च। अतस्तेषु तेषु पुराणेषु तत्तन्मन्त्रोपदेशकथनात्तदुक्तभक्तौ फलमुखाधिकाराय च तदुपदेश आवश्यक इति सिद्धम्। एतेनैव 'वैष्णवं हि समुद्दिश्य एकादश्यादि कथ्यते। ब्रह्म नानापुराणेषु जपपूजादिकर्मसु। न चात्राधिकृता यूयं दीक्षाभावादवैष्णवाः। अदीक्षितो वैष्णवश्च कथ्यते भवतां नये। अकृताधानकर्मापि आहिताग्निर्निगद्यतामि'त्यादिरूपो दुर्जनप्रलापोऽपि परिहृतो बोध्यः।

न चैवं सति सर्वेषां मन्त्राणां तौल्याच्छ्रीकृष्णमन्त्रोऽपि वैष्णवेन मन्त्रान्तरेण विकल्प्यतामिति वाच्यम्। 'गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत। सर्वेषु मन्त्रवर्गेषु वैष्णवं श्रेष्ठमुच्यते। वैष्णवेषु च मन्त्रेषु कृष्णमन्त्राः फलाधिका' इति गौतमीयतन्त्रप्रथमाध्यायवाक्येन फलेप्सूनां त एवाऽऽवश्यकाः। अस्तु वा तत्तदधिकारिभेदाद्विकल्पः। तथापि कृष्णमन्त्राणामुत्कर्षस्तु न

---

१ ज्ञानविज्ञानेति खपुस्तकम्। २ दोषः प्रदर्शित इति खपुस्तकम्। ३ एतेनाऽपीति कपुस्तकम्। ४ सर्वेष्विति कपुस्तकम्।

क्षुद्यते । इदमप्युपासनामार्गविचारेणोक्तम् । भक्तिमार्गविचारे तु शरणोपदेश आत्मनिवेदनोपदेश एव च यथाधिकारमावश्यकः । न तु मन्त्रादीनाम् । भगवता भक्त्युपायोपदेशेऽधिकारिविशेषणत्वेन तयोरेवोक्तत्वात् । तथा हि एकादश एकादशाध्याये पूर्वं ज्ञानमार्गमुपसंहृत्य तत्राऽशक्तौ तत्फलाय भक्तिं वदिष्यता भगवता **'यद्यनीशो धारयितुं मनो ब्रह्मणि निश्चलम् । मयि सर्वाणि कर्माणि निरपेक्षः समाचरे'**दिति फलापेक्षारहितस्य स्वस्मिन्कर्मार्पणं भक्त्यर्थमुपदिश्य, तत्कथं कार्यमित्यपेक्षायां **'श्रद्धालुर्मे कथाः शृण्वन्सुभद्रा लोकपावनीः । गायन्ननुस्मरन्कर्म जन्म चाभिनयन्मुहुः । मदर्थे धर्मकर्मार्थानाचरन्मदपाश्रयः । लभते निश्चलां भक्तिं मय्युद्धव सनातन'** इति द्वाभ्यां प्रकारानुवादात्स्वाश्रितस्य स्वकथनश्रवणस्वजन्मकर्मगानस्मरणतदभिनयनपूर्वकं धर्मकामार्था आचरणीया इति तत्प्रकार उक्तः । तत्राऽपाश्रयपदेन शरणगमनमेवाऽधिकारिविशेषणत्वेनोक्तम् । शरणपदं च रक्षितरि रूढम् । **'शरणं गृहरक्षित्रोरि'**ति कोशात् । तथा च सर्वतो भगवानेव रक्षक इत्यनुसन्धानमेव शरणगमनमिति ।

वक्ता चात्र स्वयमेवेति मच्छब्देनैव श्रीकृष्णनामनि प्राप्ते श्रीकृष्णः शरणं ममेत्येवानुसन्धानाऽऽकारः सिद्ध इति तस्यैवोपदेशः सिध्यति । अत एव वाक्यान्तरे **'तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम् । प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयमि'**ति शरणपदमुक्तम् । गीतायामपि **'मां हि पार्थ व्यपाश्रित्ये'**ति, **'मामेकं शरणं व्रजे'**त्यु-

क्रम् । उपदेशावसर उभयत्राऽपि स्वस्य[1] प्रत्यक्षत्वादुपदेशस्यापि तथात्वान्मामित्यस्य मध्यमपुरुषस्य च प्रयोग इति परोक्षदशायां पूर्वोक्त एवकारः । न तावता शब्दस्य कस्याऽपि लौकिकत्वं ऊहात्प्रस्तुतमित्यर्थः । 'पदपदैकदेशादिप्रक्षेप[2] ऊह' इति हि जैमिनीयतन्त्रे तल्लक्षणम् । स च स्वयममन्त्रोऽपि स्वघटित[3]वाक्यस्य मन्त्रत्वनिर्वाहक एव, न तु विघटकः । अन्यथा **'सूर्याय जुष्टं निर्वपामी'**त्यादावपि तथात्वापत्तेः । श्रुतावव्रय[4] इत्यपि पाठात् । न च शरण एवोपदेष्टव्ये श्रीमन्मुकुन्दचरणैः, **'सदा शरणमहं प्रपद्य'** इति **'शरणागतगोपाल'** इत्यष्टादशार्णाऽष्टार्णयोरन्यतरः कुतो वा नादृत इति शङ्क्यम् । उपासनामार्गीयत्वादित्युक्तम् ।

ननु तदादरे को दोष इति चेत् । अत्रोक्तस्य फलस्याऽभाव एवेति ब्रूमः । अत एव जैनदयाया अनादरोऽपि युज्यते । अन्यथा **'ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन संरक्षेदि'**ति श्रुतिच्छायायास्तत्रापि शक्यवचनत्वात्तस्या अपि उपादेयत्वापत्तिः । अत एव माधवाचार्यैः स्मृतिपाद उक्तं **'शाक्योक्ताऽहिंसनं धर्मो न वा धर्मः श्रुतत्वतः । न धर्मो न हि पूतं स्याद्गोक्षीरं श्वदृतौ भृतमि'**ति ।

किंच । श्रुतिविचारेऽपि गोपालपूर्वतापनीये **'यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गोपयति कृष्णः । यस्तं देवमात्मवृत्तिप्रकाशं मुमुक्षुर्वै शरणमनुव्रजेदि'**ति शरणगमनं विहितम् । आरम्भे च **'श्रीकृष्णो वै परमदैवतमि'**ति श्रावितम् । एवं

---

१ तस्येति कपुस्तकम् । २ पदैकदेशादप्रक्षेप इति कपुस्तकम् । ३ स्वपठितेत्यादि कपुस्तकम् । ४ यूथमिति खपुस्तकम् ।

सति तदनुसन्धाने प्रथमान्तश्रीकृष्णपदोपस्थितौ भावनायां शरणपदस्यापि विशेषणतया प्रथमान्तसामानाधिकरण्येनैवोपस्थितौ स्ववाचकपदस्य षष्ठ्यन्तस्यैवोपस्थितिः । श्रुत्यन्तरे **'मुमुक्षुर्वै शरणमहं प्रपद्ये'** इत्यहम्पदादस्मच्छब्दस्यैव चोपस्थितिरिति विभक्तिमात्रस्यैवार्थबलाद्विपरिणाम इति न कस्याप्यश्रौतत्वम् । न च मन्त्रेषु विपरिणामोऽनुचित इति शंक्यम् । नवमस्य प्रथमपादे ककारस्तत्प्रधाने स्यादित्यधिकरणे **'अयं यजमान आयुराशास्त'** इत्यादिरूपे फलप्रकाशके सूक्तवाकमन्त्रे **'सत्रिणामेते यजमाना आशासत'** इत्यादिरूपस्य विभक्त्यन्तस्याऽङ्गीकारात्तस्य च विपरिणाम एव प्रवेशात्प्रतीयमानेऽर्थे तात्पर्यनिर्वाहाय पदैकदेशाऽन्यथात्वकल्पनस्यैव विपरिणामत्वान्न कोऽपि शंकालेशः ।

केचित्तु सहस्रनामादौ भीष्मवैशम्पायनाविवात्राऽपि सञ्जयं न्यस्य व्यासचरणानामेवर्षित्वमभिसन्दधाना **'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्ममे'**ति वाक्यादुद्धारमाहुः । तथा हि—यत्र योगेऽन्वये, ईश्वरो मुख्यः कृष्णस्तत्र श्रीः । ब्रह्मवैवर्ते श्रीष्णजन्मखण्डद्विपंचाशदध्याये राधाकृष्णेत्युच्चारणप्रसङ्गे **'जगन्माता च प्रकृतिः पुरुषश्च जगत्पिता । गरीयसी त्रिजगतां माता शतगुणैः पितुरि'**त्यादिभिः श्रीनाम्नः पूर्वकथनस्योक्तत्वात्प्रथमान्तश्रीकृष्णपदोद्धारः । यत्र पार्थः, पातीति पा रक्षकोऽर्थोऽभिध्येयो यस्य तादृशो धनुर्धरः । धनुः धरो यस्याऽसौ धनुर्धरः शरः । स च शृणाते रक्षाकर्मणो ल्युडन्तस्यैव प्रसिद्धः । **'शरणं गृहरक्षित्रोरि'**ति कोशात् ।

---

१ भक्तिमात्रेति खपुस्तकम् । २ सन्दधानेति कपुस्तकम् ।

तथा च यत्र सः तत्र ममेति । एवं च यत्तदोर्नित्यसम्बन्धादुभयत्र तत्रेत्यस्य प्राप्तौ मूलस्थं तत्रेति पदं विजयादिपदैरन्वेति । तथा सति यत्र श्रीकृष्णः शरणं मम तत्र विजयो भूतिर्नीतिर्मतिर्ध्रुवेति फलबोधनार्थत्वात् । अत्र विजयादिपदैरैहिकं, मतिपदेन ज्ञानं ध्रुवमुच्यते । भक्तिरभयं च पूर्वमेवोक्तम् । शरणागतौ पापमोचनं च सर्वधर्मान्परित्यज्येत्यत्रैवोक्तम् । तथा **'नाम्नां मुख्यान्तरं नाम कृष्णाख्यं यत्परंतप । प्रायश्चित्तमशेषाणां पापानां मोचनं[1] परमि'**ति प्रायश्चित्तमयूखे स्कान्दप्रभासखण्डीये भगवद्वाक्ये नाममात्रस्यापि तथात्वमुक्तम् ।

अतः सर्वफलदत्वमेतस्यैतदेवाभिसन्धायाभियुक्तैरुक्तम् ।

**'किं मन्त्रैर्बहुभिर्विनश्वरफलैरायाससाध्यैर्मखैः**
**किञ्चिल्लोपविधानमात्रविफलैः संसारदुःखावहैः ।**
**एकः सन्नपि सर्वमंत्रफलदो लोपादिदोषोज्झितः**
**श्रीकृष्णः शरणं ममेति परमो मन्त्रोऽयमष्टाक्षरः ॥'**

इ[2]ति । केचित्त्वेनं मन्त्रमिमं श्लोकं च नारदपंचरात्रोक्तमाहुः । तदपि नास्माकं रोचते । आकृतितौल्ये स्वरूपभेदस्य, लोकवेदाधिकरणखण्डननिबन्धे विद्वन्मण्डने च **'बहूनि सन्ति नामानी'**त्येतद्वाक्यार्थविचारे भक्तिहंसे च प्रपंचितत्वेन भक्तिमार्गीयस्य ततो भिन्नताया एव युक्तत्वात् ।

किञ्च । शिष्टाचारविचारेऽप्ययमेवोपदेश आवश्यकः । **'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था'**

---

१ मोचकमिति कपुस्तकम् । २ त्वोमिति ब्रूम इत्यधिका खपुस्तके ।

इति भारत आजगरे युधिष्ठिरवाक्यात् । 'साधूनां समयश्चापि प्रमाणं वेदवद्भवेदि'ति मिताक्षरादिसर्वनिबन्धलिखितम् । ब्रह्माण्डवाक्ये कलौ तस्य विशेषतः प्रामाण्यबोधनाच्च । अत एव प्रथमसुबोधिन्यां श्रीमदाचार्यचरणैः 'दत्त्वाज्ञां च कृपावलोकनपद्धरि'ति, 'वैश्वानराद्वाक्पतेरि'ति स्वानुभवः स्वस्वरूपं चोक्तम् ।

ननु तादृशतदनुभवे तादृक्स्वरूपत्वे च किं मानमिति चेत् । आचार्यत्वमेवेति ब्रूमः । दृश्यन्ते हि सर्वेष्वेव प्रस्थानेषु प्रस्थानप्रवर्तकानां स्वस्वानुभवबोधकानि वाक्यानि । तथाहि—माध्वसम्प्रदाये 'विष्णोः पदे परमे मध्व उत्स' इति श्रुतौ मध्वपदेन मध्वाचार्या व्याख्यातास्तथा मरुदवतारत्वं च तेषामुच्यते । जयतीर्थश्च बलीवर्द आचार्याज्ञयोत्पन्नो भाष्यव्याख्याता जात इति । तथा रामानुजसम्प्रदाये रामानुजाचार्याः शेषावतारा इति । मायावादिसम्प्रदायेऽपि व्यासशङ्करयोर्विचारस्तत्र गणेशस्य साक्षित्वम् । तत्र गणेशेनोक्तो 'व्यासो नारायणः साक्षाच्छङ्करः शङ्करः स्वयम् । तयोर्विवादे सम्प्राप्ते किङ्करः किं करोम्यहमि'ति श्लोकश्च प्रसिद्धः । गौडेषु कृष्णचैतन्या भगवदवतारत्वेन प्रसिद्धाः । सौन्दर्यलहर्यां 'तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः पयःपारावारः परिवहति सारस्वत इव । दयावत्या दत्तं द्रुहिणशिशुरास्वाद्य तव यत्कवीनां प्रौढानामजनि कमनीयः कवयिते'ति स्वानुभव उक्तः । अत आचार्यत्वादेव न तद्वाक्ये शङ्कोदयः । किन्तु वेदविरुद्धत्व एवाप्रामाण्यम् । अतो मन्त्रलक्षणाधिकरणे शिष्टानां मन्त्र इति प्रसिद्धेरेव सिद्धान्तलक्षणत्वादानुपूर्व्या मन्त्रत्वमनयापि रीत्या निर्बाधम् ।

अथवा । अस्मिन्वाक्ये श्रीकृष्ण इति नामैव मन्त्रः । नाम्नो मन्त्रत्वं च सर्वशास्त्रप्रसिद्धम् । शेषस्तु शरणोपदेशः । अत एव नामदत्तं नामप्राप्तं नामधारीत्येव प्रसिद्धिरिति न कोऽपि शङ्कालेश इति दिक् । एवमेव 'वैष्णवानां हरेरर्चा तपस्या च श्रुतौ श्रुता । वैष्णव त्वं गृहे तिष्ठ कुरु कृष्णपदार्चनम् । अन्तर्बाह्ये हरिर्यस्य तस्य किं तपसा सुत । नान्तर्बाह्ये हरिर्यस्य तस्य किं तपसा तथा । तपसा हरिराराध्यो नान्यः कश्चन विद्यते । यत्र तत्र कृतं कृष्णसेवनं परमं तप' इति ब्रह्मवैवर्तब्रह्मखण्डीयैकादशाध्याये नारदं प्रति ब्रह्मवाक्यात् । 'वत्से चतुर्षु वेदेषु धर्मेषु संकलेषु[1] च । पुराणेष्वितिहासेषु पञ्चरात्रादिकेषु च । अन्येषु धर्मशास्त्रेषु वेदाङ्गेषु च सुव्रते । सर्वेष्टं सारभूतं च मंगलं कृष्णसेवन'मिति ब्रह्मवैवर्तप्रकृतिखण्डे सावित्रीं प्रति ब्रह्मवाक्याच्च कृष्णसेवनस्यैव परमतपस्त्वेन सर्वेष्टादिरूपत्वेन कथनात्तदेवावश्यकम् । तस्य च कायिकादिव्यापाररूपस्य 'भज इत्येष वै धातुः सेवायां परिकीर्तितः । तस्मात्सेवा बुधैः प्रोक्ता भक्तिः स्नेहेन[2] भूयसे'ति गारुडसमाप्तिदशास्थविष्णुभक्त्यध्यायवाक्याद्भक्तिरूपत्वेऽपि मुख्यताऽऽत्मसमर्पणमन्तरेण न भवति । एकादशीयैकोनविंशाध्याये 'पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि'ति प्रेमभक्तिपरमकारणकथनं प्रतिज्ञाय 'श्रद्धामृतकथायां मे'इत्यादिना श्रवणकीर्तनादीनुपदिशता भगवता समाप्तौ 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोऽन्योऽर्थो-

---

१ संहितासु चेति कपुस्तकम् । २ साधनभूयसीति खपुस्तकम् ।

ऽस्यावशिष्यत' इत्यात्मनिवेदनस्याधिकाररूपताबोधनात्तदभावेन कृतस्याऽपि श्रवणादेर्मुख्यत्वस्याऽशक्यवचनत्वात् ।

एवं च तस्य नवमत्वं यत्प्रह्लादवाक्ये उक्तं तदपि संख्यापूरणायैव न त्वन्तिमकक्षात्वाय । वन्दनदास्ययोः कक्षाव्यभिचाराच्च । न । न हि श्रवणादिपञ्चकोत्तरमेव वन्दनादिकं कार्यमिति नियमः क्वापि सिद्धोऽस्ति । न च सख्यादेरुभयकृतिसापेक्षत्वेन भगवत्यशक्यकरणत्वादविधेयत्वं शङ्क्यम् । सख्यस्य तद्विश्वासादिरूपतयाऽऽत्मनिवेदनस्य विक्रीतगवाश्वादिषु स्वत्वाऽभावानुसन्धानवद्देहादौ तथानुसन्धानरूपतायाः श्रीधरीये व्याख्यानेन तस्याऽशक्यकरणत्वाभावाद्विधेयत्वस्य सुखेन सम्भवादिति ।

किञ्च तथा गौतमीयतन्त्रे **'कृष्णेति द्व्यक्षरो मन्त्र'** इति पाद्मे । **'कृष्णेति वैष्णवं मंत्रं श्रुत्वा मुक्तो भवेन्नर'** इति । ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे **'गृहाण मम मन्त्रं च कृष्ण इत्यक्षरद्वयम् । सर्वेषामेव मन्त्राणां सारात्सारतरं परमि'**ति वाक्यात् । ब्रह्माण्डा[1]त्मरामायणे युद्धकाण्डे **'सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं ममे'**ति विभीषणमुद्दिश्य सुग्रीवं प्रति रामवाक्यम् । सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् । अभयं सर्वभूतेभ्यो दद्यादेतद्व्रतं हरेरिति गारुडे विष्णुभक्त्यध्यायवाक्ये चाऽभ[2]यसाधकत्वकथनान्मन्त्रस्यापि । **'नष्टो मोह'** इति वाक्ये 'अच्युते'ति सम्बोधनेन कृष्णनाम्न एव स्मरणा-

---

१ पङ्क्तिद्वयात्मको ग्रन्थः कपुस्तके नास्ति । २ अभयकत्वकथनादिति कपुस्तकम् ।

त्तत'स्तवास्मि स्थितो गतसन्देहो वचनं करिष्य' इति वचनव्यक्त्या गीतास्थत्वात्पौराणत्वेन भक्तिमार्गीयत्वादुपासनामार्गीयतागन्धस्याप्यभावात् ।

किञ्च[1] । बृहदारण्यके मधुविद्यायां यथा **'अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा तद्यथा रथनाभौ रथनेमौ चाराः समर्पिता एवमेवास्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवात्मानः समर्पिता'** इति सर्वेषां समर्पितत्वमुपदिष्टम् । अत्र प्रथमं भूतपदं जडपरम् । महाभूतेषु तथा प्रसिद्धत्वात् । श्रौते सर्वेषां जडानां पञ्चीकृतभूतोपादेयत्वात् । द्वितीयं देहविशिष्टजीवपरम् । **'न हिंस्यात्सर्वाभूतानी'**त्यादौ तथाप्रयोगात् । तथासत्यत्र जडाधिपतित्वं जीवराजत्वं च सिद्ध्यति । तत्र राजवाक्यं जीवेष्वनुग्रहबोधनाय । अन्यथाऽधिपतिवाक्यादेव चारितार्थ्यादेतद्वैयर्थ्यापत्तेः । तद्यथेत्यादिदृष्टान्ते च प्राणाद्यात्मान्तानामुभयोरवध्योः संयुक्तत्वेन तद्विष्टब्धत्वम् । तेनाऽयमुपदेश एतावदनुसन्धानार्थः । तेन प्राणाद्यात्मान्तेषु स्वीयत्वादिबुद्धिं त्यक्त्वा तदीयत्वतद्विष्टभ्यत्वबुद्धिः कर्तव्येति फलति । ईदृशबुद्धिकरणमेव चास्मच्छास्त्रे ब्रह्मसम्बन्धकरणमित्यात्मनिवेदनमिति च व्यवह्रियते । एतस्य च गुरुणा श्रौतत्वेनोपदेशे श्रौतत्वमागमोक्तत्वेनोपदेशे च तान्त्रिकत्वम् । 'एवं धर्मैर्मनुष्याणामि'त्यादिभगवदुक्तत्वेनोपदेशे भक्तिमार्गीयत्वमिति शास्त्रादिभेदात्फलभेद इति । एतेनैव 'कृष्ण तवास्मी'त्यस्य लौकिकत्वं

---

१ 'किञ्चेत्यारभ्य निरस्ता बोध्या इति अष्टादशपङ्क्त्यात्मको ग्रन्थः खपुस्तके नास्ति ।

वदन्तोऽतिभ्रान्ता अपि निरस्ता बोध्याः । इदमपि[1] बहिर्मुखानां पर्यनुयोगनिरासायोक्तम् ।

वस्तुतस्तु साक्षाद्भगवता श्रीगोवर्धनेश्वरेणैतौ मन्त्रावाचार्येभ्य उपदिष्टाविति सिद्धान्तरहस्यवाक्यात्सम्प्रदायाच्चावसीयते । अत एव च सर्वेषामेवाधिकार इति । यत्तु[2]त्सृष्ट्या[3]द्यभावात्कथं मन्त्रत्वमित्युक्तं तदप्यसङ्गतम् । छन्दऋष्यादिज्ञानस्य फलपौष्कल्यादिसाधकतया मन्त्रत्वज्ञानाय तदनुपयोगात् ।

केचित्तु शारदातिलकादौ लक्ष्मीमन्त्रादीनामृष्याद्यनुक्त्या व्यभिचाराद्यथास्थितानामेव तेषां जपात्सिद्धिरित्याहुः ।

यदपि 'कृष्ण तवास्मी'त्यत्र दासादिपदसापेक्षत्वमुक्तं तदपि मौर्ख्यम् । अत्राऽऽत्मन एव समर्थत्वेन तस्य चास्मीति क्रियाध्यवसिताऽहम्पदादेव प्राप्तेः शङ्काया एवानुदयात् । आत्मनिवेदनस्याश्रौतत्वं तु प्रागेव निरस्तम् । वाजसनेयिनां बृहदारण्यके **'इमे विदेहा अयमहमस्मी'**ति जनककृतस्य गुरौ याज्ञवल्क्ये आत्मसमर्पणस्य श्रवणाद्भगवति समर्पणस्याऽर्थादेव सिद्धेश्च ।

यत्तु देहः स्त्रीणां, धनं पुत्राणामतः परस्वत्वनिवेदनं कथं कार्यमिति लौकिकाः शङ्कन्ते, तत्कदर्यमेव । **'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युरि'**त्यादिवाक्यैः सर्वस्य भगवदीयत्वेन लौकिकस्वामिकताविचारस्यैव भ्रान्तिमूलकत्वात् । किञ्च । तथा मन्वानानां भटानां युद्धार्थगमना-

---

१ इदमित्यारभ्य उक्तमित्यन्ता पङ्क्तिः कपुस्तके नास्ति । २ यत्त्वित्यारभ्य यत्तु देहः स्त्रीणामित्यन्ता दशपङ्क्तयः खपुस्तके न सन्ति । ३ उत्सृष्टिर्विनियोगादयः ।

देर्दानादेश्चापि बाधापत्तिः, परस्वत्वादिति न कोऽपि शङ्कालेशः। [१]एतेन ब्रह्मसम्बन्धकरणस्वरूपमप्युक्तप्रायम् । तेन 'देहादेर्ब्रह्मसम्बन्धकरणं नाम किं मतम् । ब्रह्माध्यासोऽत्र देहादौ तदध्यासोऽथवा परे । संयोगो वाऽर्थान्तरं वे'त्यादिरूपा एतत्पथप्रद्वेषिणां शङ्का निरस्ता वेदितव्याः ।

यदपि 'समर्पिते गवाश्वादौ न ममेति यथा मतिः । [२]यथा देहार्पणे तेऽस्ति न वेत्येतद्विमृष्यताम् । नास्ति चेन्नार्पणं जातमस्तीत्युक्तिस्तु वै मृषा । लोकानुभवबाधेन किञ्च कर्तुं न शक्यते । स्वत्वाविनाशाद्देहस्य चार्पणे जातिनाशनादि'त्युक्तम् । तत्तु जनकोपाख्यानश्रुत्यैव दत्तोत्तरम् । आहार्यीया एव न ममेति बुद्धेस्तत्राभिप्रेतत्वात् । स्वस्मिन्नाहार्यब्रह्मदृष्टेरिवाहार्यीया न ममेति बुद्धेरपि फलजनकत्वे बाधकाभावाच्च । अग्रे यज्ञादिकरणाद्युक्तेर्जातिनाशनस्याप्यभावाच्चेति ।

नन्वत्र प्रणवः कुतो न पठित इति चेत्—गोपालादिमन्त्रेषु तमपश्यन्सर्वमन्त्रेषु प्रणवपाठनियमाभावमननुसन्दधानो भ्रान्तः शङ्कते, [३]तथापि वदामः । शूद्राद्युद्धारकत्वाय केवलभक्तिमार्गीयत्वेन स्नेहप्राधान्यबोधनाय चेति बुध्यस्व । न च भक्तेर्माहात्म्यज्ञानाङ्गत्वात्प्रणवस्य सृष्ट्यन्तःस्थितिबोधकस्य कथनेऽप्यदोष इति शङ्क्यम् । अत्रत्यमाहात्म्यस्य लोकवेदोदितविलक्षणत्वेन मूलनाम्नैतस्यापि सिद्धे-

---

१ एतेनेत्यारभ्य जातिनाशनस्याप्यभावाच्चेतीत्यन्ताः पङ्क्तयः खपुस्तके न सन्ति । २ तथेत्युचितं स्यात् । अस्ति तु द्वयोः पुस्तकयोर्यथेति । ३ पुस्तकद्वयम् । अशुद्धयश्च विलक्षणा भूयस्यः स्वोपज्ञशोधनं तु बहुतरं न रोचते मह्यम् । ततश्च स्वधिया शोधितेऽपि बहुतरस्थले कुहचनाऽवशेषिता एव ता एता इति विद्वांसः प्रमाणम् ।

रित्याकरेषूपपादितत्वात्[१] । भक्तिमार्गीयत्वादेव च जपेऽपि न भूतशुद्धिमुद्रान्यासाद्युपयोगः । मार्गस्य शास्त्रस्य च भेदात् ।

किञ्च । यथा '**य एवं विद्वान्महारात्र उषस्युदिते व्रजंस्तिष्ठन्नासीनः शयानोऽरण्ये ग्रामे वे**'ति श्रुत्या नित्यमध्ययनं स्वाध्यायस्य ब्रह्मयज्ञरूपस्य । तथा '**गच्छता तिष्ठता वापि स्वपता जाग्रता तथा । शयानेनोपविष्टेन जप्यो नारायणः सदे**'ति काशीखण्डैकविंशाध्यायवाक्याद्भगवन्नामापि सर्वदा सर्वत्र जप्तव्यमतोऽपि तथा । '**प्रायश्चित्तान्यशेषा**'णीति गरुडपुराणध्यानस्तुत्यध्यायस्य सूतवाक्यादजामिलोपाख्यानाच्च नाम्न एवाऽसहायशूरत्वावगमात् । एतेनैव '**जपसंख्या तथा होमद्रव्यं किमनयोर्मतमि**'ति प्रश्नोऽपि दत्तोत्तरः । '**प्रत्यगाशिषो मन्त्राञ्जपत्यकरणानि**'ति कल्पेन प्रत्यगाशीर्मन्त्राणां होमादिकरणतानिषेधात् । शरणमन्त्रे तथात्वस्य स्फुटत्वात् । समर्पणमन्त्रे च गम्यत्वादिति । न च नाम्नोऽसहायशूरत्वे सेवाद्यनुपयोगः । अधिकारिभेदेन सार्थक्यात् । अत एव 'काश्चिन्ममानुध्यानेन नामसंकीर्तनाच्च म' इति भगवतोक्तम् । तेन '**सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा । वैकुण्ठनामग्रहणमशेषाघहरं विदुरि**'त्यत्राप्यशेषपदे संकोचो ज्ञेय इत्यलम् ।

वस्तुतस्तु नायं जपः । किन्तु कीर्तनमेव । स्मरणं वा । अत एव प्रथमस्कन्धे '**अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम् । पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा । यच्छ्रोतव्यमथो जाप्यं यत्कर्तव्यं नृभिः प्रभो । स्मर्तव्यं भजनीयं वा ब्रूहि यद्वा विपर्ययमि**'ति राज्ञा पृष्टे श्रीशुकेन द्वितीयस्कन्धे

---

१ उपपादितमेवेति खपुस्तकम् ।

**'तस्माद्भारत सर्वात्मे'**त्यनेन, **'तं सत्यमानन्दनिधिं भजेते'**त्यनेन च श्रवणकीर्तनस्मरणभजनान्येवोक्तानि न तु जपः । एकादशे गीतासु च शरणगमनमेवोक्तम्[2] । तच्चानुसन्धानरूपमेवातोऽपि तथा । यस्तु मौनेनैकाग्रस्थित्यादिः, स तु युगस्य दुष्टत्वेन बाधकतया बहुकालैकाग्र्याऽभावात्किञ्चित्कालं तु निर्बन्धेनाप्यैकाग्र्यं विधेयमित्याशयेन साम्प्रदायिकैः समयः कृतः । तेन धर्मसाम्यदर्शनाल्लोके जपव्यपदेशः । परं न तावता तद्धर्माणामपि प्राप्तिः । स्वरूपभेदादित्युक्तम् । अत एव श्रीमदाचार्यैरपि नवरत्ने **'तस्मात्सर्वात्मना नित्य'**मनेन सर्वदा वदनमेव शरणमन्त्रस्योक्तम् । निवेदनस्मरणं च **'निवेदनं तु स्मर्तव्यमि'**त्यनेन । न तु क्वापि जपस्याप्याज्ञापनं कृतम् । अत एव **'स्मर्तव्यः सततं विष्णुरि'**त्यादीन्यपि वाक्यानि संगच्छन्ते अतो न शङ्कावकाश इति दिक् ।

ननु भवतु मन्त्रस्य भक्तिमार्गीयत्वं, तथाप्युपदेष्टॄणां शिष्यपरीक्षा त्वावश्यकीति चेत्—सत्यम् । परं शिष्ये किं वा परीक्षणीयम् । श्रद्धेति चेदोमिति ब्रूमः । परं तस्या मनोधर्मत्वेन तज्जैरेव बहिर्धर्मैस्तस्या उन्नेयत्वेऽपि तत्परीक्षायाः पुत्रोपनयनादिवदनावश्यकत्वात् । **'मन्त्रोपदेशमात्रेणे'**त्यादि ब्रह्मवैवर्तवचनेन तथानिश्चयात् । उपसन्नत्यापि श्रद्धाया अनुमातुं शक्यत्वाच्च । दम्भादिनोपसन्नतावपि गुरौ दोषासंचारस्योक्तवाक्येनैव सिद्धेः । किञ्च । **'दुर्लभे सद्गुरूणां तु स्यात्तत्सङ्ग उपस्थिते । तदनुज्ञा यदा लब्धा स दीक्षावसरो महान्[1] । ग्रामे वा यदि वाऽरण्ये क्षेत्रे वा यदि वा निशि । आगच्छति गुरुर्दैवान्मुदा दीक्षा तदाज्ञया । यदैवेच्छा तदा**

---

१ अयं श्लोकपादः खपुस्तके नास्ति । २ शरणमित्येव खपुस्तकम् ।

दीक्षा गुरोराज्ञानुरूपतः । न तिथिर्न तथा होमो न स्नानं न जपक्रिया । दीक्षायाः कारणं किन्तु स्वेच्छावाप्ते तु सद्गुरौ । इति शुद्धिस्तु सर्वस्य ज्ञात्वा दीक्षेत सद्विधिरि'ति तत्त्वसागरे । गुरुशिष्ययोरिच्छौत्कट्ये दीक्षायामपि धर्मान्तरपरीक्षाया अनावश्यकताव्यवस्थापनेनोपदेशे सुतरां तथात्वस्य तान्त्रिकाणामप्यभिमततया भक्तिमार्गस्य सुतरामपर्यनुयोज्यत्वात् ।

न च 'राज्ञि चामात्यजा दोषाः पत्नीदोषाश्च भर्तरि । तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितमि'ति वाक्याद्दोषसंचारः । एतस्य शिष्यपापोपेक्षया[1] तदत्यागपरत्वात् । अन्यथा 'मन्त्रोपदेशमात्रेणे'त्यादिपूर्वोक्तब्रह्मवैवर्तवाक्यविरोधप्रसङ्गात् । एवं च 'चैत्रे बहुविधं दुःखमि'त्यादीनि मासपक्षतिथ्यादिशोधनबोधकवाक्यानि गुरोः सादृश्ये गुरुणा तदनुमोदने बोध्यानि । 'तदनुज्ञा यदा लब्धे'त्यादिवाक्यात् । भक्तिमार्गीयत्वादेव च स्वस्याऽन्यस्यैकमन्त्रत्वेऽप्यदोषः । 'स्वमन्त्रो नोपदेष्टव्यो वक्तव्यश्च न संसदी'त्यस्य निषेधस्य पाञ्चरात्रिकत्वेन तत्परत्वात् । अत एव भगवता शिवायोपदिष्टं मन्त्रकवचादिकं शिवेन नारदायोपदिष्टमिति ब्रह्मवैवर्तोक्तं संगच्छते ।

नन्वेवं शास्त्रान्तराऽननुरोधेन तन्त्रोक्तस्य सम्प्रदायगुर्वनुरोधस्याप्यकर्तव्यत्वाद्यस्य कस्यचन यथाकथंचन यतःकुतश्चन मन्त्रग्रहणमायातीत्यसमंजसमिति चेत् । न । विरुद्धस्यैव शास्त्रान्तरस्याऽनादरणीयत्वेनेहापि सम्प्रदायस्य सद्गुरोश्च सर्वथैवाऽनुरोद्धव्यत्वात् । 'आसीनमुर्व्यां भगवन्तमाद्यमि'त्यादिषु पौराणिकोपदेशेषु 'दध्य-

---

१ पापापेक्षयेति कपुस्तकम् ।

ङ्गाथर्वणाभ्यामृचे'त्यादिषु श्रौतेष्वपि गुरुपरम्परायाः प्रदर्शनेन तथा निश्चयात् । 'धर्मार्थकाममोक्षाणामालयः साम्प्रदायिकः । सम्प्रदायविहीना ये मन्त्रास्ते निष्फला मता' इति गौतमीयतन्त्रैकोनविंशाध्यायवाक्यस्याप्यविरुद्धत्वेनाऽऽदरणीयत्वात् ।

एवं च गुर्वनुज्ञायां क्षत्रियादीनामप्यानुलोम्येनोपदेष्टृत्वमदुष्टमेव । 'क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहे क्षमः । क्षत्रियस्यापि च गुरोरभावादीदृशो यदि । वैश्यः स्यात्तेन कार्यश्च द्वयोर्नित्यमनुग्रहः । सजातीयेन शूद्रेण तादृशेन महामते । अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा । उपायो न भवेल्लोभान्मुक्त्वा सर्वद्विजोत्तममि'ति । 'क्षत्रविट्शूद्रजातीयप्रातिलोम्यं न दीक्षयेदि'ति नारदपञ्चरात्रीयविज्ञानोपनिषत्संहिताष्टादशपटलवाक्यस्याप्यविरुद्धत्वेन शिष्टादृतत्वात् । पञ्चाग्निविद्यादौ यच्छ्रुतिषु क्षत्रियैर्ब्राह्मणोपदेशनं तदपि नोपदेशरूपम् । 'व्येवतु ज्ञापयिष्यामी'ति विज्ञापनश्रुतेः । अतः सम्प्रदायस्याऽनुरोद्धव्यत्वान्नासमंजस इति दिक् । अत एव 'यदृच्छया श्रुतं वापि च्छन्नेनापि च्छलेन वा । पत्रे स्थितं वा गाथायां वर्जयेत्तदनर्थवदि'ति तांत्रिकमपि शिष्टैराद्रियत एव । यत्तु राज्ञीप्रभृतिषु पत्रद्वारोपदेशनं तत्तु तासामसूर्यंपश्यत्वेनार्त्या गुरोर्दयोत्पत्तौ तदभ्यनुज्ञायां प्रतिनिधिद्वारकत्वाददोषावहमेव ।

ननु भवत्वेवं तथापि दम्पत्योः सतीर्थ्यत्वं त्वनुचितमेव । सतीर्थ्ययोर्भ्रातृत्वस्य लोके प्रसिद्धत्वात् । अतः साम्प्रदायिकैः कथं तावुपदिश्येत इति चेत् । उच्यते । धर्माधर्मौ हि शास्त्रगम्यौ न

लोकान्निर्णेतुं शक्यौ। शास्त्रं तु न निषेधति। यदि निषेधश्चेद्दृश्येत प्रायश्चित्तं वा स्मर्येत। 'चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या। पतिघ्नी च विशेषेण जुंगितोपगता च ये'तिवत्सतीर्थ्यगमने स्त्रिया वा त्यागः स्मर्येत। भगिनीगमने गुरुतल्पातिदेशवत्। शिष्यस्त्रीगुरुपुत्र्योश्च गमने तदतिदेशवत्। सतीर्थ्यागमनेऽपि तदतिदिश्येत। अगम्यात्वं वा सतीर्थ्यायाः स्मर्येत। तद्गमनस्योपपातकता वा स्मर्येत। क्रोधाद्भार्यां मात्रादिसदृशीमगम्यामुक्त्वा पुनर्गमनेऽपि पराशरेण प्रायश्चित्तं स्मृतम्। तद्वत्प्रकीर्णेषु वा स्मर्येत। अतो निषेधाद्यभावान्नानुचितो दम्पत्योः सतीर्थ्यभावः। प्रत्युत पुराणेषु दृश्यते दम्पत्योः सतीर्थ्यत्वम्। तथा हि–ब्रह्मवैवर्ते ब्रह्मखण्ड एकोनविंशाध्याय उपबर्हणजीवनोत्तरं 'महापुरुषस्तोत्रं च पूजां च कवचं मनुम्। विस्मृतं बोधयामास स्वयं रहसि सुव्रत। पुरा दत्तं वसिष्ठेन स्तोत्रपूजादिकं हरेः। गन्धर्वाय च मालत्यै मन्त्रमेकं च पुष्कर' इति दम्पत्योर्वसिष्ठोपदिष्टत्वं कण्ठादुक्तं सूतेन। तदग्रे शौनकेन च पृष्टं 'किं स्तोत्रं कवचं विष्णोर्मन्त्रपूजाविधिः पुरा। ददौ वसिष्ठस्ताभ्यां च तद्भवान्वक्तुमर्हती'ति। अन्यत्र च 'आचारो धर्ममार्गश्च गुरुर्मन्त्रश्च देवता। दम्पत्यपत्यभृत्याद्यैरेकीकृत्य महत्फलमि'त्युक्तम्।

अतः सतीर्थ्ये दोषसम्भावनापि न। किञ्च। नारदपञ्चरात्रे विज्ञानोपनिषत्संहितायां षोडशे पटले 'विष्णुतत्त्वं परिज्ञाय एकं वाऽनेकभेदवत्। दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसन्नतानि'ति सामान्यतः सर्वेषां दीक्षणमुक्तम्। अतो दम्पत्योरेकेनोपदेशदानेपि न दोषः। एतेनैव 'स्त्रियाः केवलाया दीक्षा नोचिते'ति ये वदन्ति

तेऽपि निरस्ताः । **'मां हि पार्थ व्यपाश्रित्येत्या'**दिरूपे भगवत्तत्त्वज्ञानोपदेशे क्रियमाणे उपसन्नतिमात्रस्यैव प्रयोजकत्वादिति ।

किञ्च । यदि सतीर्थ्याया भगिनीत्वं स्यात्सुतायाः सुतरां स्यात्तथा सति शिष्याय न तामृषयो दद्युः । धर्मस्थापकत्वादृषीणाम् । दानं च स्मर्यते । भारत आश्वमेधिक उत्तङ्कोपाख्याने गौतमेनोत्तङ्काय स्वशिष्याय स्वपुत्री परिणायितेत्युक्तेः । **'इत्थं च परितुष्टं मां विजानीहि भृगूद्वह । युवा षोडशवर्षो हि यदद्य भविता भवान् । ददामि पुत्रीं कन्यां च स्वां ते दुहितरं द्विज । एतामृतेऽङ्गनां नान्यां त्वत्तेजोऽर्हति सेवितुम् । ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीमि'**ति । तदुत्तरमहल्यां प्रति **'आज्ञापयस्व मां मात'**रिति मातृत्वमुक्तम् । कार्तिकमाहात्म्ये च **'अपुत्रः स च शिष्याय चन्द्रनाम्ने ददौ सुतामि'**त्युक्तम् ।

या तु देवयान्या भगिनीत्वमङ्गीकृत्य कचेन तदुक्तिर्नादृता । सा त्वेकोदरनिवासिताप्रयुक्तत्वेन नात्र दोषमाधातुं शक्नोति । **'यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने । तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनी'**ति कचेन शुक्रोदरे निवासकथनात् । षाट्कौशिके (?) देहेऽस्थ्यादित्रयस्य पित्र्युपादेयत्वात् । अत एव व्यभिचार एव गुरुतल्पातिदेशो गुरुपुत्र्यामिति दिक् ।

किञ्च । 'अन्नदाता भयत्राता पत्नीतातस्तथैव च । विद्यादाता जन्मदाता पञ्चैते पितरो नृणामि'ति ब्रह्मवैवर्ते ब्रह्मखण्डीयदशमाध्याये सूतवाक्यादन्नदानादीनामपि पितृत्वेन श्वशुरपोष्यत्वे, दम्पत्योरेकपोष्यत्वे, एकेन भयात्राणे च, भ्रातृभगिनीभावापत्तिरिति विवाहो मुधैव स्यादिति न किञ्चिदेतत् । अतः पुत्रवत्याः पत्या

मातृत्वमिव सतीर्थ्ययोर्भ्रातृत्वमप्यनवज्ञेयत्वायैव, न तु व्यवहारान्तरविरोधा[1]येति दिक्।

ननु भवत्वेवं तथापि सद्गुरुप्राप्तेरिदानीं दुर्लभत्वात्पूर्वोक्तं सर्वं साधितमप्यसाधितप्राय[2]मेव। 'यः समः सर्वभूतेषु विरागी गतमत्सरः। जितेन्द्रियः शुचिर्दक्षः सर्वाङ्गावयवान्वितः। कर्मणा मनसा वाचा भीतेष्वभयदः सदा। समबुद्धिपदप्राप्तस्तत्रापि भगवन्मय' इति नारदपञ्चरात्रीयविज्ञानोपनिषत्संहिताषोडशपटलीयवाक्ये तस्य लक्षितत्वात्। अविरुद्धस्य शास्त्रान्तरस्याप्यादरणीयत्वादिति चेत्। सत्यमेवम्। तथापि मार्गमूलभूतानाचार्यानादाय न दौर्लभ्यमिति वदामः। अन्यथा कर्मोपासनादिमार्गेष्वप्यस्य दोषस्य तुल्यत्वान्मार्गाः सर्व एवोच्छिद्येरन्। युगस्य सार्वत्रिकत्वात्। अतो भगवदनुग्रहे तेषामेव नियामकत्वादिदानीन्तानानां द्वारत्वान्न कोऽपि दोषः। तेनेदानीन्तनेषु सम्प्रदायानुसारित्वमेव सद्गुरुत्वमिति द्वारभूतगुर्वतिक्रमेऽपि दोषो न स्यादिति न वाच्यम्। तस्याप्यनुल्लङ्घ्यताया आवश्यकत्वात्। अत एवाऽऽदित्यपुराणे 'अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः। स्वमार्गस्थोऽप्यमार्गस्थो गुरुरेव सदा गतिः। हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन। तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेदि'त्युक्तम्। वाराहे प्रागितिहासे, रुद्रगीतासु च 'यस्त्विमं सरहस्यं तु समन्त्रं चोपपादयेत्। विधानं तस्य वै दत्तं कोटिकोटिगुणोत्तरम्। गुरौ वसति यस्त्वन्यमाश्रयेत्पूजयेत्कुधीः। स दुर्गतिमवाप्नोति दत्तमस्य च निष्फलम्। प्रयत्नेन गुरौ पूर्वं पश्चादन्यत्र दापयेत्। अविद्यो

---

१ निरोधेति कपुस्तकम्  २ एवकारो नास्ति खपुस्तके।

वा सविद्यो वा गुरुरेव जनार्दनः । मार्गस्थो वाप्यमार्गस्थो गुरुरेव परा गतिः । प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते । स कल्पकोटि नरके पच्यते पुरुषाधम' इति । अन्यथा पूर्वोक्तलक्षणके गुरावमार्गस्थत्वाद्यभावादेवं न वदेत् । तस्मान्नैष दोषः । अत एव द्वारभूतानामपि गुरुत्वेनादरणमप्युचिततरम् । अत एव, 'अपि घ्नन्तः शपन्तो वा विरुद्धा अपि ये क्रुधा । गुरवः पूजनीयास्ते गृहं गत्वाऽऽनयेत तानि'ति ब्रह्मवैवर्त उक्तम् । सप्तमस्कन्धे च 'यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ । भक्तिर्न स्यात्कृतं तस्य मन्ये कुञ्जरशौचवत्' इत्युक्तम् । एकादशे च 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः' । नारदोक्तौ च 'गुरौ सन्निहिते यस्तु पूजयेदन्यमग्रतः । स दुर्गतिमवाप्नोति पूजनं तस्य निष्फलमि'ति । अगस्त्यसंहितायां च 'यैः शिष्यैः शश्वदाराध्या गुरवो ह्यवमानिताः । पुत्रमित्रकलत्रादिसम्पद्भ्यः प्रच्युता हि ते । ये गुर्वाज्ञां न कुर्वन्ति पापिष्ठाः पुरुषाधमाः । न तेषां क्लेशनिस्तारो वर्तते मुनिसत्तमे'त्युक्तम् । मनौ च 'अन्यो भवति वै बालः पितान्यो मंत्रदायक' इति । वामनकल्पे च 'यो मंत्रः स गुरुः साक्षाद्यो गुरुः स हरिः स्मृतः । गुरुर्यस्य भवेत्तुष्टस्तस्य तुष्टो हरिः स्वयमि'ति । विष्णुरहस्ये च 'तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत् । अभेदेनार्चयेद्यस्तु स भक्तिफलमाप्नुयादि'त्युक्तम् । पञ्चरात्रे च 'यत्र यत्र परीवादो मात्सर्याच्छ्रूयते गुरोः । तत्र तत्र न वस्तव्यं निर्यायात्संस्मरन्हरिम् । यैः कृता च गुरोर्निन्दा विभोः

---

१ सेवेतेति खपाठः ।

शास्त्रस्य नारद । नापि तैः सह वस्तव्यं वक्तव्यं वा कथंचन' ईदृशेषु च गुरुषु सर्वदानुवृत्तिरेव विधेया। 'इयदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् । यद्वै विशुद्धभावेन सर्वदात्मार्पणं गुरावि'ति तृतीयस्कन्धात् । 'इमे विदेहा' इत्यादिबृहदारण्यकीयाऽऽत्मसमर्पणश्रुतेश्च ।

द्वारत्वं च साम्प्रदायिकस्यैव ज्ञेयम्। 'यो वक्ति न्यायरहितं विना न्यायं शृणोति यः । तावुभौ नरकं घोरं व्रजतः कालमक्षयमि'ति । 'महाकुलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः । सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः' इति । 'अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत् । पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोरि'ति च पञ्चरात्रात् । अवैष्णवोपदिष्टं तु पूर्वमन्त्रवरद्वयम् । पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोरि'ति पाद्मोत्तरखण्डद्वात्रिंशाध्यायाच्च । एवं सति 'प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते । स कल्पकोटि नरके पच्यते पुरुषाधम' इति जातीयकाः पूर्वोक्तदोषा[1] अपि तन्त्रपुराणादिषूपलभ्यमानाः साम्प्रदायिकगुरुत्यागविषया एव बोध्याः । अत एव ब्रह्मवैवर्ते ब्रह्मखण्डीयचतुर्विंशाध्याये 'देहि मे कृष्णमन्त्रं च यन्मनोवाञ्छितं मम । तत्सम्बन्धि च यज्ज्ञानं यत्र तद्गुणवर्णनमि'ति नारदेन विज्ञापितो ब्रह्मा, 'पत्युर्मन्त्रं पितुर्मन्त्रं न गृह्णीयाद्विचक्षणः । विरक्ताश्रमिणां चैव न पुत्रसुखदायक' इत्यादिकं हेतुपूर्वकमुक्त्वा, 'महेश्वरस्तव गुरुः प्राक्तेवीतः(?)[2]पुरातनः । गच्छ वत्स शिवं शान्तं शिवदं ज्ञानिनां गुरुम् । तत्रैव भगवन्मंत्रं ज्ञानं लब्ध्वा पुरातनात् । नारायण-

---

१ पूर्वदोषा इति कपुस्तकम् । २ पूजनीय इति कदाचित्स्यात् ।

**कथां श्रुत्वा शीघ्रमागच्छ मद्गृहमि**'त्युक्त्वा ब्रह्मा शिवं प्रति नारदं प्रेषयामासेत्युक्तिरपि सङ्गच्छते ।

तस्माद्गुरुः सर्वथा नातिक्रमणीयः । स च साम्प्रदायिक एवैक एव कर्तव्य इति निश्चयः । एवं च '**गुरुवक्राद्विष्णुमन्त्रो यस्य कर्णे प्रविशति । तं वैष्णवं महापूतं जीवन्मुक्तं वदेद्विधिरि**'ति ब्रह्मवैवर्ताद्यखण्डैकादशाध्यायवाक्ये मन्त्रश्रवणमात्रेणाऽपि वैष्णवतायाः स्तुतत्वात्तादृशेनापि भाव्यम् । तेन चाद्यसोपानेनाग्रे सत्सङ्गादिना श्रीभागवतसेवनेन भक्तिमार्गीयसाधनेषु श्रद्धायां तत्करणे स्वतन्त्रभक्तिर्भवति । तया च भगवत्प्रियत्वमिति परमसाधनकक्षेति दिक् ।

केचित्तु वैष्णवपदं योगेन विष्णुसम्बन्धिपरं सत्सर्वस्य विष्णुसम्बन्धित्वेन सर्वं संगृह्णदपि स्मृतिपुराणादिषु शैवस्मार्तादिशब्दानामपि दर्शनात्तद्व्यावृत्त्यर्थं स्वार्थसिद्धये च शास्त्रे किञ्चिद्विशेषमपेक्षते । स च दीक्षाविशेषजनित एव भवितुमर्हति । नारदपञ्चरात्रपाद्मादिषु दीक्षायाः स्तुतत्वाददीक्षितस्य[3] निन्दितत्वाच्च[4] । दीक्षा द्विविधा । एका, आगमोक्ता गोपालादिमन्त्रदीक्षा । द्वितीया पाद्मोत्तरखण्डोक्ता श्रीवैष्णवी[5] दीक्षा । तयोर्मध्ये द्वितीयैव मुख्या । भगवदन्तरङ्गत्वसाधकत्वात् । '**विना श्रीवैष्णवीं दीक्षां प्रसादं सद्गुरोर्विना । विना श्रीवैष्णवं धर्मं कथं भागवतो भवेदि**'ति पाद्मोत्तरखण्डोक्तेः । तत्र च न्यासो नारायणाष्टाक्षरदीक्षा चेति द्वयं मुख्यम् । अन्यच्च तदङ्गम् । एवं सति तापपुण्ड्रनाममन्त्रयागाख्यपञ्चसंस्कारवत्त्वमेव मुख्यं वैष्णवत्वम् । तत्र तापो नाम तप्तमुद्रा-

---

१ तीव्रमिति खपुस्तकम् । २ प्रवेक्ष्यतीति छन्दोऽनुरोधे । ३ श्रुतत्वादिति खपाठः । ४ अदीक्षितनिन्दनाच्चेति कपुस्तकम् । ५ श्रीवैष्णवदीक्षेति कपाठः ।

धारणम् । पुण्ड्रं प्रसिद्धमेव । नाम कृष्णदासगोविन्ददासादि । मंत्राः पूर्वोक्ताः । यागः पूजा । एवं पञ्चसंस्कारा ज्ञेयाः । पूर्वोक्तपाद्मेन तत्रत्यसन्दर्भान्तरेण च तथैव सिद्धेः । अन्येषु त्वौपचारिकम् । **'सदीक्षाविधि सन्यासं समन्त्रं द्वादशाक्षरम् । अष्टाक्षरमथान्यं वा ये मंत्रं समुपासते । ज्ञेयास्ते वैष्णवा लोके विष्णवर्चनहिते रता'** इत्यादौ विष्णवर्चनाद्युपाधिना तदुक्तेः । एतदभावे भागवतत्वाभावकथनाच्च । औपचारिकाश्च वैष्णवा द्विधा । उपासकशुद्धभक्तभेदात् । तत्र मंत्रशास्त्रोक्तश्रीरामादिमन्त्रजपपुरश्चरणादिना तदधिष्ठातृभजनकर्तोपासकः । तदनपेक्षः शुद्धश्रवणादिना भजनकर्ता शुद्धभक्त इति । एभ्यः सर्वेभ्यः श्रीवैष्णवा एव मुख्या इत्याहुः ।

तन्न । शुद्धभक्तस्यैव मुख्यत्वात् । **'यो मद्भक्तः स मे प्रिय'** इत्यादि **'अहं भक्तपराधीन'** इत्यादिभगवद्वाक्यात् । **'त्वं तु सर्वं परित्यज्ये'**ति, **'केवलेन हि भावेने'**त्यादिभगवद्वाक्येषु भावमात्रेणाऽकुतोभयप्राप्तिस्वप्राप्त्योः कथनाच्च । **'कथं भागवतो भवेदि'**ति तु साधनदशायां भगवत्सम्बन्धमात्रबोधकं नाऽन्तरङ्गताबोधकम् । तथैव तद्वचनव्यक्तेः । एकादशे सप्तविंशे **'क्रियायोगं समाचक्ष्व भवदाराधनं प्रभोरि'**त्युपक्रम्य, **'एतद्वदन्ति मुनय'** इत्यादिना **'देव्यै च भगवान्भव'** इत्यन्तेन नारदपञ्चरात्राद्युक्तस्य पाद्मादौ देव्यै शिवेनोक्तस्य च क्रियायोगत्वकथनेन भक्तिमार्गतो जघन्यताबोधनाच्च । एतदुत्तरग्रन्थे भगवता पूजात्वकथनादपि तथा । [1]भक्त्यतिरिक्तस्य भगवदन्तरङ्गतासाधकत्वाऽभावात् । **'न तथा मे प्रियतम आत्मयोनिर्न शङ्करः । न च संकर्षणो न श्रीर्नैवात्मा**

१ शुद्धभक्त्यतिरिक्तस्येति कपाठः ।

च यथा भवानि'त्युद्धवं प्रति भगवद्वाक्येन तथावगमात् । भक्तेश्च परमसाधनत्वमेकादश ऊनविंशाध्याये 'पुनश्च कथयिष्यामि मद्भक्तेः कारणं परमि'ति प्रतिज्ञाय, 'श्रद्धामृतकथायां म' इत्यादिना, 'एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् । मयि संजायते भक्तिः कोऽन्योर्थोऽस्यावशिष्यत' इत्यनेन भगवतोक्तम् । तेन तदेव मुख्यमिति निश्चयः ।

इदमेव भक्तिहंसे 'प्रेमात्मकभक्तिसाधनत्वे'त्यादिना प्रभुचरणैर्निरूपितम् । न चात्रोपदेशाऽकथनात्तस्याकारणत्वं शङ्क्यम् । इतः पूर्वं 'भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघे'त्यनेनानूदिते सुगोप्ये 'न रोधयति मां योग' इत्यादि 'यास्यसे ह्यकुतोभयमि'त्यन्ते ग्रन्थे सर्वात्मकभावपूर्वकस्य शरणस्य पूर्वमुपदिष्टत्वेन तस्य सङ्गृहीतत्वात् । आत्मनिवेदिनामित्यनेन तत्पूर्वकताया अपि सूचनाच्च । न चैकादशाध्याये 'वैदिकी तान्त्रिकी दीक्षे'ति कथनात्तस्या अपि कारणत्वमेतद्वच्छङ्क्यम् । मुख्यकारणकोटौ तदप्रवेशात् । 'अथैतत्परमं गुह्यमि'त्यनेन ततः पूर्वोक्तस्य व्यवच्छेदात् । आत्मनिवेदनवत्पुनरत्राऽसंग्रहाच्च । एतेनैवान्येऽपि भक्तिपन्थानो व्याख्याता ज्ञेयाः । शङ्कापङ्कान्तरपरिहारश्च साक्षाद्भगवदुक्तिसलिलधाराभिरेव विभाव्य साधनीय इत्यलं विस्तरेण ।

इति श्रीवल्लभाचार्यदासदासेन निर्मितः ।
उपदेशादिविषयो वादोऽयं प्राप पूर्णताम् ॥ १ ॥

इति श्रीमद्वल्लभनन्दनचरणदासदासेन पीताम्बरतनुजश्रीपुरुषोत्तमेन कृतो भक्तिमार्गीयोपदेशादिविषयशङ्कानिरासः सम्पूर्णतामगमत् ॥

हरिॐशम् ।

# वेचनेकी पुस्तकें.

## संस्कृत.

| | | रु. आ. पै. |
|---|---|---|
| १ | श्रीसुबोधिनी ... | २- ०-० |
| २ | भक्तिहंस ... | ०-१४-० |
| ३ | श्रीयमुनाष्टक (श्री हरिरायजीकृत व्याख्यान) | ०- ३-० |
| ४ | श्रीयमुनाष्टक (श्रीपुरुषोत्तमजीकृत व्याख्यान) | ०- २-६ |
| ५ | बालबोध ,, | ०- ३-० |
| ६ | ,, (श्रीदेवकीनन्दनकृत व्याख्यान) | ०- २-६ |
| ७ | सेवाकौमुदी ... | ०- २-० |
| ८ | बालकृष्ण चम्पू | ४- ०-० |
| ९ | निर्णयार्णव ... | ०- ४-० |
| १० | सिद्धांतसिद्धापगा | ०- ६-० |
| ११ | दर्शनादर्श ... | ०- २-० |
| १२ | व्याख्यान रत्नावली | ०- १-० |
| १३ | स्तुति पारिजात | ०- १-० |
| १४ | सिद्धांत मुक्तावली | ०- २-० |
| १५ | पुष्टिप्रवाह मर्यादा | ०- ५-० |
| १६ | वेदान्त चिन्तामणि | १- ०-० |

## भाषाकी पुस्तकें.

| | | रु. आ. पै. |
|---|---|---|
| १ | शुद्धाद्वैतदर्शन (हिन्दी) | ०- -० |
| २ | ,, भाग २. | ०- ८-० |
| ३ | ,, (मराठी) | ०- ८-० |
| ४ | वल्लभाख्यान (गुजराती) | ३- ०-० |
| ५ | शुद्धाद्वैत सिद्धांतसार ( हिन्दी ) | ०- ३-० |
| | ( गुर्जर ) | ०- ३-० |
| ६ | षोडश ग्रंथ ( व्रज भाषांतर सहित ) | ०- ६-० |
| ७ | गीतातात्पर्य (हिन्दी) | ०- २-० |
| ८ | ,, ( गुजराती ) | ०- २-० |
| ९ | न्यासादेश वगेरे. | |
| १० | सेवाकौमुदी (हिंदी) | ०- ४-० |
| ११ | ,, (गुजराती.) | ०- ४-० |

मिलनेका ठिकाना,

**श्रीबालकृष्ण शुद्धाद्वैत संस्कृत पुस्तकालय,**

बडा मंदिर ( गौशाळा ऊपर ) मुंबई—२.